

जगद्गुरुश्रीमच्छङ्करभगवत्पादाः

॥ श्रीः ॥

# विवेकचूडामणिः

श्रीशंकरभगवत्पादप्रणीतः

शृंगगिरिजगद्गुरुश्रीचंद्रशेखरभारतीस्वामिभिः
अनुगृहीतया व्याख्यया सनाथः

शृंगगिरिजगद्गुरुसंस्थानद्वारा प्रकाशितः
हेमलंबवत्सरः शा. श. १८७९

बेंगळूरु प्रेस्
१९५७

॥ ओम् ॥

# प्रास्ताविकम्

लोकानविद्यान्धतमसात् उद्धर्तुमेव कृतावतारो भगवान् वासुदेवः प्रपन्नायार्जुनाय "अध्यात्मविद्या विद्यानाम्" इत्यध्यात्म विद्यामेव सकलविद्यावरिष्ठां प्रत्यपादयत्। साचाध्यात्मविद्या वेदशिरोभिरुपनिषद्भिः प्रतिपत्तव्या। तत्र संदिहानानां पुरुषाणा सन्देहाः वैयासिकशारीरकमीमांसानिर्धारितन्यायैरेव परिहर्तव्याः। उपनिषदां सारसंग्रहभूता भगवद्गीता। उपनिषदः ब्रह्मसूत्राणि, भगवद्गीता, इत्येतत्त्रयं भगवान् शंकरः परमहंस-परिव्राजकरूपधृक् प्रसन्नगंभीरैः पदनिगुंभैः व्याख्याय औपनिषदमात्मतत्वं स्फुटं प्राचीकशत्। उपनिषदाद्यर्थपरिशीलनेन समेषामेव आत्मतत्वावगमनं दुश्शकमिति मन्वानः श्रीशंकराचार्यः सुलभावगाहान् बहून् विवेकचूडामण्यादीन् प्रबन्धान् प्राणैषीत्। विवेकचूडामणिनामायं प्रबन्धः तेषु चूडामणिरिव प्रकाशमानः सर्वत्र प्रचुरप्रचुरः समुपलभ्यते। दुरूहमप्यात्मतत्वं करतलामलकवत् तत्र स्फुटीभवति। उपनिषद्भाष्यादिषु दुर्लभप्रवेशानामपि अत्र प्रवेशः सुलभः।

एतादृशस्य ग्रन्थरत्नस्य यदि काचित् प्रामाणिकी व्याख्यापि स्यात् तर्हि हेम्नः परमामोद इति परिकलय्य अस्मदाचार्यपादाः स्फुटप्रतिपत्तये गभीरावगाहाय च व्याख्यां कांचन व्यरचयन्। व्याख्यायाः उत्तमत्वविषये नास्माभिः किंचिदपि वक्तव्यमस्ति। श्रीचन्द्रशेखरभारतीतिप्रथितप्रातस्मरणीयनामधेयाः अस्मदाचार्यपादाः कृततपश्चर्याः सर्वतन्त्रस्वतन्त्राः शास्त्रोपदिष्टार्थानुष्ठाननिष्ठागरिष्ठाः अपरोक्षीकृतात्मतत्वाः जीवन्मुक्ता

अभूवन्नित्येतदेव व्याख्यायाः उत्कर्षबोधनायालम् । व्याख्यायाः अपरिपूर्तिः किंचिदिव मनस्तोदमावहति । व्याख्यापूरणाय आचार्यपादान् कदाचिद्वयं प्रार्थयाम । "वक्तव्या अत्रैव संगृहीताः निदिध्यासनमन्तरा नाधुनान्यत्र चित्तं व्यापृणोति" इति आशयमाविरकुर्वन् । तेनेयमपरिपूर्तिः न न्यूनतामावहतीति अस्माकं मतिः ।

एतद्ग्रन्थमुद्रणविषये विशेषतः दर्शितश्रद्धान् विहितसेवांश्च श्री. एस्. वेंकटेश्वरार्यान् (चीफ् कास्ट् अकौन्ट्स्-आफीसर्, भारताधिशासनम्) तथा मुद्रणसंशोधनादिषु बद्धादरान् पण्डितराजश्रीरामचन्द्रशास्त्रिणश्च भगवानुमाजानिः श्रेयांसि वितीर्य परिपालयतु ।

ग्रन्थमिमं सम्यगधीत्य आत्मतत्वमधिगत्य सर्वेपि लोकाः कृतकृत्या ~~भवेयुः~~ इत्याशास्महे ।
भूयासुः

**अभिनवविद्यातीर्थः**

शृंगगिरिजगद्गुरु श्रीचन्द्रशेखरभारती-
स्वामिनां करकमलसञ्जातः ।

श्रीः ॐ श्रीः

।। श्रीसच्चिदानन्द-शिवाभिनव-नृसिंह-भारती-स्वामि-चरणारविन्दाभ्यां नमः ।।

# श्रीविवेकचूडामणिः सव्याख्यः

सर्व-वेदान्त-सिद्धान्त-गोचरं तमगोचरम् ।
गोविन्दं परमानन्दं सद्गुरुं प्रणतोस्म्यहम् ।।१।।

जन्तूनां नरजन्म दुर्लभ-मतः पुंस्त्वं ततो विप्रता,
तस्माद्वैदिक-धर्ममार्ग-परता विद्वत्व-मस्मात्परम् ।
आत्मानात्म-विवेचनं स्वनुभवो ब्रह्मात्मना संस्थिति,
र्मुक्तिर्नो शतकोटि-जन्मसु कृतैः पुण्यैर्विना लभ्यते ।।२।।

संसार-सागरनिमग्न-जनोद्दिधीर्षुः
योवातरच्छिव-नृसिंह-गुरुच्छलेन ।
जाड्यान्धकारहरणं करुणासमुद्रं
तं दक्षिणास्यमनिशं हृदिभावयामि ।।

ज्ञानस्वरूपे वाग्देवि भगवत्पादपूजिते ।
चूडामणिं विवेकादिं व्याकुरुष्व मुखान्मम ।।

प्रसन्नानां गभीराणां वचसां देशिकेशितुः ।
भावस्त्वत्कृपया चित्ते भासतां मम शारदे ।।

रत्नगर्भ-गणेशान विघ्नध्वान्त-विभाकर ।
निर्विघ्नं पूरयस्वेमां व्याख्यां कारुण्य-शेवधे ।।

चन्द्रमौळीश्वर विभो ब्रह्मविद्या-समाश्रित ।
स्वानुभूतिं प्रयच्छाशु चिन्मुद्रा-विलसत्कर ।।

भगवद्गीतासु 'अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे । गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः' इतिश्लोकवत् विवेक-चूडामणि-प्रकरणप्रतिपाद्य-कृत्स्नार्थ-संग्राहकोयं श्लोकः जन्तूनामित्यादिः ।। अस्ति

कस्यैव शास्त्रेधिकारात् प्रथमं नरजन्मप्राशस्त्य-कथनमुखेन शरीरव्यतिरिक्ता-त्मास्तित्वं तावद्ध्वनयति जन्तूनां नरजन्म दुर्लभमिति। उक्तं च शारीरकभाष्ये 'शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वा आत्मनः परलोक-सम्बन्ध-मधिक्रियते' इति। जन्तूनां जननशीलानां प्राणिनां नरजन्म मानुष्यकं दुर्लभमिति। तत्र एकेनैव बहुषु जन्मसु प्राप्तव्येषु किल नरजन्म दुर्लभमिति वक्तुंशक्यं, शरीर-सम्बन्धस्यैव जन्मशब्दार्थत्वात्। यदा चैकस्य अनेकशरीरयोगः तदा शरीर-व्यतिरिक्तत्वं आत्मनः सूचितमेव। प्रसिद्धं खल्वनेकैः कुसुमैः युज्यमानं सूत्रं तेभ्योऽतिरिच्यत इति, अनेकानि वासांसि क्रमेण युगपद्वा परिदधच्छरीरं तेभ्यो भिद्यत इति च। तथाच सुखहेतुशरीरप्राप्तये दुःखहेतु-शरीरनिवृत्तये च पुण्येप्रवृत्तिःपापान्निवृत्तिश्च युज्यत इति, विधिनिषेधात्मक-कर्मशास्त्रे आस्तिकस्यैवाधिकारः। एवं ज्ञानेन सकल-कर्म-निर्हरणार्थं मोक्षशास्त्रेपि। यदि शरीरमेवात्मा स्यात् तस्य प्रत्यक्षसिद्धत्वात् "आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादि-दर्शन-साधन-विधानं कथमुपपद्येत। "शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं तनुम्। उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः" इति चैकस्यैव शुभाशुभ-मिश्रकर्मभिः विजातीयशरीरलंभं दर्शयति। कथमन्यथा लोकप्रसिद्धं सुखदुःखादिवैचित्र्यमुपपद्यते। यदि कर्मनिरपेक्षः ईश्वर एव कांश्चित् प्राणिनः सुखिनः कांश्चिदन्यादृशांश्च सृजेत् वैषम्य-नैर्घृण्ये भजेत। तथाचेश्वरत्वं हीयेत। तदुक्तं "वैषम्य-नैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति" "न कर्माविभागादिति चेन्नानादित्वात्" "उपपद्यते चाप्युपलभ्यते च" इतिसूत्रैः ईश्वरस्य कर्मसापेक्षत्वं संसारस्यानादित्वं च। धर्मभूतः संसार एव अनादिश्चेत् तदाश्रयस्य संसारिणो अनादित्वं कैमुतिकन्यायसिद्धम्। तत् सिद्धमात्मनः शरीरव्यतिरिक्तत्वम्। शरीरातिरिक्ता-त्मास्तित्ववाद्येवास्तिक इति। शास्त्रव्यवहारनिदान-मास्तिक्यं इति जन्तूनां नरजन्म दुर्लभमित्यनेन सूचितं। ततः पुंस्त्वं, स्त्रिया वेदेधिकाराभावात्। उपनिषदेक-समधि-गम्यआत्मा नैव ज्ञातुं शक्यत इत्यभिप्रायः। तत्रापि त्रैवर्णिकानां वेदाधिकार-सत्वेपि क्षत्रियवैश्ययोः राज्यपरपालन-कृष्यादिरूपाणां चित्तविक्षेप-हेतुभूतानां बाह्यव्यापाराणां सत्वादैदंपर्येण आत्मविचारः दुर्घट इति "मुखजानामयंधर्मः वैष्णवं लिंगधारणं। बाहुजातोरु-

जातानां नायं धर्मो विधीयते ।" इति स्मृत्यनुसारेण ऐदंपर्येण ब्रह्म-विचार-साधन-संन्यासस्य अनवकाशात् एकस्मिन्नेव जन्मनि ब्रह्माधिगमः तयोर्दुर्लभ इति द्योतनार्थं द्विजत्वं ततः इत्यनुक्त्वा ततो विप्रतेत्युक्तम् । "ब्राह्मणस्य तु देहोयं नोपभोगाय कल्पते । इह क्लेशाय महते प्रेत्यानन्त सुखाय च"।। इति वसिष्ठस्मृत्या वेदविहित-प्रवृत्तिनिवृत्ति-धर्मानुष्ठानेन एकस्मिन्नेव जन्मनि ब्रह्माधिगंतुं शक्यं ब्राह्मणेनेति भावः । अत एव तस्मा-द्वैदिकधर्ममार्गपरतेत्युक्तम् । न केवलं विप्रतया लब्धव्यं लभ्यते, अपितु तां लब्ध्वा तदुचितधर्मानुष्ठानेनेति भावः । "धर्मो विश्वस्य जगतः प्रतिष्ठा" "धर्मेण पापमपनुदति" इति श्रुत्या धर्मस्यैव सुखसाधत्वं दुःखहेतुपापनिवर्तकत्वं, तन्निवृत्या दुःखाभावहेतुत्वं चेति, सुखं मे भूयात् दुःखं मे माभूत् इति सकलजन-कामनाविषय-सुखदुःखभावरूप-पुरुषार्थ-साधनत्वं तस्यैवेति द्योतयितुं "धरतीति धर्मः ध्रियतेऽनेनेति वा धर्मः" इति व्युत्पत्याजगत्प्रतिष्ठाहेतुत्वं तस्य श्रुतिबोधितं सूचयितुं वैदिककर्म-मार्गपरतेत्यनुक्त्वा धर्ममार्गेत्युक्तं वैदिककर्मणः धर्मत्वेपि कर्मशब्देन विवक्षितार्थालाभात् । यदि धर्मव्यतिरिक्तं किंचित्सुखसाधनं दुःख-निवृत्तिसाधनं च स्यात् तत्साधनसंपादनेन सर्वो लोकः सर्वदापि सुखी, निवृत्तदुःखश्च स्यादेव । धर्मस्य तु अतींद्रियत्वेन शास्त्रैकसमधिगम्यत्वात् जनानां तज्ज्ञानस्य शास्त्रमन्तराऽसंभवात् साधनालाभात् फलालाभ इति प्रतिपादयितुं शक्यते । तदुक्तं वैदिकेति। धर्मस्य लक्षणं "चोदना-लक्षणोर्थो धर्मः" इति जैमिनिमहर्षिभिः सूत्रितं यत् वेदप्रमाणकत्वं तद्वैदिकेति विशेषणेनावगमितम् । नहि वेदं विना प्रमाणांतरं धर्मविषये पदमाधातुमीष्टे तस्यातीन्द्रियत्वेन प्रत्यक्षस्य तत्राप्रसरात् । अत एव नानुमानं तत्र प्रसरति, प्रत्यक्षमूलकत्वादनुमानप्रवृत्तेः । अत एव वेद व्यतिरिक्तशब्दोपि न तं बोधयितुं पारयति प्रत्यक्षादिनावधारितस्यैवार्थस्य लौकिकशब्देन बोधयितुं शक्यत्वात् । स्मृतीनामपि पौरुषेयत्वेन पुरुषाणां भ्रमप्रमादादिसंभवेन कर्तृदोषनिबन्धनाप्रामाण्यशंकायां अपौरुषेयतया दोषगंधानागंधितश्रुतिमूलकतयैव प्रामाण्यस्य वक्तव्यतया वेदव्यतिरिक्तस्य शब्दस्य धर्मे स्वतः अप्रमाणत्वात् । किंच स्मृतिकर्तारो वा अतीन्द्रियं धर्मं कथं व्यजानन् ? योगजसामर्थ्येनेति चेत् तत्सामर्थ्यं कथं तैः सम्पादितम् ? धर्मानुष्ठानेनेति चेत्, स धर्मः कथं

ज्ञातः? अत एव "यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै" इति प्रथमं सृज्यमानस्य हिरण्यगर्भस्यापि ईश्वरानुगृहीतवेदमूलकमेव धर्मज्ञानमिति बोधयति श्रुतिः। किं वक्तव्यमितरेषां! अतस्सुष्ठूक्तं वैदिकेति। "अब्भक्षा वायुभक्षा" इतिवत् वेदैकमेयत्वं धर्मस्य बोधयति। अत्र धर्मशब्देन प्रवृत्तिधर्मः निवृत्तिधर्मश्च कथ्येते। उक्तं हि गीताभाष्ये "द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च" इति ॥

धर्म एव परमं साधनं नित्यसुखावाप्तौ नान्यदपेक्ष्यमस्तीति कर्ममीमांसकाः, तान् कटाक्षयति मार्गेति। तेन परमपुरुषार्थ-साधनीभूत-ब्रह्मसाक्षात्कार-साधनवेदान्त-विचारहेतुत्वेन संन्यासरूपनिवृत्तिधर्मस्य तत्साधनवैराग्य-हेतुभूत-चित्तशुद्धिहेतुत्वेन निष्कामकर्मानुष्ठान-रूप-प्रवृत्तिधर्मस्य च अपेक्षितत्वं, न तु साक्षान्निरतिशय-सुखसाधनत्वं तदुभयस्येति सूचितम्। तदुक्तं भगवता बादरायणेन "द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः। प्रवृत्तिलक्षणो धर्मः निवृत्तिश्च प्रकीर्तितः" इति। तथाच ब्राह्मणेन उपनयनानन्तरं "वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां, तेनेशस्य विधीयतामपचितिःकाम्ये मतिस्त्यज्यतां। पापौघः परिधूयतां भवसुखे दोषोनुसंधीयतां, आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ संगः सत्सु विधीयतां भगवतो भक्तिर्दृढाधीयतां, शान्त्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यताम्" ॥ इति सोपानपंचकोपदिष्ट-रीत्या ईश्वरार्पणबुध्या कर्म कुर्वाणेन चित्तं शोधयित्वा विषयेभ्यो विरज्य कर्मभ्य-स्समुपरमितव्यं इत्येतद्बोधितम्। तदुक्तं मोक्षधर्मेषु "नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च। शीलं स्थितिर्दण्डनिधानमार्जवं ततश्चोपरतिः क्रियाभ्यः" इति ॥ विद्वत्वमस्मात्परं। तत्र प्रवृत्तिधर्मविषये एवं योजना। "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति छान्दोग्यश्रुत्या क्रियमाणं कर्म, तदंगभूत-मन्त्रार्थज्ञानपुरस्सरं क्रियते चेत् भूयसे फलायेति बोधितं भवति। तदुक्तं तत्रैव भाष्ये "दृष्टं हि लोके वणिक्छबरयोः पद्मरागमणिविक्रये वणिजो विज्ञानाधिक्यात्फलाधिक्यम्इति"। निवृत्तिधर्मविषये "संन्यस्य श्रवणं कुर्यात्" इति विधानात् संन्यासोत्तरकालिक-वेदान्तवाक्य-श्रवणजन्य-परोक्षज्ञानवत्वं

विद्वत्त्वम् । अस्मात्परं आत्मानात्मविवेचनं । इदं ग्रंथ एवोत्तरत्र स्पष्टयिष्यते । तेन मननं युक्तिभिः श्रुतार्थदृढीकरणार्थ-मनुचिन्तनरूपं संशयभावनानिरासकमुक्तं भवति । ततः स्वनुभवः, निदिध्यासनपूर्वक-ब्रह्मसाक्षात्कारःकथितो भवति । अत एव स्वनुभव इत्युक्तं, विपरीत-भावना-निवर्तकनिदिध्यासनाभावे श्रवणमननाभ्यां जायमानानुभवः सौष्ठवं नाश्नुत इति । एतेन शुभेच्छा विचारणा तनुमानसा सत्वापत्तिश्चेति ज्ञानभूमिकाचतुष्टयं कथितमासीत् । असंसक्तिः पदार्थाभावना तुर्यगाच, "ब्रह्मात्मना संस्थितिः मुक्तिः" इत्यत्र संस्थितिशब्देन वासनाक्षयमनोनाश-सहकृतस्वनुभवबोधकेन व्यंजिताः । तेन सालोक्य सामीप्य-सारूप्य-सायुज्यानां मुख्यमुक्तित्वाभावश्च सूचितो भवति । सगुणविषयकतया तेषां चतुर्णामपि मिथ्यात्वात्, परिच्छेदत्रयशून्यत्व-रूपब्रह्मत्वस्य सगुणेऽसंभवात् । ब्रह्मात्मना संस्थितिः कल्पित-सकल-विधोपाधिसंबंध-विधुर-नित्यशुद्ध-बुद्धमुक्त-प्रत्यगभिन्न - परिपूर्णस्वरूपेणावस्थानं कैवल्यमेव मुक्तिः, शतकोटिजन्मसु कृतैः पुण्यैर्विना नो लभ्यते इत्यन्वयः ॥

दुर्लभं त्रयमेवैतत् दैवानुग्रहहेतुकम् ।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥३॥

लब्ध्वा कथंचित् नरजन्म दुर्लभं,
तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।
यस्स्वात्ममुक्त्यै न यतेत मूढधीः,
स आत्महा स्वं विनिहन्त्यसद्ग्रहात् ॥४॥

इतः कोन्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ।
दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥५॥

पठन्तु शास्त्राणि यजन्तु देवान् कुर्वन्तु कर्माणि भजन्तु देवताः ।
आत्मैक्यबोधेन विना विमुक्तिः न सिध्यति ब्रह्मशतान्तरेपि ॥६॥

अमृतत्वस्य नाशास्ति वित्तेनेत्येव हि श्रुतिः ।
ब्रवीति कर्मणो मुक्तेःअहेतुत्वं स्फुटं यतः ॥७॥

यतो बहुजन्मार्जित-सुकृतविशेष-प्राप्यं मानुषपौरुषादिकं, यतश्च स्वार्थे अप्रमत्तेन पुरुषेण भवितव्यं, यतश्च आत्यंतिकदुःख-निवृत्ति-निरतिशय-सुखरूपमोक्षः आत्मैक्यबोधेन विना कर्मकाण्डाध्ययन-तदनुष्ठानादिरूप-कर्मकलापेन साक्षान्नाविर्भवति, यतश्च श्रुतिरेव साक्षादिममर्थं "अमृतत्वस्य नाशास्ति वित्तेन" इति वित्तसाध्य-कर्मणः साक्षान्मोक्षोपयोगित्वं प्रत्यक्षेप्सीत् अतः विमुक्त्यै प्रयतेत विद्वानिति ॥

अतो विमुक्त्यै प्रयतेत विद्वान् संन्यस्तबाह्यार्थ-सुखस्पृहः सन् ।
सन्तं महान्तं समुपेत्य देशिकं तेनोपदिष्टार्थ-समाहितात्मा ॥८॥

विद्वानिति नित्यानित्य-विवेकी कथितः "ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः" ॥ इति गीतासु बुधशब्देनार्थ-स्यास्य सूचितत्वात् । वैषयिकसुखस्य अनित्यत्वं द्योतयति बाह्यार्थेति । अर्थानां बाह्यत्वेन आगन्तुकतया सार्वदिकत्वाभावात् तत्प्रयोज्यसुखाविर्भावस्यापि तादृशत्वं इति । अतो विवेकिना पुरुष धौरेयेण तत्र स्पृहा त्यक्तव्येति प्रयत्नप्रकारं प्रथममाह संन्यस्तबाह्यार्थ-सुखस्पृहस्सन्निति । बाह्याश्च ते अर्थाश्च बाह्यार्थाः, तैः सुखं बाह्यार्थसुखं,- तस्मिन् स्पृहा, बाह्यार्थसुखस्पृहा संन्यस्ता येन इति ऐहिकामुष्मिक-फलभोगविरागः कथितः । तेन श्रुतिस्मृत्युक्त-कर्मणां निष्कामानुष्ठानेन नितान्तनिर्मली-कृतस्वान्तत्वं उक्तप्रायम् । अविवेकिनः विषयलंपटस्य अस्तित्वमपि दुर्लभमिति सूचयति सन्निति "आचार्यवान्पुरुषो वेद" "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति श्रुतेः अतीन्द्रियस्य आत्मैक्यस्य गुरुं विनाऽधिगंतुमशक्यत्वात् पूर्वोक्तरीत्या महापुरुषसंश्रयः कर्तव्य इत्याह सन्तमित्यादिना । अस्ती सन् तमित्यर्थः,"अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुः" "सदेव सोम्येदमग्र आसीत्" "यो वै भूमा तदमृतम् अतोन्यदार्तम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "नासतो विद्यते भावः नाभावो विद्यते सतः । उभयोरपि दृष्टोन्तस्त्वनयो-स्तत्वदर्शिभिः" इत्यादि-श्रुतिस्मृतिभ्यः कालत्रयाबाध्यत्वरूपास्तित्वस्य ब्रह्मण्येव सत्वात् । देशिकस्य तथात्वं "ब्रह्मविद्ब्रह्मैव भवति" इति श्रुत्या तदभिन्नत्वात् । तेन असद्भ्योऽनात्मभ्यः सुतरां निवृत्ताभिमानत्वरूपा ब्रह्मनिष्ठा सूचिता भवति । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं

ब्रह्मनिष्ठं" "अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान्ह्यतर्क्यं-मणुप्रमाणात्" इत्यादिश्रुतिभ्यः तादृशादेव गुरोः संशयभावनादि-विरहित-शुद्धात्म-बोधस्य संभवात्। युक्तं ह्येतत्, लोकेप्यस्माभिरदृष्टो मार्गः दृष्टतन्मार्गैः किल बोधनीयः, स्वयमेव कथंचिल्लब्धोपि, संशयः दृष्टतत्त्वैः किल निरसनीयो भवति। तत्र शुकजनक-संवादः प्रमाणम्। जन्मांतरकृत-सुकृत-परिपाकवशात् स्वयं ज्ञातज्ञेयोपि पित्रानुशिष्टोपि महानुभविनो जनकस्य वैदेहस्य वचनात्किल ब्रह्मणि विश्रान्तमानसोऽभूच्छुक इति हि वासिष्ठादौ स्मर्यते। तथाच सद्रूपब्रह्माभिन्नत्वात् सद्रूपत्वं देशिकस्य। अत एव महत्वं विवेचितकोशपंचकत्वात् अपरिच्छिन्नत्वम्। यद्वा शास्त्रोक्त-समस्त-सद्गुणमण्डितत्वं, वक्ष्यते हि "श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्म-विदुत्तमः। अहेतुकदयासिंधुः बंधुरानमतां सताम्॥ ब्रह्मण्युपरतश्शान्तो निरिन्धन इवानलः" इत्यादिगुणजातम्। शिष्येभ्यो ज्ञानं दिशतीति देशिकः, तं समुपेत्य-यथाविधि उपसद्य तेन गुरुणा उपदिष्टो योर्थः ब्रह्मरूपः तत्प्राप्तिप्रकाररूपश्च, तत्रैव सम्यगाहितः आत्मा अन्तःकरणं येन तादृशस्सन् विमुक्त्यै प्रयतेत इत्यनेनमुक्तीच्छां विना तत्र प्रयत्नासंभवात् मुमुक्षुत्वं ध्वनितम्॥ उपदिष्टार्थसमाहितात्मेत्यनेन सततं ब्रह्मसमाहितमानसत्वस्य सर्वकर्मसंन्यासं विनाऽसंभवात् विवेकिना विरक्तेन स्वरूपतः सकल-कर्मसंन्यासपुरस्सरं ब्रह्मनिष्ठं गुरुमुपसद्य सर्वदा ब्रह्मविचारः कर्तव्य इत्युक्तं भवति॥

उद्धरेदात्मनात्मानं मग्नं संसारवारिधौ
योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया ॥९॥

संग्रहेणोक्तमर्थं सप्तभिः श्लोकैर्विवृणोति। तत्र मुक्त्यर्थं क्रिय-माणप्रयत्नस्य सम्यग्दर्शननिष्ठान्तत्वात्, मोक्षसाक्षात्साधनं सम्यग्दर्शन-निष्ठां तत्र मुख्यहेतुं परवैराग्यापरपर्यायं योगारूढत्वं चाह अनेन श्लोकेन॥ "यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते। सर्वसंकल्पसंन्यासीयोगा-रूढस्तदोच्यते" इति भगवद्वचनात् परवैराग्यपुरस्सर-सम्यग्दर्शन-निष्ठैव संसाराब्धिपतितात्मोद्धरणे हेतुरिति भावः कलशादिपचक-तरंगयुतं भ्रमाढ्यं दारात्मजा-प्तधन-बन्धुझषाभियुक्तम्। और्वानलाभ-निजरोष-मनंगजालं, संसारसागरमतीत्य हरिं व्रजामि"॥ संसारसागर-

विशाल-करालकाल-नक्रग्रहग्रसन-निग्रहविग्रहस्य। व्यग्रस्य रागनिचयोर्मिनि-पीडितस्य लक्ष्मीनृसिंह मम देहि करावलंबम् ।। इत्यादिरीत्या अविद्यातद्विलासरूपस्य संसारस्य सम्यग्ज्ञानं विना दुस्तरत्वात् वारिधित्वेन रूपणम् । नह्यनात्मानं देहमात्मत्वेन मन्वानस्य तस्मिन् जायमाने म्रियमाणे वा तद्गतधर्मः स्वस्मिन्नास्तीति विज्ञातुं शक्यं, क्षुत्पिपासायुते वा प्राणे, सुखिनि दुःखिनि वान्तःकरणे । एवमविद्यास्मितारागद्वेषाभिनिवेशानां संततत्वात् क्लेशादिपंचकस्य तरंगतया रूपणं, भ्रम एव भ्रमः अतस्मिंस्तद्बुद्धिरेव आवर्तः इत्यादि स्पष्टम् । अनाद्यविद्यावशात् "अज्ञः कर्ता मनुष्योहम्" इत्यादिरीत्या स्थूलसूक्ष्मकारण-शरीरेषु अनात्मसु अहमिति स्वरूपाप्राप्त्या स्थितिरेव संसारवारिधिमग्नत्वम् असंगसच्चिदान्दरूपस्यात्मनः । तत्रापि सुषुप्तौ संसाराननुभवात् अविवेकिमनोरूपोपाधिमूलकत्वमेव वक्तव्यं संसारस्य । श्रूयते हि "मन एव मनुष्याणां कारणं बंधमोक्षयोः । बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्" ।। इति, अतः विवेचनशून्यस्य मनसः शरीरादि संसक्तत्वं आत्मनः संसारवारिधिमग्नत्वम् । अतः श्रवणमननादि-शास्त्रीय-संस्कार-संस्कृतं मनो यदा भवति तदा भ्रमशून्यं आत्मयाथात्म्य-ज्ञानावाप्त्या भवतीति, अविवेकि मनः शास्त्रजन्यविवेकवता मनसा उद्धरेत् अनात्मभ्योऽपनयेत् । तथाच तस्मिन् पराङ्मुखत्वस्वाभाव्यात् बाह्येषु शरीरादिषु सक्ते वस्तुतोऽसंगस्यापि लोहितस्फटिकवत् संसक्तस्येव भासमानस्य आत्मनः उपाधेरनात्मसंबन्धाभावे प्रत्यङ्मुखतयाऽत्म-मात्रसंस्थत्वे च आत्मा उद्धृत इव भवतीति भावः । संसारवारिधौ मग्नमात्मानं योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया आत्मना उद्धरे- । योगारूढत्वं विशदयन्नेव श्रवणमनननिदिध्यासनानि संन्यासोत्तरकालिकानि सम्यग्दर्शननिष्ठावाप्तिसाधनानि संन्यस्येत्यादिना ।

संन्यस्य सर्वकर्माणि भवबन्धविमुक्तये ।
यत्यतां पण्डितैर्धीरैः आत्माभ्यास उपस्थितैः ।।१०।।

सर्वकर्माणि संन्यस्य कर्मकाण्डोक्तानि स्वरूपतोपि परित्यज्य, भवबन्धविमुक्तये सांसारिकबन्धनिवृत्तिहेतुभूतसम्यग्दर्शननिष्ठायै, पण्डितैः

आत्मविषयकपरोक्षज्ञानवद्भिः, धीरैः वशीकृतबुद्धिभिः "पराञ्चि खानि व्यतृणत् स्वयंभूः तस्मात् पराङ पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन्" इति श्रुतेः ।। धियं रातीति धीरः, प्रधानभूतां कार्यकरणसंघातमध्ये बुद्धिं वशयतीत्युक्ते इतरेन्द्रियजयः अर्थसिद्धः। एतेन शान्त्याद्युपेतत्वं सूचितं भवति। अत एव आत्माभ्यासे "तच्चिन्तनं तत्कथनं अन्योन्यं तत्प्रबोधनं। एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः" इत्यभियुक्तोक्तिरीत्या अनन्यव्यापारतया श्रुतार्थमनन-तत्कथन-परस्पर-प्रबोधनरूप-ज्ञानकाण्डोक्तव्यापारेषु उपस्थितैः वर्तमानैः, विजातीयप्रत्यातिरस्कृत-सजातीय-प्रत्यय-प्रवाहरूप - निदिध्यासनानुष्ठानेन यत्यताम् इत्यन्वयः। एतादृशस्य पुंसः सर्वसंकल्पसंन्यासेन परवैराग्या-परपर्यायं योगारूढत्वं सिद्धमेव मन्तव्यम् ।।१०।। ननु "यावज्जीवमग्निहोत्रं जुहुयात्" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" "अहरह-स्संध्या-मुपासीत" "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" दिश्रुतिभिः यावज्जीव कमणः कतव्यत्वन चोदितत्वात् सवकमसन्यास श्रुत्युल्लघन प्रस-ज्येतेति चेत्, तासां श्रुतीनां अशुद्धचित्तविषयत्वात्। अत एव "एवं त्वयि नान्यथेतोस्ति न कर्म लिप्यते नरे" इतीशावास्यमन्त्रेण नरे नरमात्राभि-मानिनि त्वयि इतः कर्मकरणात् अन्यथा अन्यो मार्गः कर्मलेपाभाव-प्रयोजकः नास्तीत्युक्तम्। "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः। संन्यासयोगाद्यतयश्शुद्धसत्वाः" ।। "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति" "किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादिना कर्मसंन्यासस्यापि विहितत्वात् निन्दितत्वाच्च कर्मणः ।। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" "योगिनः कर्म कुर्वन्ति संगंत्यक्त्वाऽऽत्मशुद्धये" इत्यादि-श्रुतिस्मृत्यर्थपर्यालोचनया विविदिषासाधनत्वं चित्तशुद्धिद्वारा तेषामव-सीयते, नतु सार्वदिकत्वं। तथासति "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादि-संन्यासविधायक-वाक्यव्याकोपापत्तेः, कर्मनिन्दानुपपत्तेश्च। "अत एवचाग्नीन्धनाद्यनपेक्षा" "सर्वापेक्षा च यज्ञादिश्रुते-रश्ववत्" इति च सूत्राभ्यां अयमेवार्थो भण्यते। परमपुरुषार्थ-भूतमोक्षार्थत्वं नास्ति कर्मणां, चित्तशुद्धिद्वारा ज्ञानबहिरंगत्वमिति, तदिदमाह चित्तस्येति।

चित्तस्य शुद्धये कर्म नतु वस्तूपलब्धये ।
वस्तुसिद्धिर्विचारेण न किंचित्कर्मकोटिभिः ॥११॥

स्पष्टोर्थः ।

विचारस्य वस्तूपलब्धिहेतुत्वं दृष्टान्तेन विशदयति सम्यगिति

सम्यग्विचारतः सिद्धा रज्जुतत्वावधारणा ।
भ्रान्त्योदित-महासर्प-भवदुःखविनाशिनी ॥१२॥

मन्दांधकारे पतितां रज्जुं सर्पं मन्वानः पुरुषः बिभ्यत् दीपानयनेन सम्यग्विचार्य वस्तुतत्वं बुध्वा भयकम्पादि-दुःखं जहातीति प्रसिद्धम् । तत्र रज्वां भ्रन्त्या उदितः यो महासर्पः, तद्भवं तत्प्रत्ययजन्यं यद्दुःखं, तद्विनाशिनी सम्यग्विचारजन्या रज्जुतत्वावधृतिः । तद्वत् भ्रान्त्या जातं यद्भवदुःखं जन्ममरणप्रयोज्यदुःखं, तद्विनाशिनी सम्यग्विचार-प्रयोज्या तत्वावधारणा आत्मयाथात्म्यावधृतिः ब्रह्मसाक्षात्कारः इति सर्वांशे प्रकृतोपयोग्ययं दृष्टान्तः ॥१२॥

आप्तोक्त्यनुसारेण क्रियमाणविचारस्यैव अर्थनिश्चयहेतुत्वम् नान्यस्य कर्मण इत्याह । अर्थस्येति ।

अर्थस्य निश्चयो दृष्टो विचारेण हितोक्तितः ।
न स्नानेन न दानेन प्राणायामशतेन वा ॥१३॥

अज्ञानदोषवशात् स्वयंभ्रान्तस्य पुरुषस्याप्तोक्तिरूपावलंबनाभावे भयकंपाद्यनर्थमनुभवतः स्वतो विचारे प्रवृत्तेर्दुर्लभत्वात् विचारे हितोक्ति-र्हेतूक्ता । हितत्वं च यथार्थवक्तृत्वं, यदि भ्रान्तः पुरुषः हितोक्त्यनुसारेण विचारमविधाय स्नानं वा दानं वा प्राणायामशतं वा कर्म कुर्यात् भ्रम-निवर्तकापरोक्षप्रमाया अभावे, अनर्थप्रयोजक-भ्रमानिवृत्तेः कथं निवृत्ता-नर्थो भवेदिति भावः । विचारश्च अर्थयाथात्म्य-निश्चयानुकूलो मानसो व्यापारः । तथा च हितोक्तिसहकृत-विचारस्यैव अर्थप्रमाहेतुत्वं भ्रमस्थले प्रत्यक्षसिद्धम् । तथासति प्रकृतेपि श्रुत्याचार्योपदेशानुसारेण आत्मविचारं कृत्वा तद्याथात्म्य-मपरोक्षीकृत्य अनात्माध्यासरूप-संसारादात्मानं मोचये-दित्युपदेशः ॥१३॥

अधिकारिणमाशास्ते फलसिद्धिर्विशेषतः ।
उपाया देशकालाद्याः सन्त्यस्यां सहकारिणः ।।१४।।

तत्तत्कर्मणि समर्थस्यैव तत्तत्कर्मफलभोक्तृत्व-सम्भवात् असमर्थस्य तदयोगात् वाह्यदेशकालादेः सहकारित्वमात्रं, आन्तरसामर्थ्यस्यैव फल-दायकत्वमित्याह। अधिकारिणमिति।

कर्मणां तावत् दृष्टार्थत्वात् "यदाहवनीये जुहोति" "अश्वस्य पदे जुहोति" प्राचीनप्रवण वश्वदेवेन यजेत" "सायं जुहोति" "प्रातर्जुहोति" "वसन्ते वसन्ते ज्योतिषा यजेत" "वसन्ते ब्राह्मणोग्नीनादधीत" इत्यादिशास्त्रानुसारेण देशकालयोरप्यसाधारण-कारणत्व-मंगीकर्तव्यम्। यद्यपि ज्ञानस्यापि "यथाऽदर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके। यथाप्सु परीव ददृशे तथा गंधर्वलोके छायातपयोरिव ब्रह्मलोके।" "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीत् महती विनष्टिः" इत्यादिश्रुत्यनुसारेण मनुष्यलोक-ब्रह्मलोकयोरेव ज्ञानभूमित्वं प्रतीयते, एवं "ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत्। अनापकृत्य मोक्षं तु सेवमानो व्रजत्यधः"।। "ब्रह्मचर्य समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजेत्" इत्यादिप्रमाणानुसारेण ब्रह्मज्ञानान्तरंगभूत-संन्यासस्यापि कालो विधीयत इव प्रतिभाति। अथापि अशुद्धचित्तो राक्षसराजो विरोचनः ब्रह्मलोकं गतोपि परमगुरुणा परमेष्ठिना उपदिष्टोपि नैवाग्रहीदात्मानं। "संसारमेव निस्सारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः"। इति "यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेत्गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इत्यादिप्रमाणैः वक्ष्यमाण-वैराग्यादिसाधन-चतुष्टयसंपन्नस्य देशकालौ न विवक्षितौ इत्यभिप्रायेण तयोस्सहकारित्वमुक्तम्।। अत एव "विद्वान् संन्यस्तबाह्यार्थसुख-स्पृहस्सन्" इति विवेक-वैराग्ये ब्रह्मात्मनावस्थान-लक्षण-मोक्षसाक्षाद्धेतु-भूतसम्यग्दर्शननिष्ठार्थं मोक्षसाधनोपदेशक-गुरूपसदन-पुरस्सर-तदुप-दिष्टार्थमनस्समाधाने हेतूकृते। एतादृशमनस्समाधानस्य शमदमोपरति-तितिक्षा-श्रद्धानामभावे असंभवात् मुक्तीच्छाभावे तदर्थं प्रयत्नासंभवाच्च "अतो विमुक्त्यै" इत्याद्यश्लोके विवेक-वैराग्य-शमादिषट्कमुमुक्षुत्वानां जिज्ञासा-साधारण-हेतूनां सूचनं कृतमेव। तथाच "तरति शोकमात्मवित्"

"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इत्यादिश्रुत्यनुसारेण शोकशब्दित-बन्धनाशकं सम्यज्ज्ञानं सद्गुरूपदिष्टार्थ-विचारमन्तरा न केनापि साधनांतरेणेति। श्लोके अस्यामित्यस्य सिद्धावित्यर्थः ॥१४॥

अतो विचारः कर्तव्यः जिज्ञासोरात्मवस्तुनः।
समासाद्य दयासिंधुं गुरुं ब्रह्मविदुत्तमम् ॥१५॥

अतः सर्वानर्थनिवर्तकनिर्णयहेतुत्वात् जिज्ञासोः आत्मानं सम्यज्ज्ञातुमिच्छोः पुरुषस्य आत्मवस्तुनः विचारः कर्तव्यः। तत्र इतिकर्तव्यतामाह दयासिंधुं स्वयं कृतार्थत्वेन स्वस्य प्रयोजनाभावस्सिद्ध एव, इतरेपि मा दुःखमनुभूवन्निितिकरुणायाः समुद्रं, आधारमित्यर्थः, जलराशिरिव जलानां, गुरुम्, "गुशब्दस्त्वंधकारस्स्यात् रुशब्दस्तन्निरोधकः। अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते" इति गुरुगीतोक्तरीत्या स्वोपदेशेन अज्ञानाख्य-हार्दान्धिकारहारकमित्यर्थः। यथान्धकारः प्रपंचमावृत्य तज्ज्ञानप्रतिबन्धको भवति एवमज्ञानं आत्मानमावृत्य तत्स्पष्टभान-प्रतिबन्धकं भवतीत्यन्धकारत्वमज्ञानस्य, अत एव तमइत्यादिशब्दैरभिलापश्श्रुतौ "तमोह्यासीत्, तमसा गूल्हमग्रे" इत्यादौ। एतद्विशेषणद्वयं यत्र सम्भवति तमाह ब्रह्मविदुत्तममिति। ब्रह्म विदन्तीति ब्रह्मविदः तेषामुत्तमं स्थितप्रज्ञमित्यर्थः। अत्र श्रुतयः पूर्वमुदाहृताः। तत्समासादनं च "तमाराध्य गुरुं भक्त्या प्रह्वः प्रश्रयसेवनैः" इति वक्ष्यमाणरीत्या "तद्विद्धिप्रणिपातेन परिप्रश्नेन सेवया" इति गीतोक्तरीत्या च तस्य स्वात्माभिमुखीकरणमिति। अतो विमुक्त्यै इत्यष्टमश्लोकस्य इयद्भिश्लोकैः विवृतिः कृता ॥१५॥

मेधावी पुरुषो विद्वान् ऊहापोहविचक्षणः।
अधिकार्यात्मविद्यायां उक्तलक्षणलक्षितः ॥१६॥

अधिकारिणमाशास्ते फलसिद्धिर्विशेषत इत्युक्तमधिकारिणं प्रकृते कथयति मेधावीत्यादिना। "धीर्धारणावती मेधा" इति कोशात् श्रुतार्थधारणक्षमबुद्धिमानुच्यते मेधाऽस्यास्तीति व्युत्पत्या मेधावीशब्देन। विद्वानितिअधीत-काव्यकोशव्याकरणः उच्यते। ऊहापोहविचक्षणः एतेन तर्क-मीमांसा-संस्कृतबुद्धित्वं गम्यते। पदवाक्य-प्रमाणज्ञ इति यावत्। उक्तलक्षण-लक्षित इति अष्टमश्लोकादारभ्य पंचदशश्लोकमध्यपाति-

श्लोकैः समासव्यासाभ्यां सूचितविवेक-वैराग्य-शमादिषट्क-मुमुक्षुत्वरूप-साधन-चतुष्टय-संपन्न इत्यर्थः। आत्मविद्यायामधिकारी आत्मविद्याफलं मोक्षं अनुभवितुमर्हतीत्यर्थः ॥१६॥

विवेकिनो विरक्तस्य शमादिगुणशालिनः।
मुमुक्षोरेवहि ब्रह्मजिज्ञासा-योग्यता मता ॥१७॥

उक्तानि लक्षणानि स्फुटप्रतिपत्तये क्रोडीकृत्याह विवेकिन इति। यद्वा उक्तं लक्षणं जिज्ञासुत्वं "अतोविचारः कर्तव्यो जिज्ञासोरात्म-वस्तुनः" इत्यत्र जिज्ञासुरेव मेधावित्वादि-विशेषणविशिष्टः आत्मविद्या-फलभाक्, इदानीं जिज्ञासायां कस्याधिकार इति चेत् पूर्वं अष्टमश्लोके विद्वान् संन्यस्तबाह्यार्थ-सुखस्पृहस्सन् उपदिष्टार्थ-समाहितात्मा इति दशम-श्लोके धीरैः इतिशब्दसूचितस्य साधनचतुष्टय-संपत्तिविशिष्टस्य इत्याह। विवेकिन इति। विवेकादिस्वरूपं स्पष्टयिष्यते मूल एवोपरिष्टात्। ज्ञातुमिच्छा जिज्ञासा, ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा तत्रावगति-पर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म। अखण्डाकारवृत्ति-प्रतिफलितं चैतन्यं जिज्ञासापद-लक्ष्यमाण-विचारस्य फलम्। सामान्यतो ब्रह्मज्ञानस्य विचारात्पूर्वमपि सत्वात् एतादृशमिष्टं संपादनीयं चेत् "दद्यान्नावसरं किंचित् कामादीनां मनागपि। आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया" इत्युक्तरीत्या सार्वदिक-वेदान्तविचार आवश्यकः। "देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकं। आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते" इत्युक्त-ज्ञानं जनयितुं स एव समर्थः ॥१७॥ एतादृश-विचारजननी या इच्छा तत्र योग्यता विवेकादि-साधनयुतस्यैव नान्यस्येत्येवकारबोधितमर्थं अन्वयेन व्यतिरेकेण च स्पष्टयति। साधनानीति।

साधनान्यत्र चत्वारि कथितानि मनीषिभिः
येषु सत्स्वेव सन्निष्ठा यदभावे न सिद्ध्यति ॥१८॥

लोके यस्य तावत् कार्यत्वेनाभिमत-समानाधिकरणा-त्यन्ताभाव-प्रतियोगित्वं स्वसमानाधिकरणात्यन्ताभाव-प्रतियोगि-कार्यत्वाभिमत-कत्वं वा तस्य तत्कारणत्वं न संभवति। यथा पटसमानाधिकरणात्यन्ता-भावप्रतियोगिनी मृत्, मृत्समानाधिकरणात्यन्ताभाव-प्रतियोगिपटवती वा

सा पटकारणत्वं नाश्नुते। अपितु मृत्सत्वे घटसत्वं मृदभावे घटाभाव इत्यन्वयव्यतिरेकसहचारग्रहवशात् घटकारणत्वं भजते। एवं विवेकादि-चतुष्टयसत्व एव सति ब्रह्मणि नितरां स्थितिप्रयोजक-ब्रह्मजिज्ञासायाः सम्भवात् तदभावे चासंभवात् अन्वयव्यतिरेक-सहचारग्रहाधीना तेषां विवेकादीनां सन्निष्ठापरपर्याय-फलपर्यन्त-ब्रह्मजिज्ञासा-कारणत्वावगतिः इत्युक्तम्। मनीषिभिः कथितानीति। तत्र मनीषित्वं च श्रुतितात्पर्य-ज्ञानवत्वं। श्रुत्यवलम्बनाभावे एतादृशाधिकारिविशेषणानां दुर्ज्ञनत्वात्। तादृशाश्च मनीषिणः बादरायणप्रभृतयः। ते किल "अथातो ब्रह्म-जिज्ञासा" इति सूत्रघटकाथशब्देन साधनचतुष्टय-सम्पत्यानन्तर्यं सूत्रयन्तः ब्रह्मजिज्ञासाधिकारिण-मेवंविधं सूत्रयामासुः इति शारीरकमीमांसाद्याधि-करण-तृतीयवर्णक-भाष्यादर्थतोऽवगम्यते। एतादृशविशेषणलंभकश्रुतयस्तु, "यत्कृतकं तदनित्यं" इति न्यायवती "तद्यथेहकर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "यो वै भूमा तदमृतम् अतोन्यदार्तं" "न जायते म्रियते वा विपश्चित्" इत्यादिश्रुतिः आत्मनः नित्यत्वं अनात्मनः अनित्यत्वं च बोधयतीतिविवेक-लम्भिका। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" "न वा अरे पत्युः कामायेत्यारभ्य आत्मनस्तु कामाय सर्वंप्रियं भवति" इत्यंता श्रुतिः अनात्ममात्रे वैराग्यप्रतिपादिका। "शान्तो दान्त उपरतस्तितिक्षुः-समाहितश्श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इतिश्रुतिः शमादिषट्कं बोधयति। "न स पुनरावर्तते" इति श्रुतिः मोक्षस्य नित्यत्वं वदन्ती तत्रेच्छामादधाति। उपनिषदामर्थवादत्वं वदतां कर्ममीमांसकानां मते एतासां स्वार्थे तात्पर्यंनास्तीत्येव ज्ञानसंभवात् "ब्रह्मजिज्ञासितव्यं तत्र च एतादृशविशेषणविशिष्टोधिकारीति" ज्ञानस्य दुर्लभत्वात् मनीषिभिः कथितानीत्युक्तम्। तथाच प्रमाणान्तरानधिगत-कालत्रयाबाध्य-परम-पुरुषार्थ-स्वरूपब्रह्म-प्रतिपादकत्वा-दुपनिषदां तात्विकप्रामाण्यस्यात्रैव सम्भ-वात् तत्तद्वाक्य-समर्पित-विवेकादिविशिष्टस्यैव "सोन्वेष्टव्यः स विजि-ज्ञासितव्यः" इत्यादिवाक्यविहित-जिज्ञासायोग्यतेति सर्वं चतुरस्रम् ॥१८॥

तत्र विवेकिनो विरक्तस्येत्यादिना कथितं विवेकादिकं क्रमतो निर्दिशति आदावित्यादिना।

आदौ नित्यानित्य-वस्तु-विवेकः परिगण्यते।
इहामुत्र-फलभोग-विरागस्तदनन्तरम् ॥१९॥
शमादिषट्क-संपत्तिः मुमुक्षुत्वमिति स्फुटम् ॥

विवेकादीनां मध्ये पूर्वपूर्वस्य उत्तरोत्तर-हेतुत्वात् क्रमः समाश्रितः। इदं नित्यं इदमनित्यमिति जानानः किल अनित्याद्विरज्येत। अतः नित्यानित्यवस्तुविवेकाभावे वैराग्यं दुस्संपादमिति विवेकस्य वैराग्यहेतुत्वम्। वैराग्यवत एव पुरुषस्य अन्तर्बहि-रिन्द्रिय-निरोधरूप-शान्ति-दान्ती। तत्रापि निरुद्धान्तःकरणस्यव बहिरिन्द्रिय-निरोधरूपदमः मनस्सम्बन्धाभाव इतरेषामिन्द्रियाणां अकिंचित्करत्वात्। तर्हि शमेसति दमस्य स्वतस्सिद्धत्वात् किमिति तस्य साधनकोटि-प्रविष्टत्वमिति चेत्, "इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः" इति गीतोक्तरीत्या बाह्येन्द्रियनिरोधाभावे शमस्य दृढत्वाभावात्। जितेन्द्रियस्यैव उपरमशब्दित-संन्यासः, तस्यैव शीतोष्णादि-द्वन्द्वसहिष्णुत्वरूपा तितिक्षा, तस्यैव बाह्यविक्षेपाभावात् ब्रह्मण्यैदंपर्येणाव-स्थान-लक्षणं समाधानं, एतादृशगुण-विशिष्टस्यैव "ब्रह्मैकमस्ति जगन्मिथ्ये" त्युपदिश्यमान-गुरुवेदान्तवाक्य-विश्वासरूप-श्रद्धा इति शमादिषट्कमध्येपि पूर्वापरीभावे कारणं सुवचम्। एतादृशः किल पुरुषधौरेयः मोक्षादन्यन्न कामयते, तत्र विलम्बं च न सहत इति तीव्रमुमुक्षावान् भवितुमर्हति इत्यभिप्रायेण, आदौ नित्यानित्येत्याद्याह। तदनन्तरं इहामुत्रफलभोगविराग इति च। तेन विवेकानन्तर्यस्य वैराग्ये कथनेन "तदुदित स्सहि य्रो यदनन्तरः" इति न्यायेन विवेक-कार्यत्वं वैराग्ये उक्तप्रायम्। तदनन्तरमिति उत्तरत्राप्यनुषज्यते वैराग्यानन्तरं शमादिसंपत्तिः, तदनन्तरं मुमुक्षुत्वमिति ॥१९॥

उक्तसाधनानि विवृणोति। ब्रह्मेत्यादिना।

ब्रह्मसत्यं जगन्मिथ्येवंरूपो विनिश्चयः।
सोयं नित्यानित्य-वस्तुविवेकः समुदाहृतः ॥२०½॥

ब्रह्म नित्यं जगदनित्यमिति निश्चयसत्वेपि दृढं वैराग्यं न सम्भवति, अनित्यसुखस्यापि प्रायः काम्यमानत्वात्। जगन्मिथ्येत्युक्ते मिथ्याभूतार्थः केनापि न काम्यते। नहि स्वाप्निकं राज्यं कामयन्ते राज्यकामयितारः।

अतः वैराग्यस्य नियतमुत्पत्तये ब्रह्म नित्यं जगदनित्य-मित्यनुक्त्वा ब्रह्म सत्यं जगन्मिथ्येत्याह। विनिश्चय इति विशेषेण निश्चय इत्यर्थकेन निश्चयेऽप्रामाण्य-ज्ञानानास्कंदितत्वमुक्तं भवति। सोयमिति, सः विवेकिन इत्यत्र विवेकिविशेषणत्वेनोक्तः, अयं आदौ नित्यानित्यवस्तु-विवेक इत्युक्तः इत्यर्थः। अस्यैव ऐहिकामुष्मिक-फलभोगविरागहेतुत्वं नियतमिति समुदाहृत इत्यत्र समित्युपसर्गेण द्योतितम्॥२०½॥

विवेकं निरूप्य वैराग्यं निरूपयति। तद्वैराग्यमिति।

तद्वैराग्यं जुगुप्सा या दर्शनश्रवणादिभिः।
देहादि-ब्रह्मपर्यन्ते ह्यनित्ये भोग्यवस्तुनि॥२१½॥

ऐहिकदेहादि-भोग्यवस्तुनः दर्शनेन, आमुष्मिक-दिव्यदेहादि-भोग्य-वस्तुनः श्रवणेन, आदिपदेन दृष्टजातीयस्य श्रुतजातीयस्य अनुमानेन। अनुभूयमान-शरीरप्रभृति-ब्राह्ममानेन शतवर्षजीवि-चतुर्दश-भुवनाधिपत्या-वच्छेदक-हिरण्यगर्भ-शरीरपर्यन्तं सर्वस्मिन् भोग्यवस्तुनि अनित्ये मिथ्याभूते या जुगुप्सा, कदापीदृशपदार्थ-सम्बन्धो माभूदिति, काकविष्ठायामिवासह्य-बुद्धिः तद्वैराग्यम्। "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इतिवद्विधेय-प्राधान्यात् नपुंसकनिर्देशः तदिति। "स्वदेहाशुचि-गंधेन न विरज्येत यः पुमान्। वैराग्यकारणं तस्य किमन्यदुपदिश्यताम्" "सततं प्रवाह्यमानैः वृषभैः अश्वैः खरैर्गजैः महिषैः। हा कष्टं क्षुत्क्षामैः श्रान्तैर्नो शक्यते वक्तुम्" "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "भूम्नोन्यदार्तम्" "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" "आब्रह्म-भुवनाल्लोकाः पुनरावर्तिनोर्जुन" सूतसंहितायां यज्ञवैभवखण्डे सप्तदशो-ध्यायः, सर्ववेदान्त-सिद्धान्तसारसंग्रहस्थाः "कुक्षौ स्वमातुर्मलमूत्रमध्ये" इत्यादिना "पुण्यक्षये पुण्यकृतो नभस्थैः निपात्यमानान् शिथिलीकृतांगान्। नक्षत्ररूपेण दिवश्च्युतांस्तान् विचार्य कोवा विरतिं न याति" "यत्रास्ति लोके गतितारतम्यं" इत्यन्ताश्च श्लोकाः वैराग्यविषयेऽनुसंधेयाः। मानुषदेहादेः रोगाद्युपप्लुतत्वं, पश्वादीनामत्यन्त-पारतंत्र्यं मूकत्वादि, देवानां राक्षसादिपीडितत्वं, शब्दादीनां विषयाणां बहुविधानर्थप्रदत्वं कुरंगादिदृष्टान्तैः अनुसन्दधानस्य सर्वत्रानात्मसु जुगुप्सा सुलभेति भावः। एतच्च "शब्दादिभिः पंचभिरेवे"त्यादिना स्वयमुत्तरत्रस्पष्टयिष्यते।

यद्यपि "अपाम सोमममृता अभूम" "अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति" इति श्रुत्यवलोकनेन कर्मफलस्यापि नित्यत्वं प्रतीयते। अथापि "यत्कृतकं तदनित्यं" इति न्यायसहकृत, तद्यथेह कर्मचितेत्यादिश्रुत्यनुसारेण आमृताक्षय्यपदयोः संकुचितार्थकत्वस्या-वश्यंवक्तव्यत्वात् न दोषः। उक्तं हि "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति ॥२१½॥

शमस्वरूपं ब्रवीति विरज्येति।

विरज्य विषयव्रातात् दोषदृष्ट्या मुहुर्मुहुः।
स्वलक्ष्ये नियतावस्था मनसश्शम उच्यते ॥२२½॥

आद्यन्तवत्व-बहुवित्तव्ययायाससाध्यत्व-परिणति-विरसत्वादि-दोषान् पुनः पुनः विषयेषु पश्यतः पुरुषस्य तत्र वैराग्यं नियतमिति विषयदोषदर्शनं वैराग्यहेतुरिति। तस्मिंश्च वैराग्ये सति मनस्स्वलक्ष्ये सगुणे निर्गुणे वा नियतमवतिष्ठमानं निश्चलं निर्विकारं भवतीति मनोनियतावस्थारूप-शमस्य वैराग्यजन्यत्वमाह विरज्येति। तत्र ल्यपा उत्तरकालिकत्वस्य बोधनात् वैराग्यजन्यत्वं बोधितं भवति ॥२२½॥

दमं निरूपयति विषयेभ्य इति।

विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके।
उभयेषामिन्द्रियाणां स दमः परिकीर्तितः ॥२३½॥

मनसः विषयविचार-सामर्थ्यसत्वात् स्वत एव विरज्येत्युक्तम्। बाह्येन्द्रियाणां श्रोत्रादीनां ज्ञानकरणानां, वागादीनां कर्मकरणानां च स्वतस्तत्र सामर्थ्याभावात् प्रग्रहस्थानीयेन मनसा अश्वस्थानीयानां बहिरिन्द्रियाणां शब्दादिरूप-विषममार्गेभ्यः परावर्त्य पराङ्मुखीकृत्य स्वस्वगोलके कर्णशष्कुली-वदनादि-देशेषु स्थापनं उपरतव्यापारतासम्पादनं यत् स दमः परिकीर्तितः। मनआदीनां प्रग्रहादिरूपत्वं कठोपनिषद्युक्तम् "आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिंविद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहु र्विषयांस्तेषु गोचरान्" इति। मार्गानित्यर्थः ॥२३½॥

दमरूप-बहिरिन्द्रिय-निग्रहसाध्यामुपरतिमाह बाह्येति।

बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा ॥२४॥

तटाकोदकस्य तटाकच्छिद्रद्वारा निर्गत्य यथा क्षेत्राद्यात्मना परिणामः, एवमन्तस्थस्य मनसः श्रोत्रादिच्छिद्रद्वारा बहिरागत्य शब्दादिविषयाकारेण परिणामरूपा वृत्तिर्जायते। निगृहीतेषु च बहिरिन्द्रियेषु अन्तस्थं मनः न बाह्याकारेण परिणमत इति भावः ॥२४॥

यदा बाह्यं नालम्बते चित्तं तदा शीतोष्णादि-द्वन्द्वस्य अप्रतीयमानत्वात् कर्मकालादिवशात् तत्प्रसक्तावपि तत्सहनरूपा तितिक्षा सिद्ध्यतीत्याह। सहनमिति।

सहनं सर्वदुःखानां अप्रतीकारपूर्वकम्।
चिन्ताविलापरहितं सा तितिक्षा निगद्यते ॥२५॥

कम्बलव्यजनादिभिः शैत्यौष्ण्यादि-दुःखप्रतीकारः लोकसिद्धः। तादृश-सामग्र्यभावे किमस्माभिर्दीनैः करणीयमिति चिन्ता, प्रलापश्च। विचारसाधन-तितिक्षायास्तथात्वं व्यावर्तयति अप्रतीकार-पूर्वकं चिन्ताविलापरहितं यत्सहनं सा तितिक्षेति। दुःखानां दुःखहेतु-शीतोष्णादीनामित्यर्थः। चिन्ताविलापादि-सहितस्य मनसः विचारस्य दूरापास्तत्वादिति भावः ॥२५॥

इदानीं वस्तूपलब्ध्यसाधारण-कारणं श्रद्धां निरूपयति। शास्त्रस्येति।

शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणा।
सा श्रद्धा कथिता सद्भिः यया वस्तूपलभ्यते ॥२६॥

लोकेपि आप्तवाक्ये विश्वासाभावे नैव तदनुसारेण प्रवर्तते पुरुषः विचारादौ। किमुतातीन्द्रिये शास्त्रार्थे, अतः सा परमकारणं। उक्तं हि गीतायां "अश्रद्धधानाः पुरुषा धर्मस्यास्य परन्तप। अप्राप्य मां निवर्तन्ते मृत्युसंसार-वर्त्मनि।" इति। यस्तावत् शान्तो दान्त उपरतस्तितिक्षुश्च स एव "ब्रह्मैकमेव सत्यं तदेव त्वं अन्यत्सर्वं मिथ्या" इति गुरुणा वेदान्तैश्चबोध्यमानं वस्तु विश्वसिति इदमेवमेवेति। नान्यस्तादृशसाधनहीनः इति श्रद्धा तदनन्तरं परिगणिता गुरुवेदान्त-वाक्यविषयिणी। शास्त्रं तत्वमस्यादिशास्त्रं गुरुवाक्यं तदनुसारि "नासित्वं संसारी किन्तु

नित्यशुद्ध-बुद्धमुक्तस्वभावं परं ब्रह्मैव अन्यत्सर्वं मिथ्या" इत्यादिवाक्यं, तस्य, सत्यं अबाधितार्थबोधकं इतिबुध्या, अवधारणा दृढविश्वासः, यया वस्तूपलभ्यते सा श्रद्धा इति सद्भिः कथितेत्यन्वयः ॥२६॥

एतादृश-श्रद्धावतएव समाधानं सम्यक्सिद्ध्यतीति तदनन्तरं समाधानं निरूपयति । सम्यगिति।

सम्यगास्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वदा।
तत्समाधानमियुक्तं न तु चित्तस्य लालनम् ॥२७॥

यद्यपि स्वलक्ष्ये नियतावस्थारूप-शमापेक्षया भेदो न लक्ष्यते ईदृशे समाधाने, "तथापि मुहुर्मुहुः दोषदृष्ट्या विषयेभ्यो विरज्य स्वलक्ष्ये नियतावस्था" इत्यनेन "यतो यतो निश्चरति मनश्चंचलमस्थिरम्। ततस्ततो नियम्यैतत् आत्मन्येव वशं नयेत्।" इति गीतोक्तरीत्या शमावस्थायां प्रयत्नविशेषोऽपेक्ष्यते संकल्प-विकल्पात्मकस्य मनसः स्थिरीकरणे। अत एवात्र अध्यवसायात्मिकायाः बुद्धेः शुद्धे ब्रह्मणि सम्यगास्थापनं सर्वदा इत्यनेन-संकल्प-विकल्प-विनिर्मुक्तत्वं अन्तःकरणस्य प्रकृते कथितं भवति। अत एव मनश्शब्दं विहाय निर्णयात्मक-वृत्तिमद्बुद्धि-शब्दः प्रायोजि। तत्रापि शुद्धे ब्रह्मणीति निर्गुणं कथ्यते सर्वोपाधिविनिर्मुक्तं। शमनिरूपणावसरे स्वलक्ष्ये नियतावस्थेत्यनेन सगुणे नियतावस्थानेपि शान्तत्वं मनसो वक्तुं शक्यम्। शम इति साधनं कथ्यते, समाधानं तस्य फलं तस्यैव परिपाक इति यावत्। लोके बालका विशेषतो रुदन्ति चेत् तदिष्टं दत्वा समादधते जनाः, तद्वत् मनसो यथेष्टं विषयमार्ग-संचरणं न समाधानमित्याह न तु चित्तस्य लालनमिति। यद्वा "शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित्। पौरुषेणप्रयत्नेन योजनीया शुभे पथि"। अशुभेषु समाविष्टं शुभेष्वेवावतारयेत्। स्वमनःपुरुषार्थेन बलेन वलिनां वर। अशुभाच्चालितं याति शुभं तस्मादपीतरत्। जन्तोश्चित्तं तु शिशुवत् तस्मात्तच्चालयेद्बलात्। समतासान्त्वनेनाशु न द्रागिति शनैश्शनैः। "पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम्"। इति वासिष्ठरीत्या चालनं लालनं वा शमादिसाधनत्वेन पूर्वमपेक्ष्यते। न तु फलीभूतसमाधानावस्थायां, तदाभ्यासं विनापि शमादिसंपादनकाले कृतप्रयत्नेनैव क्षीण-

बाह्यवासनस्य मनसः सगुणात्प्रच्यावनमात्रस्य निर्गुणे स्थापयितु-मपेक्षितत्वात् इति ॥२७॥

एतादृश-साधनगण-मण्डितस्यैव मुमुक्षुत्वं सम्भवति नान्यस्येती-दानीं मुमुक्षुत्वमाह अहंकारादीति।

अहंकारादिदेहान्तान् बन्धानज्ञान-कल्पितान्।
स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता ॥२८॥

"अन्तःकरणमेतेषु चक्षुरादिषु वर्ष्मणि। अहमित्यभिमानेन तिष्ठत्याभास-तेजसा। अहंकारः स विज्ञेयः" इत्युक्त्या चित्प्रतिफलनो-पेत-मन्तःकरणं अहंकारः। यद्वा भोक्ता जीवोहंकारः आनन्दमयकोश-नामा, स्वात्मनिरूपणे "सुप्तिगतै स्सुखलेशैः अभिमनुते सुखीभवामीति। आनन्दकोशनामा सोहंकारः कथं भवेदात्मा" इत्युक्तत्वात्। तस्या-प्यज्ञानकल्पितत्वं मनोरूपोपाधिवशाद्विकारत्वं च गौणं वक्तुं शक्यम्। तथाच आनन्दकोश-प्रभृतिविज्ञानमय-मनोमय-प्राणमयान्नमयान्तान् बन्धान् स्वरूपसाक्षात्कारात्प्रगात्मत्वेन मन्यमानान् स्वस्वरूपावबोधेन मोक्तुं पुनस्तत्र यथाऽहन्ता न स्यात् तथा त्यक्तुं बाधितुमित्यर्थः। या इच्छा सा मुमुक्षुता। स्वस्वरूपावबोधे हि "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इति श्रुत्या स्वव्यतिरिक्तस्य कस्यापि भानाभावेन कोश-पंचकात्मक-बन्धनिवृत्तिरत्यन्तमिति भावः ॥२८॥

इयं तावत् मुमुक्षुता त्रिविधा मन्दा मध्यमा प्रवृद्धा चेति। मोक्षस्य नित्यसुखरूपत्वेपि सांसारिक-वासना-वासितांतः करणानां मोक्षेच्छैव दुर्लभा। अध्यात्मशास्त्र-श्रवणकाले जातासा न कार्यमादधाति। यदा पुरुषः श्रवणानन्तर-जातविवेकेन विषयेषु सांसारिकेषु दोषान् दर्शं दर्शं तत्र वैराग्यं लब्ध्वा विधिवत्संन्यस्य सर्वकर्माणि, विचारार्थं गुरूप-सदनादौ प्रवर्तते तदा, अध्यात्मशास्त्रश्रवणकाले जाता तात्कालिक्येव मुमुक्षुता मन्देति नामार्हैव मध्यमत्वं प्राप्नोति। यथा यथा तीव्रं वैराग्यं मनश्चोपशान्तं समाधित्सति गुरुश्चास्मिन्प्रसीदति "क्षिप्रमयं तरतु भवाब्धिमिति" तदा पुरुषः नित्यसुखरूप-मोक्षादन्यन्न कामयते तत्र विलंबं च न सहत इति प्रवृद्ध-मुमुक्षः मुख्याधिकारी भूत्वा क्षिप्रं लभते फलमित्याह। मन्देति।

मन्दमध्यम-रूपापि वैराग्येण शमादिना।
प्रसादेन गुरोस्सेयं प्रवृद्धा सूयते फलम्॥२९॥

इत्थं च मुमुक्षाया मोक्षेच्छारूपत्वेपि यदा सा प्रवृद्धा तदैवफलं प्रसूत इत्यनेन तत्प्रवृद्ध्यर्थं विषयवैराग्य-शमादिषट्क-गुरुप्रसादलाभार्थं प्रयत्नः कर्तव्यः पुरुषेणेत्युक्तं भवति॥२९॥

साधनचतुष्टयमध्ये द्वितीयतुरीयसत्वे सर्वं तत्रास्ति नान्यथेत्याह। वैराग्यमिति।

वैराग्यं च मुमुक्षुत्वं तीव्रं यस्य तु विद्यते।
तस्मिन्नेवार्थवन्तः स्युः फलवन्तः शमादयः॥३०॥

अर्थवन्तश्शमादय इत्यत्र शमादयइत्यस्य शमादिशब्दा इत्यर्थः। तस्मिन्पुरुषे शमादयस्सन्तीति व्यवहारस्सार्थक इति भावः। अयं शान्तो दान्तः इत्यादिशब्दभाक् तीव्रवैराग्यवान् तीव्रमुमुक्षुतावांश्चेत्यर्थः तीव्रमुमुक्षुत्वस्यैव शमादिफलत्वात्। यदि तीव्रमुमुक्षुत्वं तदा साधनं विना फलालाभात् कार्यात्कारणमनुमीयत इति शमादिमत्वं तस्य सुवचं। एवं शमादिसाधनं तीव्रवैराग्यं यदा तस्मिन्ज्ञायते, साधने सतिफलावश्यंभावात् शमादिमत्वं तस्मिन्नवर्जनीयम्। इत्थं च शमादिसाधने सति तीव्रवैराग्येशमादिफले च तीव्रमुमुक्षुत्वे स्वसाधन-फलमध्यवर्ति स्वयं निरपवादमिति भावः। तीव्रवैराग्ये शमादिशब्दाः अर्थवन्तः, तीव्रमुमुक्षुत्वे शमादयः फलवन्तः इति विभागः। शमादीनां इतरान्तःकरणनिष्ठानां दुर्ज्ञानत्वात् कारणकार्याभ्यां अवगन्तव्यत्वमुक्तम्। स्वयमपि पुरुषेण शान्त्यादिकं समपादीति कथं ज्ञेयं इत्युक्तौ पुष्कलकारणे तीव्रवैराग्ये विशिष्टफले तीव्रमुमुक्षुत्वे च सति तथेति स्वस्मिन् परस्मिंश्च कारणकार्ये ज्ञापके इति भावः। "काकस्य विष्ठावदसह्यबुद्धि-र्भोग्येषु सा तीव्रविरक्तिरिष्यते। विरक्तितीव्रत्व-निदानमाहुः भोग्येषु दोषेक्षणमेव सन्तः" इति वैराग्ये तीव्रत्वं तत्साधनं च कथितं सर्ववेदान्त-सिद्धान्तसार-संग्रहे। मुमुक्षुत्वे तीव्रत्वं प्रवृद्धत्वमेव। तत्तु प्रागभिहितम्॥३०॥

एतयोर्मन्दता यत्र विरक्तत्व-मुमुक्षयोः।
मरौ सलिवत्तत्र शमादेर्भानमात्रता॥३१॥

यत्र यस्मिन्पुरुषे एतयोः विरक्तत्वमुमुक्षयोः मन्दता तात्कालिकत्वं मरौ सलिलवत्, निदाघसमये मरुभूमौ चण्डकिरणसंपर्के दूरस्थस्य तत्र जलमस्तीति भ्रान्तिर्भवति न जललाभः तत्र नैव पिपासानिवृत्तिः, प्रत्युत श्रान्तस्य तत्र जलधिया जलार्थं गमनेन श्रमाधिक्यमेव, तद्वत्तीव्रवैराग्य-मुमुक्षत्वयो-रभावे मरुसलिलवत् शमादेस्तत्र भानमात्रता न शमादिफलं तस्य, नापीतरैः शान्त इत्यादिशब्दै-र्व्यवह्रियते च इति भावः ॥३१॥

एवं सर्वेषां वेदान्तानां अद्वितीय-ब्रह्मणि प्रत्यगभिन्ने नित्य-शुद्धबुद्ध-मुक्त-स्वभावे तात्पर्यनिर्णयानुकूल-व्यापाररूप-श्रवणात्मक-ब्रह्म-विचाराधिकारिणो विशेषणानि विवेकादीनि निरूप्य आत्मसाक्षात्कार-साक्षात्साधनं भक्तिं पूर्वोक्तविचारसाध्यामाह। मोक्षेति।

मोक्षकारण-सामग्र्यां भक्तिरेव गरीयसी।
स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते ॥३२॥

स्वस्वरूपानुसंधानमिति निदिध्यासनमुच्यते। तस्यैव साक्षात्कारं प्रति साक्षात्साधनत्वात्। श्रुत्याचार्योपदेशेन स आत्मा तत्वमसीति श्रुतः योर्थः तव स्वरूपं ब्रह्म तदेव त्वमिति, तदनुसंधानं तद्भावनाधारा विजातीय-प्रत्ययातिरस्कृत-सजातीय-प्रत्यय-प्रवाहरूपा साक्षात्कारे असा-धारणं कारणमिति भावः। शमादीनां विचारद्वारक-निदिध्यासनद्वारा कारणत्वं ज्ञाने, अस्य तु साक्षादिति भावः। अत एव मोक्षस्य कारणं अभिव्यंजकं यज्ज्ञानं तत्सामग्र्यां तत्साधनसमुदायमध्ये भक्तिरेव गरीयसी साक्षात्कारणत्वादित्युक्तम्। सा च सामग्री विवेकादिनिदिध्या-सनान्ता ॥३२॥

अपरेषां मतमाह।

स्वात्मतत्वानु-संधानं भक्तिरित्यपरे जगुः ॥३२½॥

स्वात्मनः स्वस्य जीवस्य तत्वानुसंधानं। तस्य भावस्तत्त्वम् तत्पदवाच्यार्थत्वम् परमात्मत्वमित्यर्थः। तस्यानुसंधानं, वास्तविकभेद-सत्वेपि अभेदेनोपासनं अहंग्रहोपासनमिति यावत्। तत् भक्तिरिति अपरे जगुः इति भेदबुद्धिपुरस्सरायाः भ्रन्तिरूपाया अस्याः मुख्यभक्तित्वं नास्तीति सूचितम्।

पूर्वोक्त-साधनसंपन्नस्य उक्तेति।

उक्तसाधनसंपन्नः तत्वजिज्ञासुरात्मनः।
उपसीदेद्गुरुं प्राज्ञं यस्माद्बन्धविमोक्षणम् ॥३३½॥

उक्तसाधनसंपन्नः उक्तानि विचारसाधनत्वेन कथितानि यानि विवेकादीनि साधनानि तैः संपन्नः युक्तः, पुमानिति शेषः। आत्मनः स्वस्य तत्वं ज्ञातुमिच्छुः स्वयाथात्म्यज्ञानकामः उपसीदेत् शरणं गच्छेत्, कं? गुरुमुपदेशकम्। कीदृशम्? प्राज्ञं, प्रकृष्टा निरतिशया ज्ञा अवगतिः प्रज्ञा ब्रह्मसाक्षात्कारः "ब्रह्मात्मनोश्शोधितयो-रेकभावावगाहिनी। निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते" इति वक्ष्यमाणत्वात्। सास्यास्तीति प्रज्ञः स एव प्राज्ञः, तं ब्रह्मनिष्ठमित्यर्थः। तेन स्वस्य फलमाह। यस्माद्यादृशगुरोः सकाशात्, बन्धविमोक्षणं बन्धस्य अज्ञान-कल्पितस्य अहंकारादिदेहान्तस्य विमोक्षणं विशेषेण परित्यागः इति। तादृशगुरूपसदने तदुपदेशजन्य-स्वयाथात्म्यज्ञानेन बन्धनिवृत्तिरूपमोक्ष-स्सिध्यति इति भावः ॥३४॥

तादृशं गुरुं लक्षयति, श्रोत्रिय इत्यादिना।

श्रोत्रियोऽवृजिनो-कामहतो यो ब्रह्मविदुत्तमः।
ब्रह्मण्युपरतश्शान्तो निरिन्धन इवानलः ॥३४½॥

"श्रोत्रियश्छन्दोधीत" इति पाणिनिनाऽनुशिष्टत्वात् अधीतोपनिषत्क इत्यर्थः। उपनिषद्मर्धीत्य कृततदर्थ-विचारस्यैव साक्षात्कारा-त्। अवृजिनः निष्पाप इत्यर्थः "नाविरतो दुश्चरितात् नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैन-माप्नुयात्" इति श्रुतेः। तत्र कारणमाह अकामहत इति। कामेन विषयाशया हतः कामहतः अभासितस्वस्वरूप इत्यर्थः। न कामहतः अकामहतः यस्तावत्स्व-रूपं आनन्दं न जानाति स एव बहिरानन्दोस्तीति तं प्राप्तुं कदाचित्पापमपि कुर्यात्। अस्य तावत् ब्रह्मवित्तमस्य साक्षात्क्रियमाण-स्वरूपानन्दत्वात् "विषया विनिवर्तन्ते निराहारस्य देहिनः। रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्तते" इति गीतोक्तरीत्या निवृत्तरागत्वरूपाकामहतत्वं सिध्यत्येवेति निष्पापत्वं तस्मिन्। कामस्यैव पापहेतुत्वात्। तदुक्तम् गीतासु "अथ

केन प्रयुक्तोयं पापं चरति पूरुषः। अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः" इत्यर्जुनेन पृष्टो भगवानाह "काम एषक्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्" इत्यादि। ब्रह्मण्युपरतः ब्रह्मणि विलीनमनस्कः अत एव निरिन्धन अनल इव शान्तः, यथा इन्धनाभावे अग्निः शान्तः ज्वालाशून्यः भाति तथा अनालम्बितबाह्यवृत्तित्वात् शान्तः निर्गुणे ब्रह्मणि परिनिष्ठित-चित्तत्वात् शान्तः निर्विकार इत्यर्थः। अत्र श्रोत्रियत्वादीनां विशेषणानाँ व्यावर्तकत्वं नास्ति, ब्रह्मवित्तमे अश्रोत्रियत्वस्य पापस्य कामहतत्वस्य च असंभावितत्वात्, किंतु वस्तुसत्तया तेषां तादृशगुरुज्ञापकत्वम् संभवतीति स्वरूपलक्षणत्वमेव मन्तव्यम्।

अहेतुक-दयासिंधु-र्बन्धुरानमतां सताम् ॥३५॥

नविद्यते हेतुर्यस्याः सा अहेतुकी तादृशी या दया परदुःखप्रहाणेच्छा तस्याः सिंधुः आश्रय इत्यर्थः। इतरस्य दयालोरपि दया अन्यत्र दुःखदर्शनेन स्वस्यापि जातदुःखत्वात्। तन्निरासार्थं अहेतुकेति। अस्य तु ज्ञानमहिम्ना स्वतो वा परतो वा दुःखाप्रसक्तेः केवलं जनास्तरन्तु संसारवार्धिमिति इच्छा परं व्युत्थानकाले इति भावः। बन्धुः दुःखहारक इत्यर्थः। केषां ? आनमतां सतां प्रह्वीभवतां सत्पुरुषाणामित्यनेन शिष्यस्य लक्षणं परिज्ञायैव ते उपदिशन्तीति सूचितम्। श्रूयते किल तत्र "नासूयकायानृजवे शठाय" "इदमशिष्याय नो देयम्" इत्यादि। स्मर्यते च गीतायां "इदं ते नातपस्काय नाभक्ताय कदाचन। नचाशुश्रूषवे वाच्यं न च मां योभ्यसूयति"। इदमुपसदनं समीपगमनम्।

तदनन्तरकर्तव्यं करुणया शिष्यायोपदिशति भगवान्भाष्यकारः। तमिति।

तमाराध्य गुरुं भक्त्या प्रह्वः प्रश्रयसेवनैः।
प्रसन्नं तमनुप्राप्य पृच्छेज्ज्ञातव्यमात्मनः ॥३६॥

भक्तिः पूज्येष्वनुरागः मानसधर्मः, तया प्रह्वः तद्व्यंजकाकारविशिष्टः नम्रकायः बद्धांजलिपुटः, प्रश्रयसेवनैः प्रश्रयश्च सेवनानि च प्रश्रयसेवनानि तैरित्यर्थः। तत्र प्रश्रयः विनीतवाक्त्वं सेवनानि साष्टांग-

नमस्कार-तत्पादसंवहन-तदुक्तकरणादीनि तैस्तमाराध्य संसेव्य, ऋज्व्या तया सेवया प्रसन्नं स्वाभिमुखं तं अनुप्राप्य यथासमर्यनिर्देशं तत्सन्निधौ यथाविधि स्थित्वा आत्मनः ज्ञातव्यं यज्जिज्ञासितं आत्मयाथात्म्यविषये तत्पृच्छेत्। भक्त्या प्रह्वः प्रश्रयसेवनैराराध्य इत्यनेन आराधयितु-र्मनसि वचसि कायेच शुद्धत्वरूप-त्रिकरणशुद्धिरुक्ता ॥३६॥

भक्तिपुरस्सर-वाचिकाराधन-प्रकारं दयया दर्शयति भगवान् जिज्ञासुभ्यः। स्वामिन्नमस्ते इत्यादिना तथा वदन्तमित्यन्तम्।

स्वामिन्नमस्ते नतलोकबन्धो कारुण्यसिन्धो पतितं भवाब्धौ।
मामुद्धरात्मीय-कटाक्षदृष्ट्या ऋज्व्यातिकारुण्य-सुधाभि-
वृष्टया ॥३७॥

नतलोकबन्धो नतानां कृतनतीनां लोकानां जनानां बन्धुः दुःखमोचकः तस्य संबुद्धौ नतलोकबन्धो, स्वामिन् प्रभो, ते तुभ्यं नमः, प्रह्वीभावः अस्त्विति शेषः। यतस्त्वं नतलोक-दुःखमोचकः अतस्त्वां दुःखमुक्त्यै नमामीति भावः। तत्र हेतुमाह कारुण्यसिंधो इति संबोधनेन। विवृतमेतत् अहेतुक-दयासिंधुरित्यत्र। स्वकीयं दुःखं निवेदयति भवाब्धो पतितं, जन्मजरारोग-मरणानर्थ-संकुले संसारसमुद्रे पतितमित्यर्थः। इदानीं तन्निवृत्तिं प्रार्थयते मामुद्धरेति। जन्मादि-बन्धनिर्मुक्तं कुर्वित्यर्थः। तत्र साधनं याचते आत्मीयकटाक्षदृष्ट्येति। स्वकीयलोचन-प्रान्तेनेत्यर्थः। ब्रह्मसाक्षात्कार-निर्धूत-सकल-मलस्य भवतः पवित्र-कटाक्षपाते सकलपाप-निर्मुक्तोहं संसार-सागरं तरामीति भावः। उक्तं हि "यस्यानुभवपर्यन्ता बुद्धिःसत्वे प्रवर्तते। तद्दृष्टि-गोचरास्सर्वे मुच्यन्ते सर्वकिल्बषैः" इति। एतेन शिष्येण गुरोस्साक्षात्पुरः न स्थेयमिति विनयप्रकारो दर्शितो भवति। किंच सम्पूर्णावलोकनं कटाक्षपात एव अतस्तत्कामयेइत्यपि भावः। नित्यशुद्ध-ब्रह्मानन्द-मग्नस्य मनसः चक्षुःप्रान्तद्वारापूर्णतया मयि पाते सर्वथापि पूतः दुःखविमुक्तो भवेयमहम् इति भावः। यद्वा आत्मीय-कटाक्षदृष्ट्या स्वकीय-सानुग्रहवीक्षणेनेत्यर्थः। ऋज्व्या स्वभावसरलया, तद्विशेषणेन यथा लोके अगाधजलपतितः ऋज्वीं रज्जुं यष्टिं वा अवलम्ब्य उद्धृतो भवति तथाहं भवत्कटाक्षं-दीर्घदीर्घमवलम्ब्य संसाराब्धे-रुद्धृतो

भवामीति भावः व्यंजितः। सूर्यमण्डलाद्वा दीपाद्वा किरणाः पुंजीभूय रज्जुवद्यथा निष्क्रामन्ति तथा चक्षुषोपि तेजस्त्वात् निष्क्रान्ता रश्मयः एतस्मिन् संक्रान्ताः ब्रह्मनिष्ठ-मनस्संयुक्तत्वादेन-मुद्धरंतीति भावः। अति-कारुण्यसुधाभिवृष्ट्या अत्यंतं कारुण्यं अतिकारुण्यं तदेव सुधा, सकलताप-हारकत्वात् सुधेति रूप्यते। सुधा नामामृतं, तस्याः अभितो वृष्टिः यस्यां दृष्ट्यां सा अतिकारुण्यसुधाभिवृष्टिः तया अतिकारुण्य-सुधाभि-वृष्ट्या। अमृताभिवर्षणेन पुरुषः जरामरणादि-वर्जितो भवतीति प्रसिद्धं। युद्धे मृता वानरा इन्द्रकारितामृत-वर्षणेन उज्जीविता इति रामायणे प्रसिद्धम्। तादृशामृतस्यैव तथात्वे ब्रह्मनिष्ठानुकम्पा-मृतवर्षणदृष्टिः असंकुचित-जरामरणादि-वर्जितत्वं दास्यतीति भावः॥३७॥

स्वोद्धरणे विलम्ब-मसहिष्णुः स्वकीयतीव्र-मुमुक्षुत्वं प्रकटीकरोति दुर्वारेति।

दुर्वार-संसार-दवाग्नितप्तं दोधूयमानं दुरदृष्टवातैः।
भीतं प्रपन्नं परिपाहि मृत्योः शरण्यमन्यंयदहं न जाने॥
॥३८॥

संसार एव दवाग्निः सर्वशो व्याप्य-तापहेतुत्वात् वनानलः, सः भवदीय-सदुपदेशजनितज्ञानं विना न वारयितुं शक्य इति दुर्वारः वारयितुं स्वयमशक्य इत्यर्थः। दुर्वारश्चासौ संसारदवाग्निः तेन तप्तम् दग्धं, वनानलस्य वातसहितत्वे बहुव्याप्य तापकृत्वं प्रसिद्धं। तथा दुरदृष्टवातैः दुरदृष्टानि पापानि तान्येव वाताः प्रतिकूलवायवः तैः दोधूयमानं मुहुर्मुहुः कम्प्यमानं, अनुकूलश्चेद्वातः एनमन्यत्र नयेत्, प्रतिकूलस्तु वातः अग्नौ पातयति अग्निं वा अस्मिन्। एवं दवाग्नि-तप्तस्य अमृतवर्षणे तापमाक्षो भवतीत्यभिप्रायेण पूर्वं दृष्टेः अतिकारुण्यसुधाभिवृष्ट्येति विशेषणं दत्तम्। तत्र बहुव्रीहि-मकृत्वा दृष्ट्या करणेन अतिकारुण्यसुधाभि-वृष्ट्या सुधाभिवर्षणेन इत्यपि वक्तुं शक्यते। तेन दवाग्नितप्तं मां मृत्योः परिपाहीत्यन्वयः। इत्थं च स्वकीय-कटाक्षदृष्ट्या ऋज्व्या मामुद्धरेति पूर्वमन्वयः। तया अतिकारुण्यसुधाभिवर्षणेन संसारदवाग्नि-तप्तं मां मृत्योः परिपाहीत्युत्तरत्रान्वयः। मृत्यो-र्भीतं, प्रपन्नं शरणागतं, मां मृत्योः परिपाहीत्युभयत्रा-न्वयः। भवदनुग्रहादात्मज्ञाने सति मम

शरीरोत्क्रमणरूप-मरणं नसंभवतीति भावः। "नतस्य प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते" इति श्रुतेः। तथाच "ध्रुवं जन्म मृतस्य च" इत्युक्तत्वात् मरणाभावे जन्माभावस्य सिद्धत्वात् जन्ममरण-प्रवाहरूपसंसारात् मुक्तो भवामि भवदनुग्रहे इति भावः। स्वस्यानन्यशरणत्वं गुर्वाभिमुख्याय प्रकटयति शरण्यमन्यं यदहं न जाने इति। भवदन्यं शरण्यं मद्रक्षकं यत् यस्मात् अहं न जाने। अतोऽनन्यशरणोयं नोदासितव्य इति भावः। ॥३८॥

श्लोकद्वयेन भवादृशां सत्पुरुषाणां अस्मासु करुणा निर्व्याजैवेत्याह शान्ता इति।

शान्ता महान्तो निवसन्ति सन्तो वसन्तवल्लोकहितं चरन्तः।
तीर्णास्स्वयं भीमभवार्णवं जनानहेतुना-न्यानपि तारयन्तः ॥३९॥

अयं स्वभावस्स्वत एव यत्पर-श्रमापनोदप्रवणं महात्मनाम्।
सुधांशुरेष स्वयमर्क-कर्कश-प्रभाभितप्ता-मवति क्षितिं किल ॥४०॥

वर्षासु वृष्टिबाधा, ग्रीष्मे तापः, शरदि प्रारम्भे सुखं, नमासद्वये कार्तिकान्तिम-भागस्य यमदंष्ट्रात्वकीर्तनात्, हेमन्त-शिशिरयो-श्शैत्यं, सुगन्धिकुसुमाकरः वसन्तर्तुः कार्त्स्न्येन लोकस्य सुखं जनयतीति वसन्तवदित्युक्तम् तदा वर्ष-ताप-शैत्यरोगादीनामभावात्। स ऋतुः यथा सुखमेव जनयति तथा लोकस्य सुखमेव तन्वानाः शान्ताः निर्विकारमनस्काः अत एव महान्तः, अपरिच्छिन्नब्रह्म-साक्षात्कारवन्तः, अत एव तादृशसद्ब्रह्माभेदेन सन्तः "ब्रह्मवित् ब्रह्मैव भवतीति श्रुतेः, स्वयं भीमः भयंकरः यः भवार्णवः संसारसागरः तं तीर्णाः असंसारिण इत्यर्थः। स्वस्य आप्तकामत्वेन प्रयोजनाभावात् अहेतुना हेतुं विना, अन्यानपि तारयन्तः भवाम्भोधि-मग्नानिति भावः। हेतुं विना कथं तेषां तत्तारणे प्रवृत्तिः निर्निमित्त-प्रवृत्यभावात् इति शंकायामाह अयं स्वभाव इत्यादिना। नहि स्वभावे कारणं गवेषणीयम्। नहि शर्करायां माधुर्यं किंनिमित्तमिति प्रश्नो युज्यते तत्र तस्य स्वभाविकत्वादित्यभिप्रायः। परश्रमाप-

नोदप्रवणं परेषां यश्श्रमः दुःखं तस्यापनोदः निवारणं तत्र प्रवणं भावप्रधानो निर्देशः प्रवणभावः प्रवणता सक्तता वैयग्र्यमित्यर्थः। इति यत् अयं स्वभावः महात्मनां स्वत एव। परप्रेरणादिकं तत्र नापेक्ष्यत इत्यर्थः। तत्र दृष्टान्तमाह सुधांशुरित्यादिना। अर्क-कर्कश-प्रभाभितप्तां अर्कस्य सूर्यस्य या कर्कशा तीक्ष्णा प्रभा प्रकाशः तया अभितः तप्तां क्षितिं भूमिं, सुधांशुः अमृतकिरणश्चन्द्रः एषः प्रसिद्धः समीपवर्ती, स्वयं पराप्रेरितः अवति रक्षति, किलेति प्रसिद्धौ ॥४०॥

एवं विनीतवेषेण तदनुसारिण्या वाचा तदभिव्यंजितभक्त्याच आर्तः अनन्यशरणोयं सर्वथा रक्षणीय इत्यभिप्रायेण स्वाभिमुखं स्वात्मानं सानुग्रहानुकम्पामृत-वर्षिकटाक्षैः पावयन्तं देशिकोत्तमं स्वबन्धमोचकोपदेशाय धैर्येण प्रार्थयते। ब्रह्मानन्देत्यादिना।

ब्रह्मानन्द-रसानुभूति-कलितैः पूतैः सुशीतैः सितैः
युष्मद्वाक्कलशोज्झितैः श्रुतिसुखैः वाक्यामृतैः सेचय।
संतप्तं भवतापदावदहन-ज्वालाभिरेनं प्रभो
धन्यास्ते भवदीक्षण-क्षणगतेः पात्रीकृताः स्वीकृताः ॥४१॥

हे प्रभो सर्वशक्त, भवदीक्षणक्षणगतेः भवतां यदीक्षणं दयार्द्रविलोकनं, तस्य क्षणगतेः क्षणप्राप्तेः, पात्रीकृताः आस्पदीभूताः, यद्वा भवतां यदीक्षणं नयनं तस्य क्षणगतेः क्षणसंयोगस्य पात्रीकृताः आश्रयीभूताः क्षणमात्रं वा भवन्नेत्रपातलक्ष्या इति यावत्। अत एव स्वीकृताः आत्मीयत्वेन कृताः ये पुरुषाः ते धन्याः कृतार्थाः। तस्मादहमपि भवत्कटाक्षेण पातिततमाः पाविततमश्च धन्योस्मि। अतिक्षिप्रं सांसारिकाग्नि-तापं शिशमयिषुः एवं प्रार्थये इति सूचयति। "श्रेयसि केन तृप्यते" इति न्यायेन कटाक्षपात्रं मां स्वीकृतं भवताप-दावदहन-ज्वालाभिः भवस्य तापः भवतापः, संसारशोकः स एव दावदहनः वनाग्निः, तज्ज्वालाभिः संतप्तं अत्यन्तदग्धं, एनं पुरोवर्तिनं, मां ब्रह्मानन्द एव रस इव आस्वद्यत इति रसः, तदनुभूतिकलितैः तदनुभवमिश्रैः, अत एव पूतैः सकलकल्मष-हारकत्वेन पवित्रैः "न हि ज्ञानेन सदृशं पवित्रमिह विद्यत" इति स्मृतेः। तादृशज्ञानवत् वाक्यानां सकल-पापापहारक-

ज्ञानोपदेशरूपत्वेन पूतत्वम्। सुशीतैः आन्तराणां आध्यात्मिका-धिदैविका-धिभौतिक तापानां नाशकत्वात्। सितैः रजस्तमो-मार्गनिवर्तनद्वारा सत्वमार्गैक-प्रापकत्वेन निर्मलैः। युष्मद्वाक्कलशोज्झितैः युष्माकं वाक् युष्मद्वाक्, वागिंद्रियं तत्स्थानं मुखं वा स एव कलशः घटः ततो निर्गलन्ति वाक्यामृतानीति, तेन उज्झितैः विसृष्टैः, श्रुतिसुखैः कर्णानन्ददायकैः, वाक्यामृतैः वाक्यान्येवामृतानि तैरित्यर्थः। सेचय मां सिचेत्यर्थः। स्वार्थे णिच्। पूतत्वं सुशीतत्वं सितत्वं कलशोज्झितत्वं वाक्येष्वमृते चाविशिष्ट-मिति वाक्यान्यमृतत्वेन रूपितानि। पूतत्वे हेतुः ब्रह्मानन्द-रसानुभूति-कलितैरिति, श्रुतिसुखैरिति श्रवणकालेपि आनन्दकरैरित्यनेन तदर्थमनुसंधाय यद्यनुभवउत्पद्येत तादात्विकः आनन्दः किमु वक्तव्य इति भावः।।४१।।

पूर्वं भीतं प्रपन्नं इत्यत्रोक्तां भीतिं स्पष्टयति सहसा स्वस्मिन्ननु-ग्रहसिध्यर्थम्। कथमित्यादिना।

कथं तरेयं भवसिंधुमेतं का वा गतिर्मे कतमोस्त्युपायः।
जाने न किंचित्कृपयाव मां प्रभो संसारदुःख-क्षतिमातनुष्व ।।४२।।

एतं बहुविध-दुर्वार-दुःखजालजटिलं भवसिंधुं कथं तरेयम्। एवमेव यदि वर्तेय मे कावा गतिः? मया किं तावत्प्राप्यं? सर्वथा दुःखमेवेति भावः। अतः कतमोस्त्युपायः एतद्भवसिंधु-तरणे कोवोपायोस्ति? अहं तावत् किंचिदपि न जाने। मामव एवं भीतं परिपाहि। अवनं स्पष्टम् प्रार्थयते संसारदुःख-क्षतिमातनुष्वेति। सांसारिक-शोकं समूल-घातं जहीत्यर्थः।।४२।।

इदानीं गुरोः कर्तव्यमुपदिशति, तथेत्यादिना, श्लोकद्वयेन।

तथावदन्तं शरणागतं स्वं, संसारदावानल-तापतप्तम्।
निरीक्ष्य कारुण्यरसार्द्र-दृष्टया दद्यादभीतिं सहसा महात्मा।।४३।।

विद्वान्स तस्मा उपसत्तिमीयुषे मुमुक्षवे साधु यथोक्त-कारिणे।
प्रशान्तचित्ताय शमान्विताय तत्त्वोपदेशं कृपयैव कुर्यात् ।।४४।।

तथावदन्तमित्युक्त्या वाग्व्यापारेण तदीयाधिकारस्य आन्तरस्य सम्यज्ज्ञातुं शक्यत्वात् अधिकारिणं ज्ञात्वैव अभयदानोपदेशादिकं गुरुभिः कर्तव्यमिति द्योतितम्। संसारदावानल-तापतप्तं, स्वं स्वात्मानं शरणागतं रक्षकत्वेन मत्वा प्राप्तं, कारुण्यरसार्द्रदृष्ट्या निरीक्ष्य, महात्मा अक्षुद्रबुद्धिः, गुरुः सहसाऽभीतिं दद्यादित्यनेन भीताः सहसा भीत्या मोचनीया इति व्यंजितं। अभयदानेन निवृत्तभीतेरेव पुरुषस्य उपदिष्टार्थग्रहणादौ सामर्थ्यं संभवतीति भावः। भीतस्य भयं शक्तेन बहुकालं न स्थापनीयं इति च सहसेत्युक्तम्। भीतस्याभयदानं प्रथमतः कर्तव्यमित्युक्त्वा अधिकारानुसारेण उपदेशः अनन्तरकालिक इति बोधयति विद्वानित्यादिना।

स विद्वान् ब्रह्मवित्तमो देशिकः, उपसत्तिमीयुषे विधिवत्समीपंगताय मुमुक्षवे मोक्षं कामयमानाय, साधुयथोक्तकारिणे सम्यग्विहितानुष्ठात्रे। एतेन शिष्टत्वमुक्तम्। "नाविरतो दुश्चरितात् नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" इत्युक्तत्वात्। श्रोत्रियत्वं अवृजिनत्वं मोक्षकामव्यतिरिक्त-कामशून्यत्वम् चशिष्ये अवेक्षणीयमिति भावः। प्रशान्तचित्ताय देहादिब्रह्मपर्यन्तभोग्यवस्तुनो विरज्य, स्वलक्ष्ये नियतावस्थितमनस्काय, शमान्विताय निगृहीत-बहिरिन्द्रियाय, एतेन शमादिषट्कमुक्तं अधिकारिविशेषणं। तस्मै वैराग्यादिगुणगणमण्डिताय, तत्वोपदेशं कृपया तदीयदुःखप्रहाणेच्छया आप्तकामस्य स्पृहान्तराभावात् कुर्यादिवेत्येवकारो भिन्नक्रमः। अधिकारिणि लब्धे नोदासितव्यम्, पात्रे दत्ता ब्रह्मविद्या लोकानुग्रहार्थं प्रतिष्ठिताभवतीति भावः। इत्थं च सर्वानर्थ-हेतुभूताविद्यानिवर्तक-ब्रह्मविद्यापारंपर्या-विच्छेदः स्वशिष्यमोचनं च उपदेशस्य फलं। तत्र गुरुशिष्यसंवादरूपेण प्रकरणप्रणयनम् सुलभतया तत्वस्य श्रोतृबुध्यारोहाय। अत एव किलाख्यात्याख्यायिकां तत्र तत्र श्रुतिरपि। तेन गुरुलक्षणं शिष्यलक्षणं प्रष्टव्याद्यंशाः सर्वे अनायासेन अस्माभिः ज्ञातुं शक्यन्ते इति ॥४४॥

परमकारुणिको गुरुः शिष्येण "कथं तरेयं भवसिंधुमेतं" इत्यादिना दर्शितां भीतिं झटिति निनाशयिषुराह। माभैष्टेति।

माभैष्ट विद्वंस्तव नास्त्यपायः संसारसिंधोस्तरणेस्त्युपायः।
येनैव याता यतयोस्य पारं तमेव मार्गं तव निर्दिशामि ॥४५॥

हे विद्वन् भवान् माभैष्ट, भवतो भयं माभूदिति सहसा अभीतिर्दत्ता। विद्वन्निति संबोधयन् विवेकादिकं संपाद्य गुरुकरुणां विना दुःखतरणं नभवतीति मां प्राप्तस्त्वं ज्ञातव्यं जानीष एव इति सूचयति, तादृशस्य तव साधुयथोक्त कारिणः नास्त्यपायः "नहि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति" इति स्मृतेः। अतः कथं तरेयम्, कावा गतिरिति मैव भैषीरित्यर्थः। एवं मा भैष्ट तव कल्याणकर्तुः अपायो नास्तीति तमाश्वास्य कतमोस्त्युपायः इत्यस्य उत्तरमाह संसारसिंधोस्तरणेस्त्युपाय इति। तत्र सम्यग्विश्वासोत्पत्त्यर्थं तमुपायं सप्रमाणं कथयति। येनैव मार्गेण अस्य संसारसिंधोः पारं अन्तं यतयः प्रयत्नशीलाः संन्यासिनः, याताः तमेव मार्गं तव निर्दिशामि उपदिशामीत्यर्थः ॥४५॥

तादृशमार्ग-शुश्रूषाया-मौत्कटच-सिध्यर्थ पुनरपि सामान्यरूपेणैव उपायं निर्दिशति। अस्तीति।

अस्त्युपायो महान्कश्चित् संसारभयनाशनः।
तेन तीर्त्वा भवाम्भोधिं परमानन्दमाप्स्यसि ॥४६॥

संसारभयनाशनः महान् बह्वायास-साध्यसाधनसाध्यः कश्चिदुपायोस्ति, तेन वक्ष्यमाणोपायेन भवाम्भोधिं दुस्तरं संसारसागरं तीर्त्वा तन्मूलभूतां अविद्यां भंक्त्वा परमानन्दं निरवधिकं शाश्वतं संतोषं, आप्स्यसि लप्स्यसे इत्यर्थः। तेन दुःखनिवृत्तिरेव त्वया काम्यते मयोपदेक्ष्यमाणोपायेन तु दुःखमप्यत्यंतं निवर्तते, नित्यनिरतिशयानन्दाविर्भावश्च तव भवतीति शिष्यः अत्यन्तमाप्यायित इति भावः ॥४६॥

तमुपायं विशेषतो निर्दिशति। वेदान्तेति।

वेदान्तार्थ-विचारेण जायते ज्ञानमुत्तमम्।
तेनात्यंतिक-संसारदुःखनाशो भवत्यनु ॥४७॥

वेदानामन्ताः वेदान्ताः उपनिषदः तासां योर्थः तद्विचारेण, उपक्रमोपसंहारादि-षड्विध-तात्पर्यलिंगैः प्रतिपाद्यमानः सजातीय-

विजातीय-स्वगतभेदरहितः नित्यशुद्ध-बुद्धमुक्त-स्वभावः परमात्मा तस्य विचारेण तन्निर्णयानुकूलमानस-व्यापारेण, उत्तमं ज्ञानं संशयभावनाद्यशबलितं ज्ञानं निर्णयः जायते। तेन निर्णयेन आत्यंतिक-संसारदुःखनाशः स्वसमानाधिकरण-दुःखप्रागभावासमानकालिकः दुःखनाशः, अनु तन्निर्णयानुपदं भवति भविष्यतीत्यर्थः ॥४७॥

इदानीं तादृशनिर्णया-साधारण-हेतूनाह। श्रद्धेत्यादिना।

श्रद्धाभक्ति-ध्यानयोगान् मुमुक्षोः मुक्तेर्हेतून् वक्ति साक्षाच्छ्रुतेर्गीः।
योवा एतेष्वेव तिष्ठत्यमुष्य मोक्षोऽविद्याकल्पिताद्देहबन्धात् ॥४८॥

तत्र श्रद्धा-गुरुवेदान्त-वाक्यविश्वासः शास्त्रस्य गुरुवाक्यस्येत्यादिना लक्षिता। भक्तिः स्वस्वरूपानुसंधानं निदिध्यासनं। ध्यानं, "तत्र प्रत्ययैकतानता ध्यानं" इति सूत्रितं "सम्यगास्थापनं बुद्धेः शुद्धेः ब्रह्मणि सर्वदेति" लक्षितम् समाधानं। योगः "योगश्चित्तवृत्तिनिरोधः" इति सूत्रितः। तत्र श्रद्धा सर्वत्र हेतुः। भक्तिध्यानयोगानां मध्ये उत्तरोत्तरस्य पूर्वपूर्वहेतुत्वं। चित्तवृत्तिनिरोधे समाधानस्य तस्मिन् श्रुताचार्योपदेशमनु स्वस्वरूपानुसंधानरूपनिदिध्यासनस्य सम्भवात्। यद्वा ध्यै चिन्तायामिति धातोः युक्तिभिरनुचिन्तनरूपं मननं निदिध्यासन-साक्षात्कारणमुच्यते ध्यानशब्देन, ज्ञानप्रतिवन्धक-सकलदुरित-निवर्तकं सगुणध्यानं वा। अत्रोभयत्रापि चित्तबाह्यवृत्ति-निरोधरूप-योगस्य हेतुत्वं अस्त्येव। यद्वा युज्यते सम्बध्यते आत्मसाक्षात्कारेणानेनेति योगः, भक्तिश्चासौ योगः, ध्यानं च तद्योगः इति भक्तियोगः ध्यानयोगः इति वा संबन्धः। मुमुक्षोः पुरुषस्य मुक्तेः बन्धनिवृत्तेः, हेतून् श्रुतेर्गीः "श्रद्धाभक्ति-ध्यानयोगादवेहि" इति कैवल्योपनिषत्, साक्षाद्वक्ति प्रत्यक्षश्रुतिरित्यर्थः। यद्वा मुक्तेः मुक्तिहेतुज्ञानस्य साक्षाद्धेतून् साक्षात्कारणानीति अवेहीति पदघटिता श्रुतिः वक्ति इति वा अन्वयः। यो वै पुरुषः एतेष्वेव श्रद्धाभक्ति-ध्यानयोगेषु तिष्ठति, श्रद्धालुः भक्तिमान् ध्याता योगी च सदा भवति, अमुष्य अदश्शब्दप्रयोगेण तादृशाधिकारिणः दुर्लभत्वं सूचयति अदसस्तु विप्रकृष्ट-

मित्युक्तेः। तस्य अविद्याकल्पितात् अज्ञानमूलकात् देहबन्धात् अहंकारादि-देहबन्धात्, मोक्षः निवृत्तिः सिध्यत्येवेति शेषः। योवा इत्यत्र वै इत्यवधारणे, सअन्ते सम्बन्धनीयः। एतेष्वेवेत्यत्र अवधारणं उक्त-साधनान्य-निष्ठत्वं वारयति ॥४८॥

इदानीं गुरुः संग्रहेण शिष्यं प्रति संसृतिहेतुं तन्निदानं तन्निवृत्युपायं च सकारणमुपदिशति। अज्ञानयोगादिति।

अज्ञानयोगात्परमात्मनस्तव ह्यनात्मबन्धस्तत एव संसृतिः।
तयोर्विवेकोदित-बोधवह्निः अज्ञानकार्यं प्रदहेत्समूलम् ॥४९॥

परमात्मनस्तव अज्ञानयोगात् अनाद्यविद्यासंबन्धात्, अनात्मबन्धः अनात्मसु स्थूलसूक्ष्म-कारणशरीरेष्वात्मत्वबुद्धिः। तत एव जन्मजरामरण-सुखदुःखजडत्वादि-धर्माध्यासरूपा संसृतिः। तयोः आत्मानात्मनोः विवेकोदितबोधवह्निः विवेकः भेदज्ञानं तेन उदितो जातः बोधवह्निः साक्षात्काररूपाग्निः समूलं अज्ञानरूपबीजोपेतं अज्ञानकार्यं अहंकारादि-देहान्तबन्धं तत्प्रयोज्य-जन्मजरामरणादिरूप-संसारं च प्रदहेत् प्रकर्षेण भस्मीकुर्यादित्यर्थः। तथाच संसृतिकारणं अनात्मबन्धः, तत्र कारणं तवाज्ञानयोगः, तन्निवृत्युपायः परमात्मबोधः तत्र कारणं आत्मानात्म-विवेकः इति संग्रहेणोक्तम्। तेन वेदान्तविचारजन्योत्तमज्ञानस्य संसारदुःख-नाशकत्वविषये उपपत्तिः प्रदर्शिता आज्ञानिकस्य बन्धस्य ज्ञानादेव निवृत्तिः नान्यत इति ॥४९॥

इत्थं गुरुमुखारविन्द-निर्गलित-वाक्सुधास्यन्दानन्दितः शिष्यः तन्मुख-कलश-निरर्गल-निर्गलद्वाक्य-पीयूषपारावारे गाढं मिमंक्षुः स्वकीय-सकल-संदेह-भंजनाय तं प्रष्टुं विनयेन प्रार्थयते।

शिष्य उवाच।

कृपया श्रूयतां स्वामिन् प्रश्नोयं क्रियते मया।
यदुत्तरमहं श्रुत्वा कृतार्थः स्यां भवान्मुखात् ॥५०॥

एतेन गुरुसन्निधावनिवेद्य प्रश्नो न कर्तव्य इति शिष्यधर्मो बोधितः। यस्य उत्तरं यदुत्तरं। तत्र प्रश्नोयं क्रियते मयेत्यनुक्त्वा, प्रथमं कृपया श्रूयतामिति प्रार्थनोत्तरं तदुक्त्या गुरोः स्वस्मिन् दयाभिवृद्धये मानसमार्दवं क्षिप्रजिज्ञासुत्वं च सूचितम्। भवन्मुखाच्छ्रुत्वेत्यनेन स्वस्य अनन्यशरणत्वं गमितम् ॥५०॥

पृच्छति। कोनामेति।

को नाम बन्धः कथमेष आगतः
कथं प्रतिष्ठास्य कथं विमोक्षः।
कोसावनात्मा परमः क आत्मा
तयोर्विवेकः कथमेतदुच्यताम् ॥५१॥

प्रथमं बन्धस्वरूपं पृच्छति कोनाम बन्ध इति, तस्मिन् ज्ञाते तन्निवृत्तिः युक्तेन उपायेन सुकरेति। तत्र कारणं पृच्छति कथमेष आगत इति, तस्य स्थितौ हेतुं पृच्छति कथं प्रतिष्ठास्येति, अस्य बन्धस्य प्रतिष्ठा चिरकालं स्थितिः, कथं कुतः, केन हेतुनेति यावत्। विमोक्षः निवृत्तिः। गुरुणा परमात्मनस्तवानात्मबन्ध इत्युक्तत्वात्, कोसावनात्मा परम आत्मा कः? तयोर्विवेकोदितेत्युक्तत्वात्, तयोः अनात्मपरमात्मनोः विवेकः भेदग्रहः कथं जायते, एतत्सर्वं उच्यतां दयया विस्तरेण उच्यतामिति भावः। यद्यपि श्रीचरणसंग्रहोक्त्या परमात्मनो मे अज्ञानयोगात् अनात्मबन्ध इत्युक्त्या, कथमेष आगत इति किंचिज्ज्ञातमिव, तयो-र्विवेकोदित-बोधवह्नि-रज्ञानकार्यं समूलं प्रदहेदित्यनेन कथं विमोक्ष इत्यपि किंचिज्ज्ञात-मिव, अथापि केवलं शब्दमात्रश्रवणेन किंचिज्ज्ञातार्थस्यापि विस्तरेण तन्निराकांक्षनिर्णयार्थं बन्धस्वरूपस्य तत्स्थितिहेतोः आत्मानात्मविवेकस्य च सुतरामज्ञातत्वात् एतत्सर्वं सम्यक्छ्रावयित्वा कृतार्थयितव्यः दीन-दीनोयं जनः इति भावः ॥५१॥

अनया प्रश्नवैखर्या पूर्वज्ञातत्रिकरणशुध्या च ब्रह्मविद्यायामुत्तमाधि-कारिणं मत्वा ब्रह्मविचारे झटिति तस्य प्रवेशार्थं श्लाघते। ब्रह्म-विदुत्तमेनमहात्मना श्लाघितः स्वमनोगतं सकलं दुःखं दूरीकृत्य विचारो-त्कमनाः ऐदंपर्येण परमात्मानं विचार्य झटिति कृतार्थः स्यादिति भावः।

श्री गुरुरुवाच ।

श्रीयुतश्चासौ गुरुश्च श्रीगुरुः, "ऋचस्सामानि यजूंपि, सा हि श्रीरमृता सताम्" इति श्रुत्या ऋगादीनां शब्दरूपाणामेव अमृतसंपद्रूपत्वे सकलवेदान्तान् तत्प्रतिपाद्यमर्थं च साक्षात्कृतवतो गुरोश्श्रीमत्वे किं वक्तव्यम्? सूर्यादि-सकल-तेजोभानहेतुभूतब्रह्मतेजसा सम्पन्न इत्यर्थः। तादृशः शिष्यान्तरान्धकारनिरोधकः श्रीगुरुः शिष्येण पृष्टस्य उत्तरमुवाच।

आदौ तन्मनोविकासार्थं श्लाघते। धन्योसीति।

धन्योसि कृतकृत्योसि पावितं ते कुलं त्वया।
यदविद्याबन्धमुक्त्या ब्रह्मीभवितुमिच्छसि ॥५२॥

धन्यः धनार्हः, "न खलु धनत्वं जातिः यस्य यदिष्टं तदेव तस्य धनं। तत्तदिव पामराणां इत्युक्तरीत्या विद्वाद्भिः धनत्वेन सम्मतवैराग्यादिभाग्य-भागसीत्यर्थः। तत्र हेतुः कृतकृत्योसीति, शास्त्रविहित-कर्मानुष्ठानेन शुद्धचित्तोसीत्यर्थः तदभावे संसारे वैराग्यानुत्पत्तेः। कृतानि कृत्यानि शास्त्रविहितानि येन स्ववर्णाश्रमोचितानि कर्माणि साध्वनुष्ठाय चित्तं संशोध्य जाततीव्रवैराग्यः मुमुक्षुरसि। त्वया एतादृशेन ते कुलं वंशः, सर्वोपि पावितम् पवित्रीकृतः। उक्तं हि "कुलं पवित्रं जननी कृतार्था विश्वंभरा पुण्यवती चतेन। अपार-सच्चित्सुख-सागरेस्मिन् लीनं परे ब्रह्मणि यस्य चेतः" इति "स्नातं तेन समस्ततीर्थ-सलिले सर्वापि दत्तावनी, यज्ञानां च सहस्रमिष्टमखिला देवाश्च संपूजिताः। संसाराच्च समुद्धता-स्वपितर-स्त्रैलोक्यपूज्योप्यसौ, यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात्" इति च। यद्यपीदानीं तस्य ज्ञानं न जातं, अथापि गुरूपदेशश्रवण-समनन्तरमेव उत्तमाधिकारित्वात् स जातज्ञानो भवति। "परिपक्वमतेः सकृच्छ्रुतं जनयेदात्मधियं श्रुतेर्वचः" इति माधवीयशंकरविजये श्रीमदाचार्योक्तेः। "अत्यन्तवैराग्यवतः समाधिः" इत्यत्रैव वक्ष्यमाणत्वाच्च। क्षिप्रमेव ब्रह्मविलीनमनस्को भूत्वा कुलं भुवं च पावयिष्यतीति भावः। "न विषयभोगोभाग्यं, योग्यं खलुयत्र जन्तुमात्रमपि। ब्रह्मेन्द्ररुद्रमृग्यं भाग्यं विषयेषु वैराग्यम्" इति वैराग्य-भाग्यवत्वेन महापुण्यशालित्वात् इदानीमपि तस्य वंशपावयितृत्वमस्त्येव।

तत्र हेतुं स्पष्टयति यद्यस्मात् कारणात् अविद्यावन्धमुक्त्या अविद्या-प्रयोज्याहंकारादि-देहान्तवन्धपरित्यागेन, ब्रह्मीभवितुं ब्रह्मस्वरूपेणैव वर्तितुं इच्छसि तस्मादिति अनेन तीव्रवैराग्यानन्तर-कालिक-तीव्रमुमुक्षा उक्ता। एतादृशः अस्मिन्नेव जन्मनि परं ब्रह्म साक्षात्कृत्य कुलं जगच्च पवित्र-यिष्यतीत्यभिप्रायः। ननु ब्रह्मीभवितुमित्यत्र "अभूततद्भावे च्विः" इत्यनुशासनानुसारेण अभूतः पूर्वमस्थितः ब्रह्मभावः पश्चाद्भविष्यतीति प्रतीयते, तर्हि ब्रह्मभावस्य आगन्तुकत्वात् तद्रूपस्य मोक्षस्या प्यनित्यत्व-मिति चेन्न, यद्यपि ब्रह्मैव जीवरूपेण वर्तते इति सर्वदा ब्रह्मभाव इष्ट एव वर्तते, अथापि इदानीमज्ञातत्वात् अज्ञातत्व-ज्ञातत्वकृत-विशेषमाश्रित्य ब्रह्मी-भवितुमिति च्वि-प्रत्ययप्रयोग इति मन्तव्यम्। इदानी-मज्ञानवशात् अब्रह्म-रूपेण ब्रह्मण एव सतः स्थितिः, ज्ञानानन्तरं तु ब्रह्मात्मनैवावस्थानमित्या-शयः। एतेन ब्रह्मभावस्या-गन्तुकत्वशंका परास्ता ॥५२॥

तत्र प्रथमतः सर्वेषां भवबन्ध-विमुक्त्यर्थं प्रवृत्तिसिद्धये तस्याः विमुक्तेः स्वस्वमात्रलभ्यत्वं लोकानुजिघृक्षया उपदिशति गुरुः। तत्र जनाउदासीना भूत्वा ईश्वरानुग्रहलब्धं जन्म व्यर्थयित्वा दुःखपरंपरां मानुभूवन्नित्यभि-प्रायेण। ऋणमोचनेति।

ऋणमोचनकर्तारः पितुस्सन्ति सुतादयः।
बन्धमोचनकर्ता तु स्वस्मादन्यो न कश्चन ॥५३॥

लोके तावत् पुत्रपौत्रादयः पितुः ऋणमोचनकर्तारः सन्ति। ऋणात् शास्त्रीयात् लौकिकाद्वा मोचयन्ति पुत्रप्राप्त्या तद्वाक्यानुपालनेन अर्थ-समर्पणेन वा। बन्धमोचनकर्ता तु अनात्माहंकारादि-देहान्तबन्धमोचयिता तु स्वस्मादन्यो न कश्चन, स्वस्य अन्तःकरणाद्यनात्मनि वर्तमानाध्यासः स्वेनैव निवर्तनीयः नान्यस्तत्र प्रभुरित्यर्थः ॥५३॥

स्वीयतद्विषयकप्रत्यक्षप्रमायाएव स्वीयतद्विषयक-प्रत्क्षभ्रमनिवर्तक-त्वात्। यदि पिता मन्दान्धकारे पतितां रज्जुं सर्पं मत्वा बिभेति, तत्पुत्रः तां रज्जुं साक्षात्कुर्वन्नपि पितुः साक्षात्कारमन्तरा नतद्भयं निवर्तयितुमीष्टे, तद्वत् स्वानुभवसिद्धो बन्धः स्वेनैव निवर्तनीयः नान्येनेत्यमुमर्थं वहुभिर्दृष्टान्तैः द्रढयन्त्याचार्याः, दृढनिश्चितैतदर्थाः सहसा प्रवर्तन्तां जनाः स्वबन्धमुक्तय इति। मस्तकेति।

मस्तकन्यस्तभारादेः दुःखमन्यैर्निवार्यते ।
क्षुधादिकृतदुःखं तु विना स्वेन न केनचित् ।।५४।।

मस्तके न्यस्तः भारः यस्य, आदिपदेन श्रृंखलादि-निगडित-करचरणादिः तस्य दुःखं अन्यैर्निवार्यते भाराधस्स्थापनादिना श्रृंखलादि-मोचनेन वा। क्षुधादिकृतदुःखं स्वेन विना केनचिदन्येन न निवार्यत इत्यर्थः। नह्यन्यस्मिन् पुत्रादौ भुंजाने वारि पिबति वा पितुः क्षुत्पिपासा-निवृत्ति-र्दृष्टा ।।५४।।

दृष्टान्तान्तरमाह। पथ्यमिति।

पथ्यमौषधसेवा च क्रियते येन रोगिणा ।
आरोग्यसिद्धिर्दृष्टास्य नान्यानुष्ठितकर्मणा ।।५५।।

येन रोगिणा पथ्यं सेव्यते औषधसेवा च क्रियते तस्यैवारोग्यसिद्धिः दृष्टा। अन्येन पथ्यमौषधसेवा च क्रियते। चेत् अन्यदीयरोगनिवृत्तिः न दृष्टेत्यथः। पथ्यमौषधसेवा चेति द्वयकथनेन दृढतरसाधनचतुष्टय-संपत्तिः वेदान्तश्रवणं च ज्ञानहेतुरिति व्यंजितम् ।।५५।।

वस्तुस्वरूपं स्फुटबोधचक्षुषा स्वेनैव वेद्यं न तु पण्डितेन।
चन्द्रस्वरूपं निजचक्षुषैव ज्ञातव्यमन्यैरवगम्यते किम् ।।५६।।

स्फुटः निर्मलः संशयत्वाद्यनास्कंदितः यो बोधः श्रवणमनन-निदिध्यासनजातः साक्षात्कारः तेन वस्तु-स्वरूपं आत्मरूपवस्तुयाथात्म्यं परमात्माभिन्नत्वमिति यावत्। स्वेनैव वेद्यं विषयीकर्तव्यम् नतु स्वभिन्नेन केनचित्पण्डितेन वेद्यं। शुकवामदेवादयः परं ब्रह्म साक्षात्कृत्य मुक्ता बभूवुः। तेन इतरेषां किं जातमिति भावः। तत्रानुरूपं दृष्टान्तमाह तापवारकाह्लादजनक-चन्द्रस्वरूपं निजचक्षुषैव ज्ञातव्यम्। अन्यैः चक्षु-र्हीनैः अवगम्यते किम्? यद्वा चक्षुष्मद्भिरप्यन्यैः स्वभिन्नैरवगम्यते चेत् एतदीयतापं हरति वा एतमाह्लादयति वा चन्द्रस्वरूपं? तद्वदित्यर्थः ।।५६।।

लोकप्रसिद्ध-पाशादिबन्धं अन्यो मोचयितुं शक्नुयात नानादि-सिद्धबन्धमित्याह। अविद्येति।

अविद्याकाम-कर्मादिपाशबन्धं विमोचितुं।
कश्शक्नुयाद्विनात्मानं कल्पकोटिशतैरपि ॥५७॥

पूर्वपूर्वस्य उत्तरोत्तरहेतुत्वं, स्वस्वरूपाज्ञानात् बाह्येषु कामः, ततः कर्मणि प्रवृत्तिः, नहि लब्धसाक्षात्कारा: किंचित्कामयंते "कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः" "रसोप्यस्य परं दृष्ट्वा निवर्तते" इत्यादि-श्रुतिस्मृतिभ्यः। कामाभावे कर्म कुतः? "यद्यद्धि कुरुते जन्तुः तत्तत्कामस्य चेष्टितं" इति स्मृतेः। तथाच अज्ञानाशाधर्माधर्म-रूपपाशप्रयुक्तं बन्धं अनात्माध्यासं विमोचितुं, आत्मसाक्षात्कारेण विना त्यक्तुं, कल्प-कोटिशतैरपि कल्पानां कोटयः तेषां शतानि तैरपि आत्मानं विना कोवा शक्नुयादित्यर्थः। अतीतानन्तरश्लोकोक्तरीत्या स्वस्वरूपस्य स्वेनैव साक्षात्कर्तव्यत्वात् तं विना अज्ञानानिवृत्तौ कामकर्मादेः नैव निवृत्तिरिति भावः। आदिपदेन जन्मजरामरणसुख-दुःखादिपरिग्रहः ॥५७॥

इदानीं "वदन्तु शास्त्राणि" इत्यत्रोक्तरीत्या गुरुशिष्यसंवाद-रूपेस्मिन् ग्रन्थे 'तमेव विदित्वा-तिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' "ज्ञानादेव तु कैवल्यम्" इत्यादिश्रुत्यनुसारेण ब्रह्मात्मैकत्वबोधव्यति-रिक्तस्य मोक्षहेतुत्वं व्यासेधति। न योगेनेति।

न योगेन न सांख्येन कर्मणा नो न विद्यया।
ब्रह्मात्मैकत्वबोधेन मोक्षस्सिध्यति नान्यथा ॥५८॥

मोक्षः ब्रह्मस्वरूपेणावस्थान-लक्षणमोक्षः, ब्रह्मात्मैकत्वबोधेन ब्रह्म च आत्मा च ब्रह्मात्मानौ तयोरेकत्वमभेदः तद्बोधः तत्साक्षात्कारः तेन सिध्यति अभिव्यज्यते॥ नान्यथा अन्येन प्रकारेण न सिध्यतीत्यर्थः। तदेव विशदयति, योगेन मोक्षो न सिध्यति, योगशास्त्रजन्यज्ञानेन भेद-विषयेण, चित्तवृत्तिनिरोध-रूपयोगेन वा मोक्षो न भवतीत्यर्थः। एवं सांख्येन कपिलमहर्षिप्रणीत-सांख्यशास्त्रजन्यज्ञानेन वा नानात्मविषयेण मोक्षो न सिध्यति। कर्मणा पूर्वकाण्डविहित-यज्ञादिकर्मणा न सिध्यति। न विद्ययेति, उपनिषद्विहितयापि विद्यया सगुणोपासनया कैवल्यरूपमोक्षो न सिध्यतीति। तत्र योगसांख्य-शास्त्रजन्यज्ञानस्य भेदविषयत्वात्, "यदाह्ये-वैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति" इति अभयप्रापकत्व-

मेव नास्ति। "नास्त्यकृतः कृतेन, अमृतत्वस्य नाशास्ति वित्तेन" इत्यादिश्रुतिभ्यः नित्यमोक्षाभिव्यंजकत्वं कर्मणः नास्तीत्यवगम्यते। नित्यत्वं च मोक्षस्य "न स पुनरावर्तते" इति श्रुत्यावगम्यते, सः ब्रह्मलोकं गतः सगुणोपासकः पुरुषः पुनर्नावर्तते न संसारीभवति, जन्मभाङ्न भवतीत्यर्थः। तत्र कारणं मुक्तत्वमेव। तच्च ब्रह्मस्वरूपेणावस्थानमेव। तथाच ब्रह्मणः "यो वै भूमा तदमृतं" "सत्यं ज्ञानमनन्तं ब्रह्म" "नित्यो नित्यानां" इत्यादिश्रुतिशतेभ्यः नित्यत्वेन प्रतीयमानत्वात् तत्स्वरूपमोक्षस्यापि नित्यत्वम्। उक्तं च शास्त्रान्तिमाधिकरणभाष्ये "सम्यग्दर्शन-विध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः। तदाश्रयणेनैव हि सगुणशरणानामपि अनावृत्तिसिद्धिरिति"। तेन ब्रह्मलोकंगतानां तत्रैव कृतसाक्षात्काराणां कैवल्यरूपमोक्षः। "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इत्यादिश्रुतिस्मृतिभ्योवगम्यते। तत्र परामृतात् वेदान्तविचारजनितोत्कृष्टज्ञानात् इत्यर्थः। कृतात्मानः कृतात्मसाक्षात्कारा इत्यर्थः। यथा कण्ठगतमेव चामीकरं कवचादिना।

तं अन्विष्यान्विष्य श्रान्तः आप्तवाक्येन, वर्तते किलात्रैव तव कण्ठ कुतो वा भ्राम्यति भवान् इत्यनेन बोधितः अप्राप्तमिव प्राप्नोति स्थितस्यैव चामीकरस्य अभिव्यंजकं तदाप्तवाक्यजन्यज्ञानं, एवं सिद्धस्यैव ब्रह्मभावरूपमोक्षस्य अभिव्यंजकः तत्वमसीत्यादि-गुरूपदिश्यमान-महावाक्यजन्यसाक्षात्कारः इति न ज्ञानजन्यत्वशंका तत्र कार्या। यथा पूर्वमेव कौन्तेयस्सन्नपि कर्णः बाल्यात्प्रभृति राधया पोषितत्वात् स्वात्मानं राधेयं मन्वानः कुन्तीवाक्यादात्मानं कौन्तेयं मेने। न तावता तेन कौन्तेयत्वं नूतनमलम्भि। अपितु पूर्वमज्ञातं कुन्तीवाक्याज्ज्ञातं। एवं प्रकृतेपि वेदितव्यम्। यथावा श्रीरामेण "आत्मानं मानुषं मन्ये रामं" इत्याद्यनुसारेण स्वात्मानं मनुष्यं मन्येन एकश्शृंगो वराहस्त्वं इत्यादिपरमेष्ठिवाक्यैः महाविष्णुरेव त्वमिति बोधितेन स्वस्वरूपं ज्ञातं न तत्र अविद्यमानं महाविष्णुत्वमागतं अपितु, स्थितमभिव्यंजितं तद्वच्चेति ज्ञेयम्। तथाच उत्पाद्याप्य-संस्कार्यविकार्याणां अन्यतमस्य कर्मफलत्वं दृष्टं, यथा स्वर्गस्य यागोत्पाद्यत्वं, शब्दराशिरूपवेदस्य अध्ययनाप्यत्वं, व्रीहीणां प्रोक्षणादि-संस्कारसंस्कार्यत्वं, अवघातादिभिः वैतुष्यसंपादनद्वारा विकार्यत्वं तेषां। तत्र नित्यत्वात् नोत्पाद्यत्वं

मोक्षस्य, आत्मस्वरूपत्वादनाप्यत्वं, नित्यशुद्ध-ब्रह्मस्वरूपत्वात् न संस्कार्यत्वं, निर्विकारब्रह्मस्वरूपत्वात् न विकार्यत्वम्। एतत्तु समन्वय-सूत्रभाष्ये विस्तरेणोपपादितं भगवत्पादैः। अतः कर्मफलत्वव्यापकोत्पाद्यत्वाद्यन्यतम-धर्माभावात् कर्मणा नो सिध्यतीत्यर्थः। विद्यां चाविद्यां च, विद्यया तदारोहंति, इत्यादौ विद्याशब्दस्य उपासनापरत्वं सिध्यति। अतः विद्यापदस्य आत्मविद्याव्यतिरिक्तापरविद्याऽर्थः। तयाब्रह्मस्वरूपावस्थान-लक्षणमोक्षः न साक्षात्सिध्यतीत्यर्थः ॥५८॥

ब्रह्मात्मैकत्वबोधेनैव मोक्षः सिध्यति नान्यथेत्यमुमर्थं दृष्टान्तेन विशदयति। वीणाया इति।

वीणाया रूपसौंदर्यं तन्त्रीवादनसौष्ठवम्।
प्रजारंजनमात्रं तन्न साम्राज्याय कल्पते ॥५९॥

रंजनाद्राजा " राजा प्रकृतिरंजनात् " इत्युक्तानुसारेण कश्चिद्वैणिकः रूपेण जनमनोहरां कांचिद्वीणामादाय तत्तंत्रीः सूष्ठु वादयति चेत् यद्यपि रज्यन्ते प्रजाः सुंदरवीणादर्शनेन सौष्टवोपेत-तत्तंत्रीवादनेन च। अथापि तद्रंजनं न वैणिकस्य साम्राज्याय सम्राड्भावाय कल्पते। तद्वदात्मैक्यबोधेन विना योगशास्त्रादिजन्यज्ञानं वा कर्म वा उपासनं वा न साक्षात्कैवल्याय कल्पत इति भावः। वीणाया रूपसौंदर्यं सुंदररूपवत्त्वमिति यावत्। तन्त्र्याः वादने सौष्ठवं वैणिकनिष्ठ-प्रजारंजनमात्रं तत् न साम्राज्याय कल्पत इत्यर्थः ॥५९॥

केवलं शब्दश्रवणमात्रेण मनोरंजकविषये कथयित्वा अर्थतोपि ये मनो रंजयन्ति तेषामपि पूर्वोक्तज्ञानाभावे नैव मुक्तिरित्याह। वाग्वैखरीति।

वाग्वैखरी शब्दझरी शास्त्रव्याख्यानकौशलम्।
वैदुष्यं विदुषांतद्वद्भुक्तये न तु मुक्तये ॥६०॥

वाग्वैखरी सरलपदबन्धविशिष्टा वाक्, शब्दझरी निरर्गलनिर्गलंती वाक् वाक्प्रयोगचातुर्यं शब्दप्रवाहः, शास्त्रव्याख्यानकौशलं शास्त्रस्य व्याख्यानं " पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना, आक्षेपस्य समाधानं व्याख्यानं पंचलक्षणम् " इत्युक्तरीत्या शास्त्रार्थकथने कौशलं, प्रावीण्यं।

एतादृशं विदुषां वैदुष्यमपि, तद्वत् वीणावादनादिवत् भुक्तये प्रतिष्ठा-संपादनादिद्वारा भवति। मुक्तये तु न भवति। तत्र पूर्वोक्तसाक्षात्कार एव कारणम् इति भावः ॥६०॥

ननु तात्कालिकसुखजनकं वैणिक-कौशलं क्व, श्रवणानन्तरमपि सम्यगंतः प्रविश्य आनन्दहेतुभूतं विदुषां वैदुष्यं क्व, अतस्तस्य तद्वदिति वैणिककौशलसाम्यं न वक्तव्यमिति चेत्, अस्त्वेवं तत्रान्तरं, अथापि आत्मतत्वसाक्षात्काराभावे शास्त्राध्ययनं तज्जन्यकौशलं वा यथोक्तफल-वन्नभवतीत्याह अविज्ञात इति।

अविज्ञाते परे तत्वे शास्त्राधीतिस्तु निष्फला।
विज्ञातेपि परे तत्वे शास्त्राधीतिस्तु निष्फला ॥६१॥

परे कालत्रयाबाध्यत्वेन स्वयंप्रकाशानन्दरूपत्वेन च मिथ्याभूत-जडदुःखादि-रूप देहादिमायान्त-सकल-कार्यकारणापेक्षया उत्कृष्टे, तस्य सर्वस्याधिष्ठानभूते तत्वे निर्गुणे ब्रह्मणि, अविज्ञाते असाक्षात्कृते सति, शास्त्राधीतिस्तु अर्थविचारपर्यन्तवेदान्ताध्ययनमपि निष्फला। यदर्थं विचारः शास्त्रविहितः तस्यालाभे निष्फलत्वं तत्र तत्फललाभपर्यन्तं यथोक्तफलशून्यत्वरूपं सिद्धमेवेति भावः। जन्मांतरकृतसाधनवशात् गर्भस्थेनापि वामदेवेनेव परे तत्त्वे विज्ञाते साक्षात्कृतेपि अनन्तरं फलस्य निष्पन्नत्वात् शास्त्राध्ययनादिकं न कार्यमिति भावः ॥६१॥

यथा महारण्यं प्रविष्टः पुरुषः दिशमज्ञात्वा भ्राम्यति मुधा तथा केवलशब्दजालात्मक-शास्त्रस्यापि विक्षेपहेतुत्वात् तन्निष्ठत्वमपि परित्यज्य परमात्मसाक्षात्कारवतो देशिकात् आत्मयाथात्म्यं साक्षात्कर्तव्यमित्याह। शब्दजालमिति।

शब्दजालं महारण्यं चित्तभ्रमणकारणं।
अतः प्रयत्नात् ज्ञातव्यं तत्त्वज्ञात्तत्त्वमात्मनः ॥६२॥

उपनिषद्रूप-शास्त्रादेव आचार्योपदेशा-त्तत्त्वस्य ज्ञातव्यत्वेपि शास्त्र-कोलाहलो नाश्रयणीयः तद्वासनाया अपि ज्ञानप्रतिबन्धकत्वात्। "लोकवासनया जन्तोः शास्त्रवासनयापि च। देहवासनया ज्ञानं यथावन्नैव जायते" इति वक्ष्यमाणत्वादिति भावः ॥६२॥

ज्ञानमेवाज्ञाननिवर्तकं नान्यदित्याह। अज्ञानेति।

अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषधं विना।
किमु वेदैश्च शास्त्रैश्च किमु मन्त्रैः किमौषधैः ॥६३॥

अज्ञानमेव सर्पः अत्यन्तानर्थकरत्वात्, तेन दष्टस्य आवृतिविक्षेपाभ्यां प्रापितमोहस्य, ब्रह्मज्ञानमेवौषधं ब्रह्मज्ञानौषधं तेन विना, वेदैः ऋगादि-वेदैः, शास्त्रैः व्याकरणादिशास्त्रैश्च किमु प्रयोजनं। मन्त्रैः सप्तकोटिभिः किमु। औषधैः संजीविन्यादिमूलिकाभिर्वा किमु फलं तेषां मध्ये केषामपि अज्ञानसर्पदंशन-प्रयोज्यमोहनिवर्तकत्वाभावादिति भावः ॥६३॥

शब्दमात्रस्य मोक्षाहेतुत्वं दृष्टान्तेनाह। न गच्छतीति।

न गच्छति विना पानं व्याधिरौषध-शब्दतः।
विनापरोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते ॥६४॥

व्याधिः रोगः पानं विना औषधपानं विना, तद्बोधकात् औषधं औषधमिति शब्दोच्चारणात् न गच्छति न निवर्तते, तद्वत् अपरोक्षानुभवं आत्मसाक्षात्कारं विना केवलमुपनिषद्घटकैः ब्रह्मशब्दैः न मुच्यते, निवृत्तवन्धो न भवतीत्यर्थः ॥६४॥

तमेवार्थं तत्वज्ञान-परमकारण-कथनद्वारा भंग्यन्तरेणाह। अकृत्वे-त्यादिना।

अकृत्वा दृश्यविलयं अज्ञात्वा तत्त्वमात्मनः।
बाह्यशब्दैः कुतो मुक्तिरुक्तिमात्रफलैर्नृणाम् ॥६५॥

दृश्यविलयं दृश्यस्य शब्दाजन्यवृत्तिविषयस्य चिद्विषयस्य वा, तेन शश-शृंगादेः ब्रह्मणश्च वारणं अज्ञानान्तस्य जडस्य सर्वस्य ब्रह्मव्यतिरिक्तस्य, विलयं ब्रह्मणि प्रविलापनं अकृत्वा, आत्मनः तत्त्वमज्ञात्वा सजातीय-विजातीय-स्वगतभेदरहितसर्वाधिष्ठान-सत्य-स्वयंप्रकाशानन्दरूपतामज्ञात्वा उक्तिमात्रफलैः उच्चारणमात्रप्रयोजनैः बाह्यशब्दैः आन्तरानुभवं विना उच्चार्यमाणैः अहंब्रह्मास्मीत्यादिशब्दैः नृणां मुक्तिः कुतः, नैव संभव-तीत्यर्थः। किंशब्दः निषेधार्थकः ॥६५॥

एतेन आत्मतत्त्वज्ञाने समस्तदृश्य-प्रविलापनपुरस्सरं ब्रह्ममात्रावशेषणं परमकारणमित्युक्तं व्यतिरेकमुखेन अकृत्वेति, दृश्यप्रविलापने तत्त्वज्ञानं नान्यथेति। एवं तत्त्वज्ञाने मुक्तिः नापरथेति च, मुक्तिहेतुत्वं ज्ञानस्य व्यतिरेकमुखेन कथितम्। तत्रानुरूपं दृष्टान्तमाह। अकृत्वेति।

अकृत्वा शत्रुसंहारं अगत्वाखिलभूश्रियं।
राजाहमितिशब्दान्नो राजा भवितुमर्हति॥६६॥

स्वकीयराज्यभोगप्रतिबन्धकानां शत्रूणां विलयमकृत्वा अखिलभूश्रियं समस्तपृथ्वीसंपदं, अगत्वा अप्राप्य, केवलमहं राजेतिशब्दात् नो राजा भवितुमर्हति राजा भवितुं नो अर्हतीत्यन्वयः। राजत्वे सकलशत्रुविलयपुरस्सरं समस्तभूश्रीप्राप्तिः यथा कारणमेवं सकलदृश्य-प्रविलापनपुरस्सरं आत्मतत्त्वज्ञानं मुक्तावपीति भावः॥६६॥

केवलबाह्यशब्दैः न मुक्तिः अतः आत्मनः तत्त्वं ज्ञातव्यमित्यमुमर्थं सदृष्टान्तं विस्तरेण कथयति आप्तोक्तिमिति।

आप्तोक्तिं खननं तथोपरिशिलापाकर्षणं स्वीकृतिं,
निक्षेपः समपेक्षते न हि बहिः शब्दैस्तु निर्गच्छति।
तद्वद्ब्रह्म-विदोपदेश-मननध्यानादिभिर्लभ्यते,
मायाकार्य-तिरोहितं स्वममलं तत्त्वं न दुर्युक्तिभिः॥६७॥

लोके तावत् भूमेरन्तस्स्थापितः निक्षेपः हिरण्यादिनिधिः, प्राप्तव्यश्चेत् तं दृष्टवतां वा, अंजनविशेषादिना तं विज्ञाय सत्यं कथयतां वा आप्तानां उक्तिं श्रुत्वा भुवं खनित्वा, तत्र निधेरुपरि वर्तमानाच्छादकशिलायाः अपकर्षणं अपसारणं कृत्वा प्राप्तव्यः। न तु निक्षेपः निक्षेप इति शब्दैःबहिः निर्गच्छति। तदिदमुक्तं यन्निक्षेपः हिरण्यादिनिधिः स्वफले आधेये आप्तोक्तिं खननं भुवः तथा उपरिशिलापाकर्षणं तदनंतरं स्वस्य स्वीकृतिं स्वीकारं च समपेक्षते, बहिश्शब्दैस्तु न निर्गच्छति, तु-शब्दोवधारणे नैव निर्गच्छतीति हि लोके प्रसिद्धं। तद्वत् शिलया भूम्या च आव्रियमाणनिधिरिव, स्वं स्वकीयं अमलं स्वतश्शुद्धं तत्त्वं यथात्म्यं ब्रह्मेति यावत्, मायाकार्यतिरोहितं मायया अज्ञानेन तत्कार्यैश्च अहंकारादिदेहान्तैः कोशैः,

तिरोहितं प्रतिबद्धस्फुटभानं ब्रह्मविदोपदेश-मनन-ध्यानादिभि-र्लभ्यते, आ समन्तादुपदेशः ओपदेशः ब्रह्मविदः ओपदेशः ब्रह्मविदोपदेशः। यद्वा ब्रह्मविदेति व्यस्तं पदं तृतीयान्तं, तेन उपदेशे तत्कर्तृकत्वं लभ्यते। ब्रह्मवित्कर्तृकोपदेशः श्रवणं मननं युक्तिभिरनुचिन्तनं ध्यानं निदिध्यासनं, आदिपदेन निर्विकल्पकसमाधि-परिग्रहः। तैर्लभ्यते साक्षात्क्रियते। अत्र ब्रह्मलाभः साक्षात्कारः स्वानन्यत्वात् अन्यादृश-लाभासंभवात्। कण्ठचामीकरादिलब्धलाभस्थले सर्वत्राप्येवमेव वक्तव्यत्वात्। न दुर्युक्तिभिर्लभ्यते "नैषा तर्केण मतिरापनेया" इति श्रुतेः। श्रुत्यनुसारिण्यः युक्तयस्तु अभ्युपेयन्त एव। "पण्डितो मेधावी गान्धारानेवोपसंपद्येत" इति श्रुत्यैव सत्तर्कस्याभ्युपेतत्वात्। दर्शयति किल श्रुतिरेव महामत्स्यादिदृष्टान्तेन असंगत्वमात्मनः सषुप्तौ प्रपंचपरित्यागेन सदात्मना संपृक्ते निष्प्रपंचसदात्मत्वं, कार्यकारणानन्यत्वन्यायेन मृत्पिण्डादिदृष्टान्तैः एकविज्ञानेन सर्वविज्ञानं प्रपंचस्य ब्रह्माव्यतिरेकः, ऊर्णनाभ्यादिदृष्टान्तैः अभिन्ननिमित्तोपादानत्वं, तस्करदृष्टान्तेन सत्याभिसंधस्य मुक्तिः मिथ्याभिसंधस्य बन्ध इत्यादियुक्तिजालं। अतः उक्तं दुर्युक्तिभिरिति ॥६७॥

तस्मात्सर्वप्रयत्नेन भवबन्धविमुक्तये।
स्वेनैव यत्नः कर्तव्यो रोगादेरिव पण्डितैः ॥६८॥

तस्मादिति। यस्मादेवं स्वीयबन्धः अन्येन निवर्तयितुं न शक्यते, स्वेनापि साधनचतुष्टय-संपत्तिमता गुरुमुपसद्य तन्मुखतः वेदान्तान् श्रुत्वा तदर्थं मत्वा निदिध्यास्य निर्विकल्पकनिष्ठया ब्रह्मतत्त्वं स्फुटमवगम्य मोक्तव्यं न केवलं बाह्यशब्दादिभिःमुक्तिः सिध्यति तस्मादित्यर्थः। सर्वप्रयत्नेउक्तश्रवणादिरूपप्रयत्नेन भवबन्धविमुक्तये सांसारिकाविद्यादि-ठ देहान्तबन्धनिवृत्तये स्वैरेव ये तावत् बन्धमनुभवन्ति तैस्स्वैरेव, पण्डितैः बुद्धिमद्भिः, रोगादेः रोगक्षुत्पिपासादेः, विमुक्तये यथा अगदस्वीकाराभ्यवहार-जलपानादिकं स्वयं क्रियते, एवं यत्नः कर्तव्यः। विवेकादिसाधनचतुष्टयं स्थिरतमं संपाद्य सद्गुरुरुपसदनीय इति भावः। अत्र सर्वप्रयत्नेन, भववन्धविमुक्तये यत्नः कर्तव्य इति द्विवारमुक्तत्वात् एवमर्थो युक्त इति भाति ॥६८॥

एवं तीव्रमुमुक्षावन्तं शिष्यं प्रशस्य तदीय-प्रश्नं श्लाघते। यस्त्वयेति।

यस्त्वयाद्य कृतः प्रश्नो वरीयान् शास्त्रसम्मतः।
सूत्रप्रायो निगूढार्थो ज्ञातव्यश्च मुमुक्षुभिः ॥६९॥

न केवलं तीव्रमुमुक्षया उत्तमाधिकारित्वं ते, अपितु मुमुक्षु-ज्ञेयान्यूननतिरिक्तविषयान् क्रोडीकृत्य यदप्राक्षीर्मो, तेनापि मेधावित्व-विद्वत्वोहापोहविचक्षणत्वादि-धर्ममण्डितस्त्वं मुमुक्षूणां सर्वेषां ज्ञातव्य-मार्ग-दर्शकोसीति महात्मना गुरुणा श्लाघितः भक्तिश्रद्धाभरितमनाः क्षिप्रमुक्तं गृह्णातीत्यभिप्रायेण "यस्य देवे परा भक्तिः यथा देवे तथा गुरौ। तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः" इति श्रुतेः॥ अद्य इदानीं, यः प्रश्नः को नाम वन्धइत्यादिरूपः कृतः सः वरीयान् अत्यन्तं वरः। तत्र हेतुमाह शास्त्रविन्मतः, ये तावत् अत्यन्तं शास्त्रविदः तैरेवैवं प्रष्टुं शक्यत इति भावः। तत्र हेतुमाह सूत्रप्राय इति वन्धमोचक-साक्षात्कारार्थं यावत्प्रष्टव्यं सर्वस्यात्रैव पृष्टत्वात् अल्पाक्षरेण संगृहीतेन शब्देन। शब्दस्तु अल्पाक्षरः ज्ञेयार्थस्सर्वोपि अत्र निगूढ इति वदन् सूत्रप्रायत्वं विशदयति निगूढार्थ इति। एतत्प्रकरणग्रन्थस्य उत्तरस्य सर्वस्यापि एतदुत्तररूपत्वात् प्रतिपादनीयार्थस्सर्वोप्यत्र बुद्धिमता शिष्येण उपक्षिप्त इति भावः। अत एव मुमुक्षुभिः ज्ञातव्यः, आत्मानात्म-विवेकजन्य-साक्षात्कारेण हि सहेतुक-वन्धनिवृत्तिरूपमोक्षः उक्तः अज्ञानयोगा-दित्यादिना गुरुणा। सहसा गुरूक्तिं विज्ञाय प्रष्टव्यांशस्य सर्वस्याप्यनव-शेषं अनतिरेकेण पृष्टत्वात् मेधावित्वादिकं शिष्यस्य सम्यगवगम्य गुरुस्तं नितरां श्लाघयामास ॥६९॥

एवं महात्मना श्लाघितं स्वात्मानंधन्यधन्यं मन्वानं शिष्यं स्वोक्तार्थ-ग्रहणाद्यर्थं अवधापयति। श्रुणुष्वावहित इति।

श्रृणुष्वावहितो विद्वन् यन्मया समुदीर्यते।
तदेतच्छ्रवणात्सद्यो भवबन्धाद्विमोक्ष्यसे ॥७०॥

हे विद्वन्! मेधावित्वाद्युक्तात्म-विद्याधिकारविशिष्ट, मया यत्समुदीयते संग्रहेण विस्तरेण च सम्यज्ज्ञानाय यदुच्यते, तत् अविहितः

विषयान्तरमनस्संचाररहितः, श्रद्धया शृणुष्व। एतच्छ्रवणात् यथाविधि मदुक्तवाक्यश्रवणात् सद्यः श्रवणसमनन्तरमेव, आत्मानं साक्षात्कृत्य भव-बन्धात् संसारबन्धात् कर्तृत्वभोक्तृत्व-जन्मजरामरणादि-रूपबन्धा-द्विमोक्ष्यसे नितरां मुच्यस इत्यर्थः ॥७०॥

इदानीं तदीयप्रश्नानुसारेण तेन जिज्ञासितमर्थं विवक्षुः प्रथमतः कथं विमोक्ष इत्यस्य प्रश्नस्योत्तरमाह। ननु "को नाम बन्धः कथमेष आगतः, कथं प्रतिष्ठास्य" इति प्रथमतः कृतप्रश्नत्रयस्य उत्तरमनुक्त्वा तुरीयस्य कथं विमोक्ष इत्यस्य उत्तरकथनमनुचितमिति चेन्न, नह्यत्यंतमग्निना दह्यमाने गृहे क्षिप्रं जलसेकादिना अग्निशान्तिमकृत्वा कुत्राग्निः पतितः, कथं पतितः, इति विचारणेन कालयापनं युक्तं तथासति निरवशेषं गृहस्य दह्यमानत्वात्। तथा सर्वैरप्यज्ञानिभिः सांसारिकबन्धः अनुभूयत एव तीव्रः, तन्निरासे सहसा यत्न आस्थेयः इत्यभिप्रायेण ज्ञातव्यांशस्य मध्ये "अनन्तशास्त्रं बहु वेदितव्यं अल्पश्च कालो बहवश्च विघ्नाः। यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमिश्रम्" इत्यभियुक्तोक्त्या सारभूतमंशं गुरुरादावाह मोक्षस्येत्यादिना, क्षिप्रं मोक्षहेतुं विज्ञाय तल्लाभेन सहसा बन्धान्मुक्तः नित्यानन्दमनुभवत्वित्यभिप्रायेण। किंच आत्मानात्मज्ञानं विना बन्धस्वरूपस्य वक्ष्यमाणस्य ज्ञातुमशक्यत्वाच्च, तत्सर्वं पश्चाद्वक्ष्यामीति-धिया च प्रथमं कथं विमोक्षइत्यस्य उत्तरमाह। मोक्षस्येत्यादिना।

मोक्षस्य हेतुः प्रथमो निगद्यते वैराग्यमत्यंतमनित्य-वस्तुषु।
ततश्शमश्चापि दमस्तितिक्षा न्यासः प्रसक्ताखिलकर्मणां
भृशम्। ॥७१॥

स्फुटं।

ततश्श्रुतिस्तन्मननं सतत्वध्यानं चिरं नित्यनिरंतरं मुनेः।
ततोऽविकल्पं परमेत्य विद्वान् इहैव निर्वाणसुखं समृच्छति
॥७२॥

अनित्यवस्तुषु देहादिब्रह्मपर्यन्तेषु अत्यन्तं वैराग्यं मोक्षस्य प्रथमो हेतुर्निगद्यते, बहुतरविक्षेप-हेतुभूताशाशून्यस्यैव मनसः स्वलक्ष्ये नियता-

वस्थारूप-शमादेः संभवात्। ततश्शमश्च उक्तलक्षणः। चशब्दः उक्त-समुच्चायकः अत्र सर्वेषामपि वैराग्यादीनां ज्ञानकालेप्यावश्यकत्वात् अन्तरंगत्वात् पूर्वापरभावसत्वेपि कुलालपितृवत् अन्यथासिद्धिशंका न कार्या अतः चशब्देन अपिशब्देन च समुच्चयः कथ्यते। तथा दमः तितिक्षा प्रसक्ताखिलकर्मणां वर्णाश्रमविहितत्वेन प्रसक्तानां प्राप्तानां अखिलानां सर्वेषां कर्मणां वैराग्योत्पत्तिपर्यन्तं अनुष्ठेयत्वात्, उत्पन्ने च तीव्रवैराग्ये भृशं न्यासः, स्वरूपतोपि परित्यागः, पूर्वं चित्तशुद्ध्यपरपर्यायवैराग्यार्थं फलमनभिसंधाय ईश्वरार्पणबुध्या कर्मणामनुष्ठानं, इदानीं फलस्य निष्पन्नत्वात् सुतरां तेषां परित्याग इति भावः। ततः सर्वकर्म-संन्यासानन्तरं, श्रुतिः अर्थतः गुरुमुखात् वेदान्तवाक्यश्रवणं, वेदान्तवाक्यार्थनिर्णयानुकूल-व्यापारः, तन्मननं श्रुतार्थस्य दाढ्र्याय उपपत्तिभिश्चिन्तनं। ततः असम्भावना-संशयभावनयोः श्रवणमननाभ्यां निरस्तयोः, सतत्वध्यानं परमार्थतत्वस्य ध्यानं, तदपि चिरं कर्तव्यं, अनात्मस्वात्मत्व-वासनायाः अनादिकालप्रवृत्ताया निरासार्थं, चिरं क्रियमाणमपि यदि विच्छिद्य विच्छिद्य क्रियेत विच्छेदकालिक-वृत्तिभिः आत्मवृत्तेरभिभूयमानत्वात् निदिध्यासन-मेव न सिध्येत्, अतः नित्यनिरंतरमित्युक्तं। तेन "स तु दीर्घकाल-नैरंतर्य-सत्कारासेवितो दृढभूमिः" इति योगसूत्रोक्तरीत्या दिवसैर्वा मासैर्वा निदिध्यासनं सिध्यतीति न वांछेत्। तदा विद्यमानाश्चत्वार एव वेदाः तानध्येतुं गतस्य माणवकस्य पंच दिवसा अतीताः नाद्याप्यसौ समागत इति मूढवचनानुसार्ययं ध्याता स्यात्। अपितु संवत्सरैः जन्मभिर्वा आदरपूर्वकं सर्वदा सेवितव्यमिति चिरं, नित्यनिरंतरं इति विशेषणं "अनेकजन्मसंसिद्धस्ततो याति परां गतिं" इति स्मृतेः। नित्यं अविच्छेदेन बहुकालपर्यन्तं निदिध्यासनं सिध्यति चेत् इहैव जन्मनि ततः परिपक्वान्निदि-ध्यासनात् अविकल्पं निर्विकल्पक-समाधिं, परं सविकल्पकात्परं उत्कृष्टं एत्य प्राप्य, विद्वान् आत्मसाक्षात्कारवान्, निर्वाणसुखं मुक्तिसौख्यं, समृच्छति निरर्गलमनुभवतीत्यर्थः॥ ७२॥

अस्मिन्नेव जन्मनि मोक्षं प्राप्तुं वक्तव्यं संग्रहेणोक्त्वा, विद्वानिहैव निर्वाणसुखं समृच्छतीत्युक्त्या धनी सुखीत्यादौ यथा धनप्रयोज्यत्वं सुखे भासते "उद्देश्यविधेयभावस्थले असति बाधके उद्देश्यतावच्छेदक-

प्रयोज्यत्वं विधेये भासते" इति लोकसिद्धत्वात् विद्वद्विशेषणभूत-विद्या-प्रयोज्यत्वस्य निर्वाणसुखे भातत्वेन तस्याश्च विद्याया आत्मानात्मविवेचन-जन्यत्वेन तदादौ विशदयति। यद्बोद्धव्यमिति।

यद्बोद्धव्यं तवेदानीमात्मानात्म-विवेचनम्।
तदुच्यते मया सम्यक्छ्रुत्वात्मन्यवधारय॥७३॥

एतेन "कोसावनात्मा परमः क आत्मा" इति प्रश्नोऽप्युत्तरितो भवति। तव इदानीं मोक्षहेतु-ज्ञानबोधात्प्राक् तद्धेतुत्वेन आत्मानात्म-विवेचनं अयमात्मा अयमनात्मा इतिभेदज्ञानानुकूलव्यापारः बोद्धव्यं ज्ञातव्यः, तत्तस्मात्कारणात् मया सम्यक्स उच्यते। तं श्रुत्वा आत्मनि मनसि, अवधारय निश्चिनुहीत्यर्थः॥७३॥

तत्र अनात्मद्वारैव आत्मनः ज्ञातव्यत्वेन अनात्मनः स्थूलत्वेन प्रथमं ज्ञातुं शक्यत्वेन तस्मिंश्च ज्ञाते सूक्ष्मस्याप्यात्मनः ज्ञानं सुलभं भवतीति प्रथमतोनात्मनो निरूपयति "अथ ते संप्रवक्ष्यामि "इत्यंतं। तत्रादौ सकल-बुद्धिगम्यं स्थूलशरीरं निरूपयति अहंतया विस्पष्ट-व्यवहारगम्यत्वात्। मज्जेत्यादिना।

मज्जास्थिमेदःपल-रक्तचर्म-त्वगाह्वयैर्धातुभिरेभिरन्वितम्।
पादोरुवक्षो-भुजपृष्ठ-मस्तकै-रंगैरुपांगै-रुपयुक्तमेतत् ॥७४॥
अहं ममेति प्रथितं शरीरं मोहास्पदं स्थूलमितीर्यते बुधैः ॥

अशितस्य स्थूलमध्यम-सूक्ष्मात्मना परिणममानस्य इति सर्वत्र ज्ञेयम्। तेजसो घृतादेः मध्यमो भागः मज्जा, तस्य स्थविष्ठो भागः अस्थि, तस्य पूर्वपरिणामः मेदः, पलं मांसं, अशितस्य अन्नस्य मध्यमो भागः, रक्तं लोहितं, पीतानां अपां मध्यमो भागः चर्म स्थूलावरणं, त्वक् सूक्ष्मावरणं, आन्तरान्धातून् नाड्यादींश्च सप्तावरणानि आवृण्वन्ति। तत्र अन्तर्बहि-र्भावेन स्थूलसूक्ष्मविभागो ज्ञेयः। मज्जेत्यादिः येषां आह्वयः धातूनां तैः सप्तभिः धातुभिः अन्वितं युक्तं। षडंगान्याह पादेत्यादिना, स्पष्टम्। पादोरुवक्षोभुजपृष्ठ-मस्तकैरंगैः, इदं हस्तस्याप्युपलक्षणम्। उपांगैःगुल्फ-जानुजंघादिभिः उपयुक्तं सहितं, एतत् प्रत्यक्षसिद्धम्। अहं गच्छामि

तिष्ठामि लंघयामि गृह्णामीत्यादि-व्यवहारेण अहंतास्पदं मम पादः हस्तः मस्तकं शरीरमिति प्रथितं प्रसिद्धम् शरीरं, अनेकविधदोषाश्रयत्वेपि अतिप्रेमास्पदत्वेन मोहास्पदं आत्मत्वभ्रमस्याश्रयः विषयः, स्थूलमिति वुधै-रीर्यते। अस्य अनेकपदार्थसंघातरूपत्वात् संहतानां स्तंभकुड्यादिरूपेण वतमानाना यथा स्वाम्यर्थत्वं, एवं परार्थत्वमिति ज्ञापयितुं मज्जास्थीत्याद्युक्तम्। एतेन आत्मभिन्नत्वं उक्तप्रायम्। आत्मन एव स्वामित्वात् तदर्थत्वाच्छरीरस्य ॥७४½॥

अनित्यत्वादपि नित्यात्मरूपत्वं तस्य नास्तीति वक्तुम् तस्य कारणान्याह। नभइत्यादिना।

नभोनभस्वद्दहनांबुभूमयः सूक्ष्माणि भूतानि भवन्ति तानि ॥७५॥

परस्परांशैर्मिलितानि भूत्वा स्थूलानि च स्थूलशरीरहेतवः॥

नभश्च नभस्वांश्च दहनश्च अम्बु च भूमिश्च नभोनभस्वद्दहनांबु-भूमयः। नभः गगनं नभस्वान् वायुः, दहनोग्निः, अंबु जलं, भूमिः पृथ्वी, इदं भूतपंचकं जायमानं सूक्ष्मं जायते, पश्चात् स्रष्ट्रया देवतया तासां त्रिवृतं त्रिवृतं एकैकां करवाणीति संकल्पवशात् एकैकं भूतं पंचीक्रियते। तैत्तिरीयकश्रुत्यनुसारेण आकाशवाय्वोः छान्दोग्ये तेजसः प्रथममुपसंहर्तव्य-त्वात् त्रिवृत्करणस्य पंचीकरणोपलक्षणार्थत्वात्। तत्प्रकारस्तु "पंचानां भूतानां एकैकं द्विधा विभज्य स्वार्धभागं विहाय अर्धभागं चतुर्धा विभज्य इतरेषु योजिते पंचीकरणं भवतीति" भाष्यकारवाक्यानुसारेण ज्ञातव्यः। अयमर्थः श्लोकेन संगृहीतः पंचदश्यां विद्यारण्यगुरुचरणैः "द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैः योजनात् पंच पंच ते" इति। तथाच स्थूलेषु भूतेषु प्रत्येकं स्वीयोर्धभागः इतरस्य भूतस्य अष्टमो भागः। एवं परस्परांशैर्मिलितानि संवद्धानि भूत्वा स्थूलानि गगनादि-शब्द-व्यवहारार्हाणि, स्थूलशरीरहेतवश्च भवन्तीति योजना ॥७५॥

भूतप्रसंगात् तद्धर्मांश्छब्दादीन् विषयान् तत्र वैराग्योत्पत्त्यर्थं निरूपयति। मात्रा इति।

मात्रास्तदीया विषया भवन्ति शब्दादयः पंच सुखाय भोक्तुः ॥७६॥

मीयन्ते विषयीक्रियन्ते भुज्यन्त इति वा मात्राः, तदीयाः आकाशादि-भूतसंबन्धिन्यः, शब्दादयः क्रमेण शब्दस्पर्श-रूपरस-गंधाः पंच विषयाः, विशेषेण सिन्वन्तीति विषयाः, षिञ्धातोः विपूर्वकात् बन्धनकर्मणः विषय-शब्दस्य निष्पत्तेः। भोक्तुः संसारिणः जीवस्य, सुखाय सुखाभासाय भवन्ति। शब्दादयः शास्त्रे तत्र तत्र पंचतन्मात्रा इति व्यवह्रियन्ते इति मात्रास्तदीया इति कथितम् तत्तद्ग्रन्थसंवादाय ॥७६॥

इदानीं तेषां बन्धकत्वं विशदयति। य एष्विति।

य एषु मूढा विषयेषु बद्धा रागोरुपाशेन सुदुर्दमेन।
आयान्ति निर्यान्त्यध ऊर्ध्वमुच्चैः स्वकर्मदूतेन जवेन नीताः ॥७७॥

ये मूढा विवेकशून्याः, एषु विषयेषु शब्दादिषु पंचसु, सुदुर्दमेन सुष्टु दुःखेन दमयितुं शक्येन दुर्निरसेन, रागोरुपाशेन उरुः दृढः पाशः बन्धहेतुरज्वादिः रागएव उरुपाशः तत्रासक्तिरूपेणदृढपाशेन बद्धाः, स्तंभेषु पश्वादय इव, तत्र अत्यन्तकामविशिष्टा इति यावत्। यथा स्तंभबद्धाः पशवः स्तंभं विहाय गन्तुं न पारयन्ते, एवं विषयरागिणः विषयांस्त्यक्तुं न शक्नुवन्तीति तत्रैवाशया श्रेयोमार्गाद् भ्रंश्यन्त इत्याह, आयान्ति निर्यान्त्यध ऊर्ध्वमुच्चैः-स्वकर्मदूतेन जवेननीताः, स्वेषां कर्म धर्माधर्मरूपं तदेव ऊर्ध्वा-धोगमनहेतुत्वा-द्दूतवद्वर्तते। यथा न्यायस्थानादौ कश्चिद्दूतः विचार्या-नूर्ध्वमधश्च नयति तद्वत्। तत्रापि शब्दादिकं सुखं जनयतीति बध्या तत्संपत्तये पुण्यार्जनं करोति, तदा दिव्यशब्दादिकं अनुभवितुं तदीयं पुण्यं कर्म तमुच्चैः ऊर्ध्वं नयति स्वर्गादिकं प्रापयति। तत्रापि क्षीणे पुण्ये अधः आगमनं अस्त्येव। अधर्मे पुनः किं वक्तव्यम् सर्वदाधोगमनमेवेति। उच्चैरूर्ध्वं, आयान्ति जन्मान्तरकृत-सुकृतवशात् मानुष्यादिकं संपादयन्ति। पुनः रागे अधो निर्यान्ति। विषयेषु रागवतः कर्तव्यकार्य-विस्मरण-संभवात् निस्तारो न भवतीति भावः ॥७७॥

. शब्दादीनां मध्ये एकैकं सेवमानस्यापि मृत्युः बन्धः दृष्टः। किं पुनः पंचापि कामयमानस्येति सदृष्टान्तमाह हेयत्वसिद्धये । शब्दादिभिरिति ।

शब्दादिभिः पंचभिरेव पंच पंचत्वमापुः स्वगुणेन बद्धाः ।
कुरंग-मातंग-पतंग-मीन-भृंगा नरः पंचभिरंचितः किम् ॥७८॥

कुरंगः हरिणः, मातंगः गजः, पतंगः शलभः, मीनः मत्स्यः, भृंगः भ्रमरः एते पंच स्वगुणेन स्वस्वसक्तिविषयेण गुणेन शब्दादीनां गन्धान्तानां पंचानां मध्ये क्रमेण एकैकेनैव बद्धास्सन्तः पंचत्वं मरणमापुः। एवं एकैकस्यापि मरणपर्यन्तबन्धप्रयोजकत्वे एतैः पंचभिरपि अंचितः स्वकीय-सक्त्याश्रयत्वेन विशिष्टः नरः किं मृत्युं प्राप्नोतीति वक्तव्यमित्यर्थः । यथा लोके हरिणं जिघृक्षवः वेणुगानादिमधुरशब्दासक्तं तं चपलं शीघ्रं बहुदूरं धावन्तमपि निश्चलीकृत्य तच्छब्दश्रवणासक्तं विस्मृतात्मानं गृण्हंतीति शब्द एक एव हरिणस्य बन्धक इति प्रसिद्धम् । एवं वनमध्ये स्वच्छन्दं विहारी दुर्ग्रहः महानपि मातंगः स्पर्शसुख-लोलुपः तज्जिघृक्षुभिः वशाद्वारा गृह्यते इति त्वगिंद्रियतृप्तिहेतुः स्पर्श एक एव गजस्य बन्धको निर्वृत्तः। एवं पतंगः प्रकाशमाने दीपे भास्वररूपदर्शनेन भक्ष्यबुध्या तदीयं दाहात्म्यं अजानन् तत्र पतित्वा म्रियत इति रूपस्य मृत्युहेतुत्वं प्रसिद्धम् । एवं रसगृध्नुः झषः दाशप्रसारितं जालं प्रविश्य म्रियत इति प्रथितम्। एवं घ्राणतर्पणलालसः भ्रमरः तत्तत्पुष्पाणीव चंपक-सुमं आघ्राय तद्गंध-सेवनेन पंचत्वमाप्नोतीति च। एवं शब्दादीनां मध्ये एकैकमपि सेव्यमानं मराणान्तानर्थप्रयोजकं । तत्रापि तिरश्चां पापाभावात् तदानींतन-शरीरस्य परमनर्थः सम्भवति। शब्दादीनां पंचानामपि विषयाणां सेवनाय विहितमनाचरन् पापमप्याचरन् नरः लोकद्वयादपि भ्रश्यत इति भावः ॥७८॥

विषयानुभवः मृत्युहेतुरिति तिष्ठतु। दर्शनमात्रादपि मारयन्विषयः कृष्णसर्पविषादपि अतिरिच्यत इत्याह । दोषेणेति ।

दोषेण तीव्रो विषयः कृष्णसर्पविषादपि ।
विषं निहन्ति भोक्तारं द्रष्टारं चक्षुषाप्ययम् ॥७९॥

विपयः रूपादिः कृष्णसर्पविषादपि दोषेण तीव्रः तीक्ष्णः, कृष्णसर्पविषे मारकत्वरूपदोषः यावान् तदपेक्षया तीक्ष्णो दोषः विषये। तत्र हेतुमाह विषं निहंति भोक्तारमिति। कृष्णसर्पेण दष्टस्य पुरुषस्य नाडीद्वारा जिह्वासंवद्धं विषं भवतीति स भोक्तेत्युच्यते। अत एव पादादौ सर्पेण दष्टा अपि तत्र वलवद्वद्धा रज्वादिना, न म्रियंते तद्विषस्य नाडीद्वारा जिह्वासंवन्धाभावात्। एवं भोक्तारं निहन्ति विषं तस्यासत्वमापादयति। अयं विषयस्तु चक्षुषाद्रष्टारमपि निहन्ति, प्रसिद्धं खलु लोके सुंदरं रूपादिकं दृष्ट्वा कलहायमाना नश्यन्ति जनाः इति। यद्वा कलहाद्यभावेपि स्वयं तेन विषयेण दूरमाकृष्टचित्तः स्वात्मानं द्रष्टुं न शक्नोतीति स्वाभानापादकव्यापारवान् नियमेन भवतीति भावः। तथाच निहन्तीत्यस्य असत्वापादकव्यापारः, अभानापादकव्यापारो वा अर्थः। यथायोग्यमर्थः स्वीकरणीयः। तत्र असत्वापादकव्यापारस्य अभानापादकत्वं सिद्धमेव। द्वितीयस्य तु असत्वापादकत्वं न संभवतीति। वस्तुतस्तु विषयाकृष्टचित्तस्य पुरुषस्य सत्वमपि पुरुषार्थोपयोगाभावात् असत्वमिव भवतीत्यपि सुवचम् ॥७९॥

एवमत्यंतानर्थकरेपि विषये विचाराभावात्पुरुषः आशां बध्नाति, तत्रत्यदोषं न परिगणयति मौढ्यात् ततः पुरुषार्थाद् भ्रश्यते। अतः मुमुक्षुणा सर्वथापि तदाशा त्यक्तव्या। अन्यथा षडपि शास्त्राणि अर्थतो जानतोपि मोक्षो दुर्लभ इत्याह। विषयाशेत्यादिना।

विषयाशा-महापाशाद्यो विमुक्तः सुदुस्त्यजात्।
स एव कल्पते मुक्त्यै नान्यः षट्छास्त्रवेद्यपि ॥८०॥

यः पुरुषः सुदुस्त्यजात् चिरकालादभ्यस्तत्वेन दृढविचारमन्तरा सुदुस्त्यजात् त्यक्तुमशक्यात्, विषयाशामहापाशात् विषयाशैव महापाशः अत्यंतं वन्धकत्वात् तस्माद्विमुक्तः विशेषेण मुक्तः सुतरां तत्संबन्धरहित इत्यर्थः। स एव पुरुषः मुक्त्यै कल्पते समर्थो भवति। अन्यः तदाशापाशबद्धः षट्छास्त्रवेद्यपि न मुक्त्यै समर्थो भवतीत्यर्थः ॥८०॥

विषयेषु तीव्रवैराग्याभावे अनर्थमाह। आपातेति।

• आपात-वैराग्यवतो मुमुक्षून् भवाब्धिपारं प्रतियातुमुद्यतान्।
आशाग्रहो मज्जयतेन्तराले निगृह्य कण्ठे विनिवर्त्य वेगात्
॥८१॥

आपातवैराग्यवतः दुःखानुभवादिकालेषु धिक् संसार इति वैराग्यवतः, सार्वदिकवैराग्यशून्यानिति यावत्। भवाब्धिपारं संसारसागरान्तं ज्ञानं, प्रतियातुं प्राप्तुं, उद्यतान् उद्युक्तान्, तत्र हेतुमाह मुमुक्षूनिति। मोक्षेच्छायाः सत्वात् संसारांबुधिं तर्तुं उद्यता इति तादृशान् पुरुषान् आशैव ग्रहः महानक्रः, अन्तराले समुद्रमध्ये कण्ठे निगृह्य नितरां गृहीत्वा वेगाद्विनिवर्त्य भवाब्धिपारगमनाद्विनिवर्त्य मज्जयते मग्नान् करोति संसारसमुद्रमग्नान् पुनः कर्मादिकरणेषु तन् व्यापारयतीति भावः। यस्तावत् अत्यंतं विषयेभ्यो विरक्तः शमादिगुणगणमण्डितः स सद्गुरुं उपसद्य तन्मुखतः सम्यगात्मानं विदित्वा मुच्यते संसारात्, अयं तावत् आपातवैराग्यवान् दृढशान्त्यादिहीनः तथा-प्रयतमानोपि मध्ये आशया पीडितः पुरुषार्थाद्भ्रश्यते। ज्ञानार्हो न भवतीति भावः ॥८१॥

पूर्वोक्तमर्थं व्यतिरेकमुखेनाह। विषयाख्येति।

विषयाख्य-ग्रहो येन सुविरक्त्यसिना हतः।
स गच्छति भवाम्भोधेः पारं प्रत्यूहवर्जितः ॥८२॥

विषयाख्यग्रहः विषयनामकनक्रः, येन पुरुषेण, सुविरक्त्यसिना सुष्ठु विरक्तिः दृढतरतीव्रवैराग्यं सैवासिः खड्गः, तेन हतः नाशितः, सः पुमान् प्रत्यूहवर्जितः संसारसागरोत्तरणे विघ्नशून्यः, भवाम्भोधेः पारं संसारसमुद्रस्य जन्ममरणादिकल्लोलतरंगितस्य पारं अन्तं ब्रह्मेति यावत् "सोध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति श्रुतेः। गच्छति प्राप्नोति, ब्रह्म साक्षात्कृत्य मुच्यत इत्यर्थः ॥८२॥

"यस्त्वविज्ञानवान्भवति अमनस्कः सदाऽशुचिः। न स तत्पदमाप्नोति संसारं चाधिगच्छति। यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः। स तु तत्पदमाप्नोति यस्माद् भूयो न जायते" इति कठोपनिषत्प्रतिपादितमर्थं पूर्वोक्तश्लोकद्वयसारं क्रोडीकृत्य उपदिशति। विषमेति।

विषमविषयमार्गे गच्छतोऽनच्छबुद्धेः
प्रतिपदमभिघातो मृत्युरप्येषसिद्धः ।
हितसुजनगुरूक्त्या गच्छतः स्वस्य युक्त्या
प्रभवति फलसिद्धिः सत्यमित्येव विद्धि ॥८३॥

विषमः बहुविधविक्षेपहेतुः अत्यन्तदुःखजटिलः यः विषयः शब्दादिः स एव मार्गः, "विषयांस्तेषु गोचरान्" इति कठश्रुतेः, तत्र गच्छतः तत एव अनच्छबुद्धेः अशुद्धमनस्कस्य, यदि शुद्धं मनः अवश्यं विचारशीलं विषयेभ्यो निवर्तते। रजस्तमोभूयिष्ठत्वादेव विचारासमर्थं, "यथा व्यालगलस्थोपि भेकः दंशानपेक्षते, तथा कालाहिना ग्रस्तो लोको भोगानशाश्वतान्" इत्युक्तरीत्या विषयप्रवणता तस्य इति भावः। एतादृशाशुद्धमनस्कस्य प्रतिपदमभिघातः सर्वदापि दृढदुःखसंयोगः, एषः अनुभवसिद्धः मृत्युरपि सिद्धः मृत्युघटितः संसार इत्यर्थः। "मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्" इति वचनस्य पूर्वमुदाहृतत्वात्। स्मर्यते हि गीतासु "ध्यायतो विषयान् पुंसः संगस्तेषूपजायते। संगात्संजायते कामः कामात्क्रोधोभिजायते। क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः। स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति" इति। तत्र कथितः प्रणाशः णश अदर्शने इति धातुना प्रतीयमानः, स्वस्वरूपासाक्षात्कार एव वा अत्र मृत्युपदार्थः। कामस्यैव कुतश्चित् अभिहतस्य क्रोधात्मना परिणममानत्वात् तत्र उक्तः कामाभिघात एव वा अत्रापि प्रतिपदमभिघात इत्यत्रार्थः। लोके यथा इच्छा तथा विषयानुभवस्य सुदुर्लभत्वात्, जातायां इच्छायां अभिहन्यमानायां अविचारयितुः पुरुषस्य क्रोधादिक्रमेण प्रणाश एवेति भावः। एवं अविरक्तस्य जायमानं फलमुक्त्वा विरक्तस्य तदाह हितसुजन-गुरूक्त्येत्यादिना। हिताः श्रेयस्कामिनः अत एव सुजनाः सत्पुरुषाः मित्रादयः तेषां गुरोश्च उक्त्या, गुरोस्तु हितत्वं सुजनत्वं च सिद्धमेव। गुरुलाभपर्यन्तं सुजनोक्तिः, ततः गुरूक्तिरिति विभागः। यद्वा हिता सर्वदा श्रेयोहेतुभूता सुजनानां गुरोश्च या उक्तिः तया, तद्दत्तया स्वस्य युक्त्या तदनुसार्यूहापोहेन च गच्छतः "पण्डितो मेधावी गंधारानेवोपसंपद्येत, एवमेवेहाचार्यवान्पुरुषो वेद" इति श्रुतेरिति भावः। श्रेयोमार्ग एव गच्छतः फलसिद्धिः

परमपुरुषार्थभूत-मोक्षप्राप्तिः प्रभवति प्रकर्षेण निष्प्रत्यूहं भवति। सत्य-मित्येव विद्धि अत्र विषये ईषदपि शंकां माकार्षीरिति भावः ॥८३॥

मात्रास्तदीया इत्यारभ्य एतदंतं कृतस्य विषयवन्धकत्वनिरूपणस्य फलमाह मोक्षस्येति। यद्वा इदानीं मुमुक्षोः हेयोपादेये उपदिशति। मोक्षस्येति।

मोक्षस्य कांक्षा यदि वै तवास्ति
त्यजातिदूराद् विषयान् विषं यथा।
पीयूषवत्तोष-दयाक्षमार्जव-
प्रशान्तिदान्तीर्भज नित्यमादरात् ॥८४॥

आदौ हेयमाह, यदि तव मोक्षस्य वै इत्यवधारणे, मोक्षस्यैवेत्यर्थः। कांक्षा इच्छा, अस्ति विषयान् शब्दादीन्, विषं यथा हालाहलमिव, अति-दुरात्त्यज मनसापि मास्मार्षीरित्यर्थः। "अकुर्वन्नपि विध्युक्तं निषिद्धं परिवर्जयेत्। निषिद्धपरिहारेण विहिते लभते मतिम्" इति सूत-संहितोक्तेः। उपादेयमाह तोषः संतोषः, दया करुणा, क्षमा तितिक्षा, आर्जवं अकुटिलचित्तता, प्रशान्तिः प्रकर्षेण शमः, दान्तिः बहिरिन्द्रिय-निग्रहः, तोषदया-क्षमार्जवानां अन्तःकरणधर्मत्वात् अशान्तस्य कुतस्सुख-मिति गीतावचनात् शमाभावे संतोषादेरसंभवात् अत्र सर्वं शमाधीनमिति द्योतयितुं प्रशान्तीति प्रेत्युपसर्गसहित-शान्तिपदप्रयोगः। एताः नित्यं संततं, पीयूषवत् अमृतवत्, आदराद् अत्यन्तविश्वासेन भज सेव-स्वेत्यर्थः ॥८४॥

एवं मोक्षसाधनत्वेन विषयवैराग्यं द्रढयित्वा तेष्वाशा यन्निबन्धना तस्मिन्स्थूलशरीरे आदौ अनात्मत्वेन दिदर्शयिषिते सक्तिः त्यक्तव्येत्याह तत्र सक्तौ त्यक्तायां विषयवैराग्यं सुलभमित्यभिप्रायेण। अनुक्षणमिति।

अनुक्षणं यत्परिहृत्य कृत्यं अनाद्यविद्याकृतबन्धमोक्षणम्।
देहः परार्थोऽय-ममुष्य पोषणे यस्सज्जते स स्वमनेन हन्ति ॥८५॥

यत् स्थूलशरीरं हृत्य तादात्म्याध्यासात् दूरीकृत्य, अनाद्य-विद्याकृतबन्धमोक्षणं अनादिः या अविद्या मूलाविद्या, तया कृतः बन्धः

अहंकारादि-देहान्तः तस्य मोक्षणं परित्यागः अनुक्षणं सर्वदा कृत्यमस्तीति शेषः। अत्यंतं स्थूलतया भासमाने अस्मिच्छरीरेअहंतायाः परित्यागे पश्चात् किल प्राणादौ सा त्यक्तुं शक्यत इति भावः। तत्रानात्मत्वं स्फुटयति अयं देहः परार्थ इति। कृतव्याख्यानोयमंशःमज्जास्थीत्यादिश्लोके। तस्मादनेक-पदार्थसंघातरूपत्वेन अनात्मनः अमुष्य पोषणे यः सज्जते स्वात्मानं विस्मृत्य अयमेवाहमिति विशेषतोभिमन्यते तद्रक्षणे च विशेषतो यतते, सः स्वं स्वात्मानं, अनेन स्थूलशरीरेण हन्ति हिनस्ति, अभातनिजस्वरूपं करोतीत्यर्थः। येन निजस्वरूपभानेन मुच्यते तत्प्रतिबन्धक-स्थूलदेहाभिमानेन तदीयजन्ममरणादि-धर्मवन्तं स्वात्मानं मत्वा सर्वदा दुःखमनुभवतीति भावः॥८५॥

लोके तावत् नदीं तितीर्षवः नद्यांप्लवमानं दृढं दारु धृत्वा स्वयं नद्यां तत्साहाय्येन अमज्जन्तः नदीं तरंतीति प्रसिद्धम्। न तु कदाचिदपि तत्र प्लवमानं मकरं गृहीत्वा तितीर्षन्तीति। तथा सति तेषां नद्यां मकरग्रस्तानां मरणं ध्रुवमिति प्रसिद्धम्। तथा शरीरपोषणासक्तस्य आत्मदर्शनं नैव भवति, प्रत्युत तत्राभिमानः रूढो भूत्वा संसाराम्बुधौ तं संमज्जयतीति भावेनाह। शरीरेति।

शरीरपोषणार्थी सन् य आत्मानं दिदृक्षते।
ग्राहं दारुधिया धृत्वा नदीं तर्तुं स इच्छति॥८६॥

शरीरस्य पोषणं अर्थयितुं शीलं अस्येति शरीरपोषणार्थी सर्वदा तत्पोषणव्यग्र इत्यर्थः। तादृशः सन् यो नरः आत्मानं स्वस्वरूपं दिदृक्षते साक्षात्कर्तुमिच्छति तस्य आत्मदर्शनं दारुधिया धृतग्राहस्य नदीतरणमिवासंभावितमित्याह ग्राहमिति। स्पष्टम्॥८६॥

अतः मुक्त्यर्थं विवेकिना शरीरे मोहः परित्यक्तव्य इत्याह। मोह इति॥

मोह एव महामृत्युः मुमुक्षोर्वपुरादिषु।
मोहो विनिर्जितो येन स मुक्तिपदमर्हति॥८७॥

वपुरादिषु शरीर-कलत्र-पुत्रादिषु, मोह एव अहंमम-भाव एव, मुमुक्षोः महामृत्युः यथा मृतः किंचित्कार्यंन्न कर्तुं शक्नोति एवं शरीरादिषु

अहंममाभिमानवान् मुमुक्षुः मोक्षं संपादयितुं न शक्नोतीत्यर्थः। येन मोहो विनिर्जितः पूर्वोक्ताहंतादिः शरीरादौ परित्यक्तः स मुक्तिपदं मुक्तिमार्गं अर्हति स एव मुच्यत इत्यर्थः ॥८७॥

तस्मान्मोहं जहीति उपदिशति। मोहमिति।

मोहं जहि महामृत्युं देहदारसुतादिषु।
यं जित्वा मुनयो यान्ति तद्विष्णोः परमं पदम् ॥८८॥

मुनयः मननशीलाः, यं देहादौ मोहं तदात्म्याभिमानं जित्वा, बहुकालाद्रूढमूलमपि देशिकदत्तयुक्त्या श्रुत्यवष्टंभेन च सुतरां परित्यज्य, तत् श्रुतिप्रसिद्धं विष्णोः परमं पदं, राहोश्शिर इतिवत् अभेदे षष्ठी, व्यापकं (परिच्छेदत्रयशून्यं) सर्वोत्कृष्टं ब्रह्मरूपं स्थानं यान्ति अभेदेन भजन्ते, ब्रह्मैव भवन्ति मुच्यन्त इत्यर्थः। तं देहदारसुतादिषु आदिपदेन मित्रधनादिग्रहः। तत्र मोहं भ्रान्तिं तव महामृत्युं अत्यन्तं स्वस्वरूपप्रच्यावनेन स्वादर्शनहेतुं जहि नाशय वेदान्तार्थविचारणेनेत्यर्थः ॥८८॥

अत्यन्ताशुचि-पदार्थभूयिष्ठत्वात् दूरतः परित्याज्ये सुतरामभिमानानर्हे स्थूले देहे तत्र जुगुप्सया हेयताबुद्धिं द्रढयति। त्वगित्यादिना।

त्वङ्मांसरुधिर-स्नायुमेदो-मज्जास्थिसंकुलम्।
पूर्णं मूत्रपुरीषाभ्यां स्थूलं निंद्यमिदं वपुः ॥८९॥

स्नायवः सिराः नाड्यः। तत्र अत्यन्तं जुगुप्सां जनयति मूत्रपुरीषाभ्यां पूर्णमिति। न कश्चित् मलमूत्रभाण्डं स्प्रष्टुमिच्छति, कुतस्तत्राहंतेति भावः। अत एव निंद्यं कुत्सार्हं। शिष्टं स्पष्टम् ॥८९॥

एवं तत्र वैराग्योत्पत्तये तं निंदित्वा पूर्वारब्धं आत्मानात्मविवेचनं नुवर्तयति। पंचीकृतेभ्य इति।

पंचीकृतेभ्यो भूतेभ्यः स्थूलेभ्यः पूर्वकर्मणा।
समुत्पन्नमिदं स्थूलं भोगायतनमात्मनः॥
अवस्था जागरस्तस्य स्थूलार्थानुभवो यतः ॥९०॥

पूर्वं तावत् नभआदीनि सूक्ष्माणि भूतानि परस्परांशैः मिलितानि स्थूलानि संति स्थूलशरीरहेतव इत्युक्तम्। तत्र पंचीकरणं न शब्दतः स्पष्टं कथितं तदिदमुक्तं पंचीकृतेभ्य इति। अत एव स्थूलेभ्यः पृथिवीत्यादिव्यवहारयोग्येभ्यः भूतेभ्यः, तत्रापि देवतिर्यङ्मनुष्यादि-शरीरप्रभेदे बीजमाह पूर्वकर्मण इति। पुण्यपापमिश्रानुसारेण देवादिशरीरोत्पत्तिरिति भावः। इदं प्रत्यक्षसिद्धं, आत्मनो जीवस्य, भोगायतनं यदवच्छेदेन भोगो जायते तद्भोगायतनं सुखदुःखसाक्षात्कारावच्छेदकमित्यर्थः। समुत्पन्नं असंकरेण जातमित्यर्थः। तत्तत्कर्मानुसारेण कर्मफलदाता सर्वज्ञः ईश्वरः तत्तच्छरीरं तस्मै तस्मै ददातीति संकरशंकाया नावसरः इति समुपसर्गेण पूर्वकर्मणेति-पदसहितेन द्योतितम्। इदानीं स्थूलदेहः यदात्मत्वेनाभिमन्यते तां अवस्थामाह तस्य व्यावृत्तत्वं आत्मनः अनुवृत्तत्वं च सम्यग्बोधयित्वा तत्रानात्मत्वं स्पष्टयितुं। तस्य स्थूलदेहस्य अवस्था असाधारणी भोगहेतुत्वप्रयोजकः कालः जागरः, "इंद्रियैरर्थोपलब्धिर्जागरितं" इति लक्षणलक्षिता जाग्रदवस्थेत्यर्थः। तदेव विशदयति स्थूलार्थानुभवो यतः, अर्थेषु स्थूलत्वं च दिगाद्यभिमानि-देवतानुगृहीत-श्रोत्रादीन्द्रियगृह्यमाणत्वं शब्दादिषु। स्वप्ने इन्द्रियाणां उपरतव्यापारत्वात् वासनामयानां शब्दादीनां देवतानुगृहीतेन्द्रिय-गृह्यमाणत्वं नास्ति। मनसः इन्द्रियत्वपक्षे इन्द्रियगृह्यमाणत्वेपि तत्र तद्ग्राहकत्वेन प्रसिद्धेन्द्रियगृह्यमाणत्वं नास्ति इति भावः। यतः यस्मात् स्थूलशरीरात् तत्राभिमानात् स्थूलार्थानुभवः, ततः तत्कारणात् तस्य स्थूलदेहस्य जागरः अवस्थेत्यर्थः ॥९०॥

उक्तमर्थं विशदयति। बाह्येंद्रियैरिति।

बाह्येन्द्रियैस्थूलपदार्थसेवां
स्रक्चन्दनस्त्र्यादि-विचित्र-रूपाम्।
करोति जीवः स्वयमेतदात्मना
तस्मात्प्रशस्तिर्वपुषोस्य-जागरे ॥९१॥

बाह्येंद्रियैः त्वग्घ्राणचक्षुरादिभिः, स्रक्चन्दनस्त्र्यादिविचित्ररूपां रूप्यंते विषयीक्रियन्ते इति रूपाणि विचित्राणि च तानि रूपाणि च, स्रक्च

चन्दनं च स्त्री च आदिः येषां तानि स्रक्चन्दन-स्त्र्यादीनि तानि विचित्ररूपाणि यस्यां सा स्रक्चन्दन-स्त्र्यादिविचित्ररूपा तां स्रक्चन्दन-स्त्र्यादिविचित्ररूपां, स्थूलपदार्थसेवां, पदार्थेषु स्थूलत्वं पूर्वमुक्तम्, अभिमानिदेवतानुग्रह-प्रयोज्य-सुखदुःखानुभवं, जीवः प्रत्यगात्मा, एतदात्मना स्थूलदेहात्मना मनोद्वारा स्थूलशरीर-प्रतिफलितस्वरूपेण स्थूलशरीराध्यस्तात्मभावेनेति यावत्, स्वयं करोति। स्वप्ने तावत् स्थूलदेहे मनस्संयोगाभावात् तत्र स्वरूपप्रतिफलनमपि नास्ति इति तस्य तदा भोगहेतुत्वं नास्ति, अपितु तदा कल्पितस्य अन्यस्य स्थूलदेहस्यैव वासनामयस्य। प्रसिद्धं किल स्वप्ने प्रसिद्ध-स्थूलदेहव्यतिरिक्त-तिर्यग्देवादि-देहरूपेण भोगान्भुंजत इति। तस्मादस्य वपुषः स्थूलस्य देहस्य जागरे जाग्रदवस्थायां प्रशस्तिः प्रामुख्यमित्यर्थः। स्वप्नसुषुप्त्योरत्र अभिमानस्यैवाभावादिति भावः। इत्थं च तयोरवस्थयोरभासमानस्य जाग्रति परं प्रतीयमानस्यानात्मत्वं व्यावृत्तत्वात् सिद्धमिति भावः। सर्वावस्थासाक्षिणस्त्वात्मनः अनुवृत्तत्वादेतद्भिन्नत्वं सुज्ञानम् ॥९१॥

यथा कश्चिदपि लोके स्वीयं गृहं स्वात्मत्वेन नमनुते तथा मन्तव्ये स्थूलदेहे अहंता सुतरां न कार्येत्यभिप्रायेणाह। सर्व इति।

सर्वोऽपि बाह्यःसंसारः पुरुषस्य यदाश्रयः।
विद्धि देहमिदं स्थूलं गृहवद्गृहमेधिनः ॥९२॥

संसारो द्विविधः बाह्य आन्तरश्चेति। तत्र आन्तरः सुखदुःखकर्तृत्व-भोक्तृत्वादिः। बाह्यः जन्मजरामरण-स्थौल्यबाल्यादिः। उत्तरश्लोके निरूपयिष्यते बाह्यः सर्वोऽपि संसारः। असंसारिणः पुरुषस्य यदाश्रयः यत्र तादात्म्याध्यासनिबन्धनः तत् इदं स्थूलंदेहं गृहमेधिनः गृहस्थाश्रमिणः कुटुम्बिन इति यावत्। गृहवत् सदनवत् विद्धि जानीहि। प्रसिद्धं खलु लोके एकं गृहमाश्रित्य वर्तमानः कलत्रादिक-मर्जयति। नहि गृहस्याप्यभावे विवाहादौ प्रयतते कश्चित्। तथा स्थूलदेहं आत्मत्वेन मन्वान एव तदीयधर्मान् जरामरणादीन् स्वकीयान्मनुते दुःखमनुभवति च नान्यथा। नहि सुषुप्तौ स्थूलदेहाभिमानशून्यस्य जरारोगादिपीडेति भावः। अतः गृहवदत्यंतभिन्नत्वेन ज्ञेये अहंता न युक्तेति भावः ॥९२॥

तमेव बाह्यं संसारं विशदयति। स्थूलस्येति।

स्थूलस्य संभवजरामरणानि धर्माः
स्थौल्यादयो बहुविधाः शिशुताद्यवस्थाः।
वर्णाश्रमादि-नियमा बहुधामयाः स्युः
पूजावमान-बहुमानमुखा विशेषाः ॥९३॥

संभवः उत्पत्तिः, जरा वार्धक्यं, मरणं मृतिः, स्थौल्यं अवयवोपचयः, आदिपदेन तदपचयरूपकार्श्यं शौक्ल्यकार्ष्ण्यादिवर्णाः बहुविधाः, बह्व्यः विधाः येषां ते धर्माः बहुविधाः। शिशुता आदिः यासां कुमारता युवता वृद्धतानां ताः अवस्थाः, यद्यपि जराशब्देन पूर्वं वृद्धता अग्राहि, अथाप्यत्र शिशुताद्यवस्थामध्ये पुनर्ग्रहणे न दोषः, वर्णाश्रमादिनियमाः वर्णाः ब्राह्मणत्व क्षत्रियत्व-विट्त्व-शूद्रत्वानि आश्रमाः ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थत्व-संन्यासाः, आदिपदेन गोत्रसूत्रादयः तेषां नियमाः, ब्राह्मणत्व-ब्रह्मचर्याद्युचित-धर्माः, कुलाद्याचाराश्च। बहुधा आमयाः ज्वरशिरोवेदनाप्रभृतयः। पूजावमान-बहुमानमुखाः विशेषाश्च स्युः। पूजा गंधपुष्पादिकृता, अवमानः वाचाप्यनादरणादिरूप-तिरस्कारः अक्ष्णाप्यनीक्षणादिश्च। बहुमानः उच्चासनोपवेशनादिः एतन्मुखा विशेषाश्च स्युः। जातकर्मादि-संस्काराणां शरीरस्यैव क्रियमाणत्वात् तत्तदाश्रमचिह्नानां च शरीर एव उपलभ्यमानत्वात् वर्णाश्रमादिनियमाः स्थूलस्य शरीरस्य इत्युक्तम्। यद्यप्यान्तराः नियमाः सन्त्येव अन्तरंगस्य। अथापि प्रत्यक्षानियमा अस्येत्यभिप्रायः। यद्वा यैर्नियमैः अयं ब्राह्मणः अयं ब्रह्मचारीत्यादिकं ज्ञातं परेणापि शक्यते ते नियमा इत्यर्थः। ते तावन्नियमाः शरीरसंस्कारद्वारा चित्तं संस्कुर्वन्ति। तद्द्वारा ज्ञानोपयोगित्वं भजन्त इति अध्यासेनापि ते नियतमादर्तव्याः, इतरे धर्माः बन्धकत्वात् पूजावमानादयः नादर्तव्या इति भावः ॥९३॥

एवमनात्मानं स्थूलदेहं तन्मूलकं संसारबन्धं च वर्णाश्रमादिधर्मानुष्ठानेन तस्य मोचकत्वरीतिमपि निरूप्य इदानीं सूक्ष्मशरीरं निरूपयितुमारभते बुद्धीत्यादिना पंचभिः श्लोकैः।

बुद्धीन्द्रियाणि श्रवणं त्वगक्षि, घ्राणं च जिह्वा विषयावबोधनात् ।
वाक्पाणिपादा गुदमप्युपस्थं कर्मेन्द्रियाणि प्रवणानि कर्मसु ।।९४।।

कर्णशष्कुल्यवच्छिन्नं नभः श्रवणं श्रोत्रं, त्वक् त्वचि स्थितमिन्द्रियं, अक्षि नेत्रगोलकावच्छिन्नं चक्षुरिन्द्रियं, घ्राणं नासावच्छिन्नं, जिह्वा रसनेंन्द्रियं, एतानि पंच शब्दस्पर्श-रूपगन्ध-रसात्मक-विषयाववोधनात् तत्तज्ज्ञानजननात् बुद्धींद्रियाणि ज्ञानेंद्रियाणीति कथ्यन्त इति शेषः। वाग्वागिंद्रियं वचनशीलं, पाणिः हस्तेन्द्रियं आदानशीलं, पादः विहरणशीलं पादेन्द्रियं, गुदं उपस्थं अनयोः क्रमेण शारीर-कठिन-द्रवरूप-हेयभागोत्सर्जन-हेतुत्वं। एतानि वचनादि-कर्महेतुभूतानीति कर्मेन्द्रियाणीत्युच्यंते इति शेषः। तत्र हेतुः प्रवणानि, व्यग्राणि कर्मसु वचनादिष्वित्यर्थः ।।९४।।

एवं बाह्यानि दशेन्द्रियाण्युक्त्वा एतानि सर्वाण्यपीन्द्रियाणि यत्संवन्धे कार्यं कर्तुं ज्ञानं जनयितुं च प्रभवन्ति नेतरथा तादृशमन्तःकरणं प्रधानं निरूपयति चातुर्विध्येन सनिमित्तं निगद्यत इत्यादिना।

निगद्यतेऽन्तःकरणं मनो धीरहं
कृतिश्चित्तमिति स्ववृत्तिभिः।
मनस्तु संकल्पविकल्पनादिभिः
बुद्धिः पदार्थाध्यवसायधर्मतः ।।९५।।

अत्राभिमानादहं-मित्यहंकृतिः
स्वार्थानुसंधानगुणेन चित्तम् ।।९६।।

अन्तःकरणमेकमेव स्ववृत्तिभिः वक्ष्यमाणाभिः मनः, धीः बुद्धिः, अहंकृतिः अहंकारः, चित्तमिति च चतुर्धा निगद्यते इत्यर्थः। नामचतुष्टय-निमित्तवृत्तीराह संकल्पविकल्पनादिभिः मन इति, संकल्पः सम्यक्त्वबुद्धिः विकल्पना विविधं कल्पना संशय इति यावत्। पदार्थाध्यवसायः पदार्थ-निर्णयः तद्रूपधर्मतः वृत्तितः बुद्धिरुच्यते। अत्र शरीरादौ अभिमानात् अहमित्यध्यासात् अहंकृतिः अहंकार इति च उच्यते। स्वार्थानुसंधानगुणेन स्मरणवृत्येत्यर्थः चित्तमिति कथ्यते।।९६।।

एवं सत्वांशोपेतैः प्रत्येकं पंचभिः भूतैः क्रमेण जायमानानि ज्ञानेन्द्रियाणि प्रत्येकं तैरेव रजोगुणोपेतैः उत्पद्यमानानि कर्मेन्द्रियाणि, सत्त्वप्रधानानां तेषां समष्टिकार्यमन्तःकरणं च निरूप्य इदानीं रजोंशोपेतभूतपंचक-समष्टिकार्यं सूक्ष्मशरीरघटकं प्राणमाह। प्राणापानेति।

प्राणापान-व्यानोदान-समाना भवत्यसौ प्राणः।
स्वयमेव वृत्तिभेदात् विकृते-र्भेदात्सुवर्ण-सलिलमिव ॥९७॥

यथा एकमेव सुवर्णं कटकं केयूरं कुण्डलमित्यादि-विकृतिभेदेन भवति, यथा च विकृतेर्भेदेन एकमेव जलं नदी कुल्या तटाकमित्यादिरीत्या भेदेन भवति तथा असौ शरीरान्तस्संचारी प्राणः स्वयमेव वृत्तिभेदात् प्राणनापानन-व्यानन-समाननोदाननरूपवृत्तिभेदात् प्राणापान-व्यानोदान-समाना इति भेदेन भवति। सुवर्णसहितं सलिलं सुवर्णसलिलमिति विग्रहः। प्रत्येकमर्थो बोद्धव्यः। यथा विकृतेर्भेदात् एकमेव सुवर्णं भिन्नत्वेन व्यवह्रियते यथा च विकृतेर्भेदादेव एकमेव जलं तरंग-फेनबुद्बुदादिभेदेन व्यवह्रियते तद्वदित्यर्थः। तत्र प्राणनं मुखनासिकाभ्यां निष्क्रमण-प्रवेशनं, अपाननं मलादीनां अधोनयनं, व्याननं अशितपीतान्नरसादेः नाडीमुखेषु वितननं, ऊर्ध्वं नयनं उदाननं वमनकाले, भुक्तस्यान्नरसादेः पाकार्थं जाठराग्नेः समुन्नयनं समाननं इति वृत्तयः पंच प्राणस्य ॥९७॥

इदानीं ज्ञानेन्द्रियादीनि यत्कथनार्थ-मभिहितानि तत्सूक्ष्मशरीरं विशिष्टमाह। वागादीति।

वागादिपंच श्रवणादिपंच प्राणादिपंचा-भ्रमुखाणि पंच।
बुद्ध्याद्यविद्यापि च काम-कर्मणी पुर्यष्टकं सूक्ष्म-शरीरमाहुः॥९८॥

वागादिपंच कर्मेन्द्रियाणि, श्रवणादिपंच ज्ञानेन्द्रियाणि, प्राणादिपंच प्राणपंचकं, अभ्रमुखाणि पंच आकाशादि-सूक्ष्मभूतपंचकं। बुद्ध्यादि-अन्तःकरणचतुष्टयं, अविद्या अध्यासः, कामकर्मणी कामः इच्छा कर्म धर्माधर्माख्यं। एतत्सर्वं मिलितं पदार्थाष्टक-समुदायोपेतं पुर्यष्टकं सूक्ष्मशरीरमाहुः वेदान्तिन इति शेषः। वागादिपंचकं १, श्रवणादिपंचकं २, प्राणपंचकं ३, भूतपंचकं ४, बुद्ध्यादिचतुष्टयं ५, अविद्या ६, कामः ७, कर्म ८॥९८॥

अस्याप्यनेक-पदार्थसंघातरूपत्वात् संहतानां गृहवत् परार्थत्वात् अनात्मत्वं स्पष्टं कथयति। इदमिति।

इदं शरीरं शृणु सूक्ष्मसंज्ञितं, लिंगंत्वपंचीकृत-भूतसंभवम्।
सवासनं कर्मफलानुभावकं स्वाज्ञानतोऽनादि-रुपाधिरात्मनः॥९९॥

सूक्ष्मसंज्ञितं सूक्ष्ममिति संज्ञा सूक्ष्मसंज्ञा सा अस्य संजातेति सूक्ष्मसंज्ञितं, इदं शरीरं। तस्य जन्यत्वादपि नित्यात्मरूपत्वं नेत्याह अपंचीकृतभूतसंभवं। अपंचीकृतानि यानि भूतानि गगनादीनि पृथ्व्यंतानि तेभ्यः संभवः उत्पत्तिः यस्य तत्, इदं सूक्ष्मसंज्ञितत्वे हेतुः। लिंगं लिगि इत्यस्माद्धातोः ज्ञापकमात्मन इत्यर्थः। वागादीनां करणानां जडानां अधिष्ठातारमन्तरा तत्तत्कार्ये प्रवृत्यनुपपत्तेः, अचेतनं चेतनाधिष्ठितं कार्यं करोतीति व्याप्तेः रथादौ दृष्टत्वात्। बहिरन्तःकरणघटितं इदं शरीरमेव लिंगमित्युच्यते इत्यर्थः। तुरवधारणे, सुषुप्तौ ज्ञानस्य सर्वमतसिद्धत्वाभावात् जागरे स्वप्ने च मनोमूलकतयैव ज्ञानस्य जायमानत्वात् मनसोपि जडस्य आत्मप्रतिफलनमन्तरा इतरप्रकाशकत्वासंभवात् आत्मप्रतिबिंबग्राहित्वेन आत्मज्ञापक-मनोघटितत्वाच्च अस्य शरीरस्य लिंगत्वमित्यपि बोध्यम्। नेदं स्थूलकारणयोः संभतीति च। आत्मनः निर्धर्मकत्वात् स्थूलशरीरस्य तदा तदा विनाशित्वेन वहुत्वादामोक्षं स्थायित्वासंभवात् पूर्वपूर्व-संस्काराणां जनिष्यमाणानुभव-जन्यसंस्काराणां च आमोक्षं स्थायिलिंग-शरीरमेवाश्रय इत्याह सवासनमिति। वासनाभिः अनुभवजन्यसंस्कारैः सह वर्तत इति सवासनम्। भोगहेतुत्वमप्यस्यैवेत्याह, कर्मफलानुभावकं कर्मणः पुण्यस्य पापस्य च क्रमेणफले ये सुखदुःखे तदनुभवः भोगः तज्जनकं। सुषुप्तौ सवासनस्य लिंगशरीरस्य विलीनत्वादेव कर्मजसुखदुःखानुभवाभावः। जाग्रत्स्वप्नयोस्तु तथाविधस्य लिंगशरीरस्य सत्वात्तदनुभवः इत्यन्वयव्यतिरेकाभ्यां भोगहेतुत्वं तस्य ज्ञेयं। आत्मनः अनादिरुपाधिः इदं लिंगशरीरं, सूक्ष्मभूतजन्यमपि महाप्रलयादावपि अभिव्यक्त्यनभिव्यक्तिभ्यां एकमेवाऽऽविदेहकैवल्यं अवतिष्ठत इति स्थूलशरीरवत्सादित्वं नास्ति। ननु अविद्याशब्दिताध्यास-कामकर्मणां भिन्नभिन्नानामेव तदा तदा जायमानत्वात् तद्घटितलिंगशरीरस्य कथमेकस्यैव स्थिरत्वं संभवतीति चेत्। तेषां तथात्वेपि वागादीन्द्रियाणां

वाह्यानां अन्तःकरणस्य च बुद्ध्यादेरभिन्नानामेव आमोक्षं स्थितेरेकत्वं-मन्तव्यम्। नच वागादावपि भेदो वक्तव्यः, गौरवात्। कर्मप्रतिबन्धा-न्मूकत्वाद्युपपादन-संभवात्। सर्वकर्म-संस्कारास्पदस्य अन्तःकरणस्य भेदस्य सुतरां वक्तुमशक्यत्वात्। तत्रापि भेदे कृतहानाकृताभ्यागमापत्तेः। पूर्वकृत-कर्माद्याश्रयस्य अन्तःकरणस्य नष्टत्वात्, नूतनांतःकरणे कर्म-वासनाद्यभावात् संसारानुपपत्तिश्च। बालकस्य स्तन्यपाने प्रवृत्तिर्नस्यात् आत्मनः निर्धर्मकत्वात् अविद्याया एकत्वात् सुखदुःखादि-संकरप्रसंगात्। सुषुप्तौ भोगस्मृत्याद्युत्पत्तिप्रसंगात्, अतो गौरवादुक्त-दोषाच्च वागादीनां बुद्धेश्च आविदेहकैवल्यं अभिन्नानामेव स्थितिरिरिति मन्तव्यम्। यद्यपि तेषां प्रागभावाप्रतियोगित्व-रूपानादित्वं अविद्याया इव न संभवति, तथापि सकृदुत्पन्नानां अभिन्नानामेव स्थितिरिरिति तात्पर्येण अनादित्वमुक्तम्। वस्तुतः आत्मनः एकत्वेपि ज्ञानिष्वपि वर्तमानस्य ब्रह्मवित् ब्रह्मविद्वरः ब्रह्मविद्वरीयान् ब्रह्मविद्वरिष्ठः इति भूमिकाभेदव्यवहारस्य अन्तःकरण-भेदेनैव उपादिनीयत्वात् "यावत्कार्यमवस्थायि-भेदहेतोरुपाधिता" इति लक्षणं लिंगशरीरस्य निष्प्रत्यूहमिति उपाधित्वं तस्य। ननु असंगत्वेन केनाप्यनुपधीयमानस्य आत्मनः कथं लिंगेन सोपाधिकत्वं इत्यत आह स्वाज्ञानतः, स्वस्वरूपस्य इदानीमज्ञातत्वात् तन्मूलकः कल्पितः उपाधि-रित्यर्थः ॥९९॥

अस्य सूक्ष्मशरीरस्य असाधारणीमवस्थामाह। स्वप्न इति।

स्वप्नो भवत्यस्य विभक्त्यवस्था, स्वमात्रशेषेण विभाति यत्र।
स्वप्ने तु बुद्धिः स्वयमेव जाग्र-त्कालीन-नानाविधवासनाभिः॥
कर्त्रादिभावं प्रतिपद्य राजते, यत्र स्वयंज्योतिरयं परात्मा॥१००॥

अस्य सूक्ष्मशरीरस्य, विभक्त्यवस्था भेदकावस्था, स्वप्नो भवति। जागरस्य स्थूलसाधारणत्वात् सुषुप्तावस्यैव लीनत्वात् स्वप्न एव सूक्ष्मस्य प्राधान्यमिति भावः। तत्र हेतुं संगृण्हाति स्वमात्रेत्यादिना। स्वमेव स्वमात्रं तस्य शेषः अवशिष्टत्वं अभिमन्यमानेन स्वेनैव केवलमित्यर्थः। तदा स्थूलदेहे अभिमानाभावात् सूक्ष्मदेहस्यैकस्यैव विशेषतोभिमन्य-मानत्वमिति। यत्र स्वप्ने स्वमात्रपरिशेषेण स्थूलाभिमानं परित्यज्य

सूक्ष्मशरीरमात्रविषयकेण अभिमानेन विभाति प्रकाशते, आत्मा इति शेषः। संगृहीतमर्थं स्वमात्रशेषत्वं विवृणोति स्वप्नेत्वित्यादिना। स्वप्ने तु स्वप्नावस्थायां बुद्धिः अन्तःकरणं, स्वयमेव कारकान्तरनिरपेक्षं, जाग्रत्कालीन-नानाविधवासनाभिः जाग्रदवस्थायां जातैः बहुविधैः संस्कारैः, कर्त्रादिभावं कर्तृत्वं कर्मत्वं क्रियात्वं करणत्वं अधिकरणत्वं सकल-क्रिया-कारकभावमिति यावत्। प्रतिपद्य प्राप्य, राजते प्रकाशते। ननु जडस्य अन्तःकरणस्य कथमीदृशी शक्तिः? शरीरान्तर्गतनाडीषु हिताभिधानासु यदा मनः संचरति तदा स्वप्न इति श्रुत्या प्रतीतेः तत्र प्रकाशस्य दूरापास्त-त्वात् इति चेत्तत्राह यत्र स्वयं ज्योतिरयं परात्मा इति। "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" "यदादित्यगतं तेजो जगद्भासयतेऽ-खिलं। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं" इति श्रुति स्मृतिभ्यां जेगीयमानमहिम्नः पराप्रकाश्यस्य ज्योतीरूपस्य चैतन्यज्योतिषः परमात्मनःसंबंधात् अन्तःकरणस्य इयं शक्तिः जाग्रत्कालिक-वासना-सहकृतस्य। ननु "सत्यं ज्ञानं" "विज्ञानमानन्दं ब्रह्म" "अयमात्मा ब्रह्म सर्वानुभूः" "प्रज्ञानं ब्रह्म" "कृत्स्नः प्रज्ञानघन एव" इत्यादिश्रुतिभ्यः आत्मनः सार्वदिक-चैतन्य-ज्योतीरूपत्वेन स्वयंज्योतिष्ट्वस्य सर्वदा सत्वेन किं विशेषतः यत्र स्वयंज्योतिरयं परात्मा इति स्वप्न एव तदुच्यते इति चेच्छृणु तत्र कारणम्। बृहदारण्यकगत-ज्योतिर्ब्राह्मणस्य आमूलचूडं परिशीलनेन इदं स्पष्टं सुज्ञानं। तत्र हि "किंज्योतिरयं पुरुषः" इति जनकेन पृष्टो भगवान् याज्ञवल्क्यः आदौ सर्वलोकप्रसिद्धं सूर्यं तस्मिन्नस्तमिते चन्द्रमसं तस्मिन्नस्तं याते अग्निं तस्मिन्शान्ते वाचं शान्तायां च तस्यां आत्मानं ज्योतिरुवाच शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मै-वास्य ज्योतिर्भवतीति आत्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्यन्तेन। यद्यपीदं ज्योतिष्ट्वं सदातनं, तथापि जाग्रति करणाद्यनुग्राहकाणां इतरेषां आदित्यादीनां बाह्यानां ज्योतिषां सत्व-दशायां आन्तरबाह्य-कार्यकरण-संघातव्यवहारस्य संकुलतायां च न विविक्तं दर्शयतुं शक्यते। सुषुप्तौ विविक्तत्वेपि प्रकाश्यवस्तुनोभावात् तदा सर्वस्य दृश्यस्य लीनत्वात्। यद्यप्यस्ति अज्ञानं तथापि तद् अभाव-रूपत्वेन चर्चास्पदमतः जाग्रत्काल इव यत्र व्यवहारः सर्वो वर्तते अपितु

बाह्यज्योतींषि न संति स्थूलशरीरं नास्ति बाह्यकरणानां चोपरतव्यापारत्वं तदा मनः एकमेव आत्मज्योतिःप्रतिफलनमहिम्ना जाग्रद्वासनाविशिष्टं सर्वाकारतां भजते इति विविक्ते तस्मिन्काले स्वयंज्योतिष्ट्वमुपदिश्यमानं सुग्रहं भवतीत्यभिप्रायेण "अत्रायं पुरुषः स्वयंज्योति" रित्युक्तिः। यथा सर्वदापि सजातीय-विजातीय-स्वगतभेदरहिताबाधित-ब्रह्मरूपेण जगतः सत्त्वेपि सृष्टेः प्राक् "सदेव सोम्येद-मग्र आसीदेकमेवाद्वितीयं" इति श्रोतृबुध्यारोहाय छान्दोग्ये उपदिष्टं तद्वत् स्वप्ने मनसः जाग्रत्संस्कार-युक्तस्यापि जडस्य परप्रकाश्यत्वनियमात् चैतन्य-ज्योतिस्स्वरूप-परमात्म-प्रतिफलनवशादेव सूर्यचन्द्रादि-प्रकाशक-रूपेण घटपटादिप्रकाश्यरूपेण परिणममानत्वयोग्यता। अत एव अन्धादयोपि स्वप्ने पदार्थान्पश्यन्ति। तेषां जागरे चक्षुरभावात् कथं दर्शनं? मन एव चक्षूरूपेण आत्मशक्त्या परिणमत इत्येव वक्तव्यं। एवं चक्षुरादित्यादि-ज्योतिरभावदशायां प्रति-भासमान-सकलपदार्थभासकत्वं आत्मन एवेति श्रोतृबुद्धौ स्फुटमारोहयितुं शक्यत्वात् यत्र स्वयंज्योतिरयं परात्मा इति श्रुत्यनुसारेणोक्तं मूले ॥१००॥

आलोकदानेन सकलप्राणि-प्रेरकोपि सूर्यः यथा तत्कर्मभिः न सज्यते एवमात्मापि बुद्धिकृत-कर्मणेत्यसंगत्वमपि प्रसंगादाह ज्योतिष्ट्व स्वाभाव्यात्। धीमात्रकोपाधिरिति।

धीमात्रकोपाधि-रशेषसाक्षी
न लिप्यते तत्कृतकर्मलेपैः।
यस्मादसंगस्तत एव कर्मभिः
न लिप्यते किंचिदुपाधिना कृतैः ॥१०१॥

धीरेव धीमात्रं स्वार्थे कप्रत्ययः, धीमात्रकं उपाधिर्यस्य स्वप्न धीमात्रकोपाधिः तत्कृतकर्मलेपैः तया धिया कृतानि यानि कर्माणि तेषां लेपैः संबन्धैः न लिप्यते विशिष्टो न भवति। तत्र हेतुः अशेषसाक्षीति, अकर्तृत्वे सति बोद्धृत्वस्यैव साक्षित्वात्, कर्तुरेव कर्मलेपात्, नहि लोकेपि वादिप्रतिवादिकर्मभिः संबध्यते साक्षी, तद्वदित्यर्थः। "असंगोह्ययं पुरुषः" "असंगो नहि सज्जते" इत्यादिश्रुत्यनुसारेणासंगत्वाच्च। बुध्या

वाग्गादिना वा केनाप्युपाधिना क्रियमाणकर्मलेपोप्यस्य नास्तीत्याह यस्मा-दसंग इति। तत एव असंगत्वरूपकारणादेव उपाधिना कृतैः शरीरेण वा वाचा वा मनसा वा केनाप्युपाधिना कृतैः कर्मभिः समीचीनासमीचीन-कर्मभिः किंचिदपि न लिप्यते न संवद्धो भवति॥१०१॥

संगस्तूपाधि-कल्पितः, वास्तविकमसंगत्व-मित्युपपादयति। सर्वेति।

सर्वव्यापृति-करणं लिंगमिदं स्याच्चिदात्मनः पुंसः।
वास्यादिकमिव तक्ष्णः तेनैवात्मा भवत्यसंगोयम् ॥१०२॥

चिदात्मनः ज्ञानस्वरूपस्य, पुंसः पुरुषस्यात्मनः, इदं लिंगं बुध्यादि-घटितं लिंगशरीरं, तक्ष्णः, त्वष्टुः, वास्यादिकमिव तक्षणकरण-द्रव्य-विशेषादिकमिव सर्वव्यापृतिकरणं सकलव्यापारासाधारण-कारणं, तक्ष्णोपि तक्षणकरणसत्व एव दार्वादि-तक्षणसामर्थ्यं न स्वभाविकं, तथा-त्मनोपि आज्ञानिकलिंगशरीरसंबन्ध एव सकलोव्यवहारः। अत एव सुषुप्तौ न व्यवहारः लिंगशरीरसंबंधस्य तदा अभावात्। तेनैव लिंगशरीरसत्वे व्यापृतिः तदभावे तदभाव इति लोकसिद्धहेतुनैव। अयं आत्मा। असंगः वास्तविक-सकलव्यवहार-संगहीनः भवतीत्यर्थः॥१०२॥

ननु अहंप्रतीतिविषयस्यैवात्मत्वात् अहमन्धः अहं बधिरः अहं मूकः अहमुच्छ्वसिमि क्षुत्पिपासापीडितोस्मि अहं करोमि सुखी दुःखीत्यादि-बहुतर-धर्मसंबन्धात् असंगत्वमनुपपन्न-मात्मन इति चेत्, तेषां सर्वेषां धर्माणां तत्तदुपाधिगतत्वादात्मनः कोपि धर्मः सांसारिकः नास्तीति वक्तुं उपाधि-धर्मान् विभजते। अन्धत्वेत्यादिना।

अन्धत्व-मन्दत्व-पटुत्वधर्माः
सौगुण्य-वैगुण्य-वशाद्धि चक्षुषः।
बाधिर्य-मूकत्व-मुखास्तथैव
श्रोत्रादिधर्मा न तु वेत्तुरात्मनः॥ १०३॥

आदौ बहिरिन्द्रियधर्मानाह। चक्षुषः सौगुण्य-वशात् पटुत्वं, वैगुण्यवशादन्धत्वं मन्दत्वं। एवं श्रोत्रवैगुण्यात् बाधिर्यं मन्दत्वं। तत्सौ-गुण्यात् पटुत्वं। वागिन्द्रियवैगुण्ये मूकत्वं, तत्सौगुण्ये पटुत्वं। एवं त्वग्घ्राण-रसनरूपेषु ज्ञानेन्द्रियेषु पाणिपादादिषु कर्मेन्द्रियेषु च वेदितव्यम्। एतत्सर्वं

नात्मनः। तत्र हेतुमाह वेत्तुरिति। चक्षुरादौ मन्दत्वपटुत्वादिकं वर्तमानं साक्षिणात्मना वेद्यत इति न वेद्यस्य वेत्तृधर्मत्वं संभवतीति भावः। तुरव-धारणे नैवेत्यर्थः ॥१०३॥

उच्छ्वास-क्षुत्पिपासादेः प्राणधर्मत्वमाह। उच्छ्वासेति।

उच्छ्वास-निश्वास-विजृंभण-क्षुत् प्रस्पंदनाद्युत्क्रमणादिकाःक्रियाः।
प्राणादिकर्माणि वदन्ति तज्ज्ञाः प्राणस्य धर्मावशना-पिपासे॥१०४॥

प्राणादीत्यादिपदेन अपानादीनां नागादीनां चपरिग्रहः। उच्छ्वासः प्राणस्य, निश्वास अपानस्य, विजृम्भणं देवदत्तस्य, क्षुतं कृकरस्य, प्रस्पंदनं प्रकर्षेण चलनं व्यानस्य धनंजयस्य वा। आदिपदेन उन्मीलनपरिग्रहः। तत्तु कूर्मस्य, उत्क्रमणमुदानस्य, आदिपदेन वमनं तदपि तस्यैव। एतानि कर्माणि प्राणादीनां तज्ज्ञाः वदन्ति। इदमिदं कर्म अस्येति विशेषज्ञाः इत्यर्थः। एवमशना-पिपासे क्षुत् पिपासा च प्राणस्य धर्मौ। अत एव निद्रायां क्षुत्पिपासाद्यभावः तदा प्राणे अभिमानाभावात् ॥१०४॥

यद्येवमन्धत्वादीनां अनात्मचक्षुरादिधर्मत्वं, कुतो-वा अयमात्मा स्वात्मानं तद्धर्मवन्तं जानातीति शंकायामाह। अन्तःकरणमिति।

अन्तःकरणमेतेषु चक्षुरादिषु वर्ष्मणि।
अहमित्यभिमानेन तिष्ठत्याभासतेजसा ॥१०५॥

अन्तःकरणं मनः, एतेषु चक्षुरादिषु ज्ञानेन्द्रियेषु वागादिकर्मेन्द्रियेषु प्राणादिषु, वर्ष्मणि स्थूलशरीरे च, आभासतेजसा चित्प्रतिफलन-प्रयोज्य-तेजसा जीवेनेत्यर्थः। अहमित्यभिमानेन अज्ञानप्रयोज्येन तादात्म्यभिमानेन तिष्ठति। यतः विवेकशून्यं आत्मानात्म-विवेकशून्यं अन्तःकरणं स्वप्रति-विंवं गृहीत्वा चेतनीभूय चक्षुरादिकं शरीरान्तं अहमित्यभिमन्यते अतः तद्वशः आत्मापि तद्धर्मान् अन्धत्वादीन् स्वस्मिन्कल्पयित्वा अहमन्ध इत्यादि-रीत्या व्यवहरतीत्यर्थः। सुषुप्तावन्तःकरणे आत्मप्रतिफलनमपि नास्ति अहमन्ध इत्यादिव्यवहारोपि नास्ति। एवं स्वप्ने प्रतिफलनसत्वेपि चक्षुरादौ आभासतेजसा अन्तःकरणं न तिष्ठति स्वप्ने बाह्यकरणगणस्य लयादित्यपि वेदितव्यम्। तेनैव स्वप्नेपि अन्धत्वादिव्यवहारः जाग्रतीव नास्तीति भावः ॥१०५॥

एवं बाह्यः सर्वः संसारः अन्तःकरणमूलकः आत्मन इत्युक्त्वा कर्तृत्व-सुखदुःखादिकं आन्तरं तस्यैवेत्याह। अहंकार इति।

अहंकारः स विज्ञेयः कर्ता भोक्ताभिमान्ययम्।
सत्वादिगुणयोगेना-वस्थात्रितयमश्नुते ॥१०६॥

एवं चित्प्रतिबिंब-विशिष्टमन्तःकरणमेव चक्षुरादौ शरीरेच अह-मित्यभिमानेन वर्तमानं अहंकार इति विज्ञेयं। स इति विधेयप्राधान्या-न्निर्देशः। अयमेव कर्ता भोक्ता इत्यभिमानी। अस्य सत्वरजस्तमोरूप-गुणत्रयमय-प्रकृतिकार्यत्वात् सत्वादिगुणयोगेन अवस्थात्रितयं जाग्रत्स्वप्न-सुषुप्तिरूपावस्थात्रयं अयं अश्नुते प्राप्नोति रजोगुणयोगेन जागरः, सत्वयोगेन स्वप्नः, तमसा सुषुप्तिरिति भेदः। सर्वदा गुणत्रयसत्वेपि तदा तदा तस्य औत्कट्यं ज्ञेयम् ॥१०६॥

एवं कर्तृत्वभोक्तृत्वे आन्तरे तद्धर्मावित्युक्त्वा सुखदुःखयोरपि तद्धर्मत्व-माह। विषयाणामिति।

विषयाणामानुकूल्ये सुखी दुःखी विपर्यये।
सुखं दुःखं च तद्धर्मः सदानन्दस्य नात्मनः ॥१०७॥

विषयाणां शब्दादीनां आनुकूल्ये स्वकीयेच्छानुसारेण संप्राप्तौ सुखी, अहं सुखीति प्रतीतिः। विपर्यये प्रातिकूल्येन स्वेच्छाविरोधेन प्रसक्तौ दुःखी, अहं दुःखीत्यभिमानः। अतः सुखं दुःखं च तद्धर्मः तदिच्छानुरोधित्वा-त्तयोः, सदा सर्वदा आनंदस्य आनन्दस्वरूपस्य "आनन्दो ब्रह्म" "विज्ञान-मानन्दं ब्रह्म" "रसो वै सः" "यदेष आकाशः" इत्यादिश्रुतिभ्यः, आत्मनः न धर्म इत्यनुषज्यते। युज्यते चैतत् विचार्यमाणे कालांतरे यः शब्दः सुखमजीजनत् स एव कालान्तरे दुःखं जनयतीति प्रसिद्धं लोके। तत्र मनोभेदं विना नान्यस्य हेतुत्वं सुवचं विषयस्यैकरूपत्वात् कालस्य च। तेनैव शब्देन पुरुषान्तर-सुखोत्पत्तेर्दर्शनात् तस्मिन्नेव काले अहेतुत्वा-योगात्। मनस्तु पूर्वमिमं शब्दं अनुकूलं व्यजानात् इदानीं तु प्रतिकूलं मन्यते इति तस्यैव सुखं दुःखं च धर्म इति ॥१०७॥

इदानीं श्रुतिप्रसिद्धं सदानन्दत्वं आत्मनः युक्त्या प्रतिपादयति। आत्मार्थत्वेनेति।

आत्मार्थत्वेन हि प्रेयान् विषयो न स्वतः प्रियः।
स्वत एव हि सर्वेषां आत्मा प्रियतमो यतः॥१०८॥

हि यस्मात्कारणात् विपयः स्वतः विषयत्वेन हेतुना न प्रियः प्रीतिगोचरः किंतु आत्मार्थत्वेन आत्मनः सुखं दुःखनिवृत्तिं वा जनयतीति प्रेयान् प्रेमविषयः। यदि स्वत एव विषयत्वेन शब्दादिरूपत्वेन प्रेयान्स्यात् कदापि प्रेयस्त्वं न व्यभिचरेत्। त्यजंति पूर्वमिष्टत्वेन ज्ञातमपि शब्दादिकं पुत्रमित्रकलत्रादिकंच। शरीरमपि दण्डयन्ति प्राणं निरुन्धन्ति मनश्च लयमापादयन्ति किमन्यत्, आनंदमयकोशत्वेन प्रसिद्धं अज्ञानमपि भंजयन्ति। तत्र कारणं इतरत्र आनन्दरूपत्वाभावः आनन्द-प्रयोजकत्वस्याप्यनियतत्वम्। आत्मनस्तु आनन्दरूपत्वस्य स्वतःसिद्धत्वात् सर्वदा प्रियतमत्वं, उक्तं हि "मा नभूवं हि भूयासमिति प्रेमात्मनीक्ष्यते" इति। कदापि माभूवमिति न, अपितु सर्वदा भूयासमिति तदर्थः। तत्तु आत्मनः एकस्यैव युज्यते, स्थूलं स्वप्ने न भासते सूक्ष्मं सुषुप्तौ न, कारणं न समाधौ। शब्दादिविषयाश्च न सुषुप्तिसमाध्योः। यदा स्थितिस्तेषां जागरस्वप्नयोः तदापि नैयत्येन आनन्दजनकत्वाभावः। इदमुपपादितमधस्तात्। अतः सर्वावस्थासु अनुवर्तमानः विषयाद्यभावेपि सकलप्राणिसिद्धतया सुषुप्तौ, ज्ञान्यनुभवेन समाधौ च आनन्दरूपत्वेन अनुभवगोचरः आत्मा स्वत एव निरुपाधिकतया सर्वेषां प्राणिनां प्रियतमो मतः, हि यस्मात्॥१०८॥

तत आत्मा सदानन्दो नास्य दुःखं कदाचन।
यत्सुषुप्तौ निर्विषय आत्मानन्दोऽनुभूयते।
श्रुतिः प्रत्यक्षमैतिह्यं अनुमानं च जाग्रति॥१०९॥

ततः सर्वदा सर्वप्राणिप्रियतमत्वात् आत्मा सदानन्दः सर्वदाप्यानन्दस्वरूपः। अस्य दुःखं आनन्दस्वरूपस्य, कदाचन कदापि नास्तीत्यर्थः। तत्रानुभवं प्रमाणयति यदिति। यस्मात्सुषुप्तौ अवस्थायां, निर्विषयः आनन्दहेतुत्वेनाभिमत-शब्दस्पर्श-रूपरस-गन्धादि-सकलविषय-संबन्धनिर्मुक्तः, आत्मानन्दः स्वरूपानन्दः स्वभावसिद्धः अनुभूयते, सर्वैरपीति शेषः। अस्यानुभवस्य देहात्मानुभववन्नभ्रान्तित्वं वक्तव्यमित्याह श्रुतिरिति। "एषोस्य परम आनन्दः" "एषास्य परमा संपत्" इति सौषुप्तानन्दस्यैव अज्ञानि-

परमानन्दत्वसंकीर्तनात्। युक्तं ह्येतत् वैषयिकानन्दः सामयः अयं निरामय इति। अत एव किल सार्वभौमोपि सहस्रशः विषयान् लब्धुं भोक्तुं समर्थोपि निद्रां विना जीवितुं न प्रभवति। तत्र कारणं स्वरूपानन्दस्य दुःखालिप्तत्वं। तदुक्तं "को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्" इति। आकाश आकाशवन्निर्लिप्त इत्यर्थः। सुषुप्तौ यद्यपि तमसा आव्रियते सुखं, अथापि जाग्रत्स्वप्न-सुखापेक्षया तस्य परमत्वे, किं वक्तव्यं तस्मिन् तमस्यपि ज्ञानेन नाश्यमाने आवरणनिवृत्या मिहिका-विगमे भ्राजमानः सूर्य इव स्वयं प्रकाशमानः आत्मानन्दः ईदृगिति। एवं श्रुतिः, प्रत्यक्षं साक्षिप्रत्यक्षं सर्वजनसिद्धं, ऐतिह्यं अभियुक्तानां वचनं, अनुमानं आत्मा सदानन्दस्वरूपः सदा निरतिशयप्रेमास्पदत्वात् यन्नैवं तन्नैवं, यथा शब्दादिः इत्यादि च जाग्रति प्रमाणानि आत्मनः सदानन्दत्व-विषये ॥१०९॥

एवमियता प्रबन्धेन अनात्मनः स्थूलदेहं शब्दादिविषयान् सूक्ष्मदेहं च विभज्य तद्धर्मांश्च निर्धर्मकासंगात्म-तत्वप्रतिपत्यर्थं विविच्य इदानीं उक्तानां अनात्मनां हेतुं कारणदेहं निरूपयितुमारभते। अव्यक्तेति।

**अव्यक्तनाम्नी परमेशशक्तिः अनाद्यविद्या त्रिगुणात्मिका परा।**
**कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदं प्रसूयते ॥११०॥**

अव्यक्तमिति नाम यस्याः, तस्याः प्रत्यक्षतः अनुपलंभात्। तत्र हेतुः रूपादिरहितत्वं। परमेशस्य परमेश्वरस्य ब्रह्मणः, शक्तिः अचिन्त्याद्भुतशक्तिः न विद्यते आदिः यस्याः अनादिः सा च सा अविद्या च। वस्तुतः न विद्यते इत्यविद्या अनाद्यविद्या। त्रयो गुणाः सत्वरजस्तमांसि यस्य तथाविधः आत्मा स्वरूपं यस्याः त्रिगुणात्मिका। यद्वा त्रयो गुणाः त्रिगुणाः त एव आत्मा यस्याः गुणत्रयस्वरूपेत्यर्थः। परा हिरण्यगर्भादि-स्वकार्येभ्यः परा उत्कृष्टा तत्कारणत्वात्। अव्यक्तनामत्वे हेतुमाह कार्यानुमेया रूपाद्य-भावेन प्रत्यक्षगोचरत्वाभावेपि शब्दादिभिः गगनादिकमिव कार्यलिंगेनानु-मेया। एतच्छक्त्यनंगीकारे निर्गुणस्य ब्रह्मणः स्रष्टृत्वायोगात् निष्कारणं कार्योत्पत्ययोगात् खादिसकलविकारहेतुत्वेन श्रुत्या प्रतीयमानेक्षण-संकल्पादि-परिणामित्वेन मायायाः सिद्धिरिति भावः। अशब्दशरणाः

अन्यथान्यथा जगदुत्पत्तिं तर्कयन्ति तदसंगतमिति सूचयति सुधियेति। सुष्ठुता च धियि श्रुत्यनुसारित्वं, तत्सूचितं परमेशशक्तिपदेन। तेन सांख्यैरुच्यमानं जडं स्वतन्त्रं प्रधानं सत्यं जगन्मूलमित्यादिक-मपास्तम् वेदितव्यम्। अत्र श्रुतिरप्यस्ति "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" "जीवेशावाभासेन करोति माया ऽविद्या च स्वयमेव भवति" "इन्द्रो मायाभिः पुरुरूप ईयते" इत्याद्या। तथाच सुष्ठु शोभना श्रुत्यनुसारिणी धीः यस्य स सुधीः तेन सुधिया कार्यानुमेया माया यया इदं सर्वं जगत् महत्तत्वादि-ब्रह्माण्डान्तं प्रसूयते तत्कारणंनाम शरीरमात्मनः इति व्यवहितेन संबन्धः ॥११०॥

तस्याः स्वरूपमाह। सन्नापीति।

सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो।
सांगाप्यनंगाप्युभयात्मिका नो महाद्भुताऽनिर्वचनीयरूपा॥१११॥

लोके तावत् अबाधितस्य सत्वं बाध्यमानस्य असत्यत्वं प्रसिद्धं, यथा ऋतस्यानृतस्य च। कदापि कस्यापि अप्रतीयमानस्य असत्वं शशविषाणगगनकुसुमादेः। इयं तु माया "भूयश्चान्ते विश्वमाया-निवृत्तिः" "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते। योगी मायाममेयाय तस्मै विद्यात्मने नमः"। "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादिश्रुतिस्मृतिभ्यः ज्ञानबाध्यत्वेनावगम्यते। अतः तस्याः आत्म-वत्सत्वं दुर्वचम्। "नाभावो विद्यते सतः" इति गीतायाश्च अस्याः ज्ञानानन्तरं अभावावश्यंभावात् न सत्त्वं। ज्ञानात्प्राक् कार्यरूपेण प्रतीय-मानत्वेन तत्परिणामित्वेन अनुमितिविषयत्वेन च न शशविषाणवदसत्वं सुवचम्। सत्वासत्वयोः व्याप्यवृत्तित्वेन कालभेदेन एकत्र स्वीकर्तु-मनुचितत्वेन नोभयात्मकत्वं तस्याः। एकैकरूपत्वाभावे उभयात्मकत्वस्य अत्यंतासंभवाच्च। यथा स्वाप्निकपदार्थानां ऐन्द्रजालिकपदार्थानां च दृष्टनष्टस्वरूपत्वान्मिथ्यात्वं सदसद्विलक्षणत्वरूपं तथा अस्या अपीति भावः। उक्तं हि "नासतो विद्यते भावः नाभावो विद्यते सतः। उभयो-रपि दृष्टोन्तस्त्वनयोस्तत्वदर्शिभिः" इति गीतायां। यद्यपि लौकिकाः पूर्वमुत्पत्तेः अत्यन्तमसतः घटादेर्भावं, उत्पत्यनन्तरं सत्वेन अभ्युपगतस्य तस्य नाशे अभावं चांगीकुर्वन्ति तदसंगतमिति सर्वज्ञेन भगवतैवोक्तम्

अनयोरुभयोः अन्तः निर्णयः तत्त्वदर्शिभिः दृष्टइति कथयता। इत्थंच इयं माया सत् सद्वस्त्वपि न, असद्वस्त्वपि न उभयात्मिका सदसदात्मिका नो। अपितु सत्वासत्वाभ्यां निर्वक्तुमशक्यत्वात् अनिर्वचनीयरूपा। यथा सत्वेन वा असत्वेन वा निर्वक्तुमशक्या एवं ब्रह्मणो भिन्नत्वेन अभिन्नत्वेन च अनिर्वचनीयेत्याह। ब्रह्मणोत्यंतभिन्नत्वे अद्वैतबोधक-श्रुतिविरोधात् लोकेपि शक्तेः शक्तिमतोत्यंत-भेदाभावाच्च। एवमभिन्नत्वे तस्याः बाधायोगात् ब्रह्मणः कालत्रयाबाध्यत्वात्। भिन्नाभिन्नत्वे विरुद्धे अतः भिन्नापि न अभिन्नापि न उभयात्मिकापि नो भवतीत्यर्थः। एवं अनादित्वेन सांगा सावयवा न भवति सावयवत्वे जन्यत्वापत्तेः। निरवयवत्वे परिणामा-संभवात् तदपि वक्तुमशक्यम्। अतः अनंगा अनवयवापि न। उभया-त्मिकापि नो सावयवत्व-निरवयवत्वयोः एकत्र विरोधादेव। अतः सत्वासत्वाभ्यां भिन्नत्वाभिन्नत्वाभ्यां सांगत्वानंगत्वाभ्यां निर्वक्तुमशक्यं रूपं यस्याः सा अनिर्वचनीयरूपा महाद्भुता अत्यंताश्चर्यरूपा ॥१११॥

अस्याः अत्यंतनिवृत्तिहेतु-सत्वाच्च नासत्वमित्याह। शुद्धाद्वयेति।

शुद्धाद्वय-ब्रह्मविबोधनाश्या
सर्पभ्रमो रज्जुविवेकतो यथा।
रजस्तमस्सत्वमिति प्रसिद्धा
गुणास्तदीयाः प्रथितैः स्वकार्यैः ॥११२॥

शुद्धं निर्गुणं अद्वयं सजातीय-विजातीय-स्वगतभेदशून्यं यद्ब्रह्म तस्य विबोधः अभेदेन साक्षात्कारः तेन नाश्या तज्जन्यध्वंस-प्रतियोगिनी। तत्र दृष्टान्तमाह सर्पभ्रमः रज्वां जातः अयं सर्प इति भ्रमः, रज्जुविवेकतो यथा कल्पित-सर्पाधिष्ठानभूतरज्जुसाक्षात्कारेणेव नायं सर्पः किंतु रज्जु-रित्याकारेण। तेन निर्गुणे अद्वितीये कल्पितायाः मायायाः अधिष्ठानतत्व-साक्षात्कारबाध्यत्वमुक्तम्। यदुक्तं पूर्वं कार्यानुमेया सुधियैव मायेति तद्विशदयति, तद्धर्म-गुणकार्य-प्रतिपादनमुखेन रजइत्यादिना। तदीयाः तस्याः इमे तदीयाः मायासंबंधिनः गुणा धर्माः रजः तमः सत्वमिति प्रसिद्धाः। तेषामप्रत्यक्षत्वात् कार्यमुखेन प्रसिद्धिमाह प्रथितैरिति। प्रसिद्धैः तत्तद्गुणकार्यैः वक्ष्यमाणैः ॥११२॥

क्रमेण रजस्तमस्सत्वगुणानां कार्याणि विवक्षन् आदौ रजोगुण-कार्याण्याह। विक्षेपेति।

विक्षेपशक्ती रजसः क्रियात्मिका
यतः प्रवृत्तिः प्रसृतापुराणी।
रागादयोस्याः प्रभवन्ति नित्यं
दुःखादयो ये मनसो विकाराः ॥११३॥

मायायां सन्ति तिस्रः शक्तयः। विक्षेपशक्तिः आवरणशक्तिः ज्ञानशक्तिश्चेति तत्राद्ययोः बन्धकर्तृत्वं, तृतीया मोक्षहेतुः। तत्र विक्षेप-शक्तिः रजसः रजोगुणस्य, क्रियात्मिका कार्यरूपा। यदा उद्रिच्यते रजः तदा विक्षेपाः बहुधा भवन्तीति ज्ञेयमित्यर्थः। यतः रजःकार्यभूत-विक्षेप-शक्तेस्सकाशात् पुराणी अनादिकालसिद्धा प्रवृत्तिः संसारहेतुभूता प्रवृत्तिः प्रसृता विस्तृता, सा जीवीया वा प्रपंचसृष्टिहेतुभूता ईश्वरीया वा भवतु प्रपंचसृष्टिरेपि विक्षेपशक्तिकार्यत्वात्। तत्रेश्वरस्य शुद्धसत्व-प्रधान-मायोपहितत्वात् तस्याः स्वाधीनत्वाच्च न बन्धस्य प्रसक्तिरिति। जीवस्य तु मलिनसत्वप्रधानाविद्योपाधिकत्वात् ज्ञानशक्तेः रजस्तमोभ्यां प्रतिहन्यमानत्वात् उपाध्यधीनत्वं तत्कृतबन्धवत्वं चेति। रागादय इत्यादिकं जीवविषये ज्ञेयम्। अस्याः रजःकार्यविक्षेपशक्तेः सकाशात् रागादयः रागद्वेषादिदोषाः प्रवृत्तिहेतवः नित्यं जीवस्य प्रभवन्ति। ततः येमनसो विकाराः दुःखादयः, दुःखहर्षतर्षामर्षादयः मनस एव नतु कदाचिदपि निर्विकारस्यात्मनः इति बोधयितुं मनस इत्युक्तं, "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेः। तत्तादात्म्याध्यासात् जीवे कल्प्यंते न वस्तुतः तत्र सन्ति "साक्षी चेता केवलो निर्गुणश्च" "नान्योतोस्ति द्रष्टा" "निष्कलं निष्क्रियं शान्तम्" इत्यादिश्रुतेः ॥११३॥

इदानीं रागादय इत्यत्र आदिपदग्राह्यान् रजःकार्य-विक्षेपशक्ति-कार्यत्वेन राजसान् धर्मान् तेषां घोरत्वेन दुःखहेतुत्वं तेषां संततप्रवृत्ति हेतुत्वेन तन्मूलस्य रजसः बन्धकत्वं चाह। काम इति।

कामः क्रोधो लोभदम्भाभ्यसूयाऽहंकारेर्ष्या-मत्सराद्यास्तु घोराः।
धर्मा एते राजसाः पुंप्रवृत्ति-र्यस्मादेतत्तद्रजो बन्धहेतुः ॥११४॥

कामः विषयेच्छा, क्रोधः तदभिघाते जायमान-मानसवृत्तिः कोपाख्या। लोभः अर्थस्य प्राप्तौ तत्संरक्षणमतिः। दंभः धर्मध्वजित्वं। अभ्यसूया परोत्कर्षासहनं। अहंकारः स्वोत्कृष्टत्वज्ञानं। ईर्ष्या गुणेषु दोषाविष्करणं। मत्सरः अक्षीयमाण-वस्त्वपरित्यागेच्छा। यथा राजकीयोदपानात् नोदकं पाः इति वृत्तिः। आदिपदेन मद-दर्पादि-परिग्रहः। एते लोकद्वयेऽपि भयहेतवः अत एव घोरा इत्युक्तम्। यस्मात्कामक्रोधादिविशिष्टः पुमान् न प्रवृत्तेर्विरमति कदाचिदपि, सर्वदापि यत्किंचित्कुर्वाण एवावतिष्ठते अतः एते धर्मा राजसाः। रजः कर्मणि भारत संजयति इत्युक्तत्वाद्गीतायां सर्वदा यत्किंचित्कर्महेतूनां एतेषां राजसत्वं। "प्रवर्तनालक्षणा दोषाः" इति न्यायसूत्रं। सर्वतो निवृत्तौ हि सुखं। अत्र कस्यापि निवृत्तिप्रयोजकत्वभावाच्च। "लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा। रजस्येतानि जायन्ते विवृद्धे भरतर्षभ" इत्यपि गीता। यस्मात् पुंप्रवृत्तिः एतत् सर्वजनानुभवसिद्धं तत् मायागुणत्वेन कथितं रजः बन्धहेतुः। कार्यकरणसंघाताध्यासस्यैव बन्धकत्वात् अध्यासं विना कर्मासंभवात् रजसः बन्धहेतुत्वं विज्ञेयम्। "न ह्यनध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते" इत्यध्यासभाष्यात् ॥११४॥

इदानीं तमसः शक्तिं आवृतिं विक्षेपशक्ति-प्रसरहेतुं सकल-संसारादि-कारणं निरूपयति। एषेति।

एषावृतिर्नाम तमोगुणस्य शक्तिर्यया वस्त्ववभासतेऽन्यथा।
सैषा निदानं पुरुषस्य संसृतेः विक्षेपशक्तेः प्रसरस्य हेतुः ॥११५॥

यया शक्त्या वस्तु अन्यथा अवभासते सच्चिदानन्दरूपं वस्तु अन्तःकरणदेहादिरूपेण भासते एषा आवृतिः आवरणं नाम तमोगुणस्य शक्तिः। पुरुषस्य संसृतेः दुःखजन्म-जरामरणादिरूपायाः, निदानं आदि-कारणं। भ्रान्त्या किलानात्मधर्मान् असंसारिणि मन्यते। अतः अयथा-वस्त्ववभासरूप-भ्रान्तिहेत्वावरणशक्तिरेव संसारनिदानं। एतस्याः

अभावे विक्षेपशक्तिरकिंचित्करेत्याह विक्षेपशक्तेः प्रसरस्य हेतुरिति। आवृतेः रज्जुस्वरूपे सर्परूप-विक्षेप उत्पद्य भयादिकं जनयति नान्यथेति भावः। अत एव ज्ञानिनां भग्नावरणत्वात् प्रारब्धकर्मात्मकविक्षेपसत्वेपि वन्धाभावः। इदं तावत् "कवलितदिननाथे" इति श्लोके स्पष्टं ज्ञास्यते। लोकेपि क्वचिद्वस्तुनि संशयो वा विपर्ययो वा यस्य तस्यैव विक्षेपक्षोभ्यमाणत्वं। यस्य निष्कृष्टं ज्ञानं तस्य विक्षेपः नैव भवति। अतः तमोगुण-शक्तिः स्वरूपमावृत्य अन्यथा तद्वस्त्ववभासयन्ती विक्षेपजनन-द्वारा वन्धहेतुरिति भावः ॥११५॥

बंधहेतु-शक्तिद्वयमध्ये अस्याः प्रावल्यमाह। प्रज्ञावानपीति।

प्रज्ञावानपि पण्डितोपि चतुरोप्यत्यन्त-सूक्ष्मार्थदृ-
ग्व्यालीढस्तमसा न वेत्ति बहुधा संबोधितोपि स्फुटम्।
भ्रान्त्यारोपितमेव साधु कलयत्यालंबते तद्गुणान्
हंतासौ प्रबला दुरन्ततमसः शक्तिर्महत्यावृतिः ॥११६॥

प्रज्ञावान् "प्रज्ञा त्रैकालिकी मता" इति मानात् कालत्रयेपि निश्चलबुद्धिमानित्यर्थः। सोपि पण्डितोपि शास्त्रजन्यज्ञानं परोक्षं पण्डा सास्य संजातेति पण्डितः तथाविधोपि, चतुरोपि ऊहापोहविचक्षणोपि। अत्यन्तसूक्ष्मार्थदृक् प्रज्ञापाण्डित्य-चातुर्याणां अत्यंतसूक्ष्मार्थ-दृक्त्वे हेतुत्वं ज्ञेयम्। सर्वदा निश्चलबुद्धिमता शास्त्रसाहाय्येन ऊहापोहकौशलेन च अत्यंतसूक्ष्मान् पदार्थानपि ग्रहीतुं शक्यत्वात्। एतादृगपि पुरुषः तमसा व्यालीढः विशेषेण आ समंतात् लीढः आवृतस्वरूपः इत्यर्थः। पटुचक्षुरपि गाढान्धकारे किं कुर्यादिति भावः। बहुधा संबोधितोपि स्फुटं न वेत्ति "शृण्वंतोपि बहवो यं न विद्युः" "नायमात्मा बलहीनेन लभ्यः" "न मेधया न बहुना श्रुतेन" "आश्चर्यवत्पश्यति कश्चिदेनं" इत्यादिश्रुतेः। भ्रन्त्या अतस्मिंस्तद्बुध्या आरोपितमेव स्थूलादिदेहं साधु कलयति अवाधितं जानाति। आलंवते तद्गुणान् पूजावमानादीन् दृढत्वारोगत्वादीन् कर्तृत्वादीन् सूक्ष्मदेहगतांश्च। इदं तावदनुभवसिद्धं किल लोकेयत् श्रुत्या आचार्यैश्च आत्मव्यतिरिक्तं सर्वं मिथ्येत्युच्यमानेपि न भ्रान्तिर्जनानां नष्टेति। हंत कष्टं। असौ दुरंततमसः दुष्टः अन्तः पर्यवसानं

यस्य दुरंतं तच्च तत्तमश्च तस्य अनर्थपर्यवसायिनः तमोगुणस्य आवृतिः महती शक्तिः सत्वोत्कर्षं विना दुर्निरसा। विक्षेपशक्त्यपेक्षया प्रवला अत्यंतं मोहहेतुत्वादिति भावः। आवृतिः आवरणम् नाम ॥११६॥

श्रवणमनन-निदिध्यासन-जन्यज्ञाननाश्यत्वं तस्याः वक्तुं तत्त्रितय-निरस्यदोषहेतुरियं प्रत्यगभिन्न-ब्रह्मणि असंभावनां अनात्मनि शरीरादौ विपरीतात्मत्वभावनां श्रुत्याचार्योक्तार्थे संशयांश्चोत्पाद्य वहुधा मनः विक्षिपन्ती पुमांसं अभासमानस्वस्वरूपं कुर्वती नाशयतीत्याह। अभाव-नेति॥

अभावना वा विपरीतभावना संभावना विप्रतिपत्तिरस्याः।
संसर्गयुक्तं न विमुंचति ध्रुवं विक्षेपशक्तिः क्षपयत्यजस्रम् ॥११७॥

अभावना शास्त्रेणोच्यमानं जीवब्रह्मैक्यं प्रपंच-मिथ्यात्वं च न संभवतीति भावना। नास्तीति भावना वा नास्तिक्यमिति यावत्। विपरीतभावना शरीरादौ आत्मत्वभावना। विप्रतिपत्तिः विरुद्धप्रतिपत्तिः। संभावना संशयभावनेत्यर्थः। एकधर्मि-विशेष्यक-विरुद्धनानाधर्म-प्रकारक-ज्ञानं संशय इति तल्लक्षणात्। एतत्त्रयं अस्याः आवरणशक्तेः संसर्गयुक्तं संबंध-युक्तं नरं। ध्रुवं न विमुंचति नैव विमुंचतीत्यर्थः। तादृशं पुमांसं विक्षेप-शक्तिः अजस्रं सर्वदा क्षपयति "अज्ञश्चाश्रद्धधानश्च संशयात्मा विनश्यति" इति गीतोक्तेः ॥११७॥

इदानीं तमोगुणकार्याणि विशदयति। अज्ञानेति।

अज्ञानमालस्य-जडत्वनिद्रा-प्रमादमूढत्वमुखा-स्तमोगुणाः।
एतैः प्रयुक्तो नहि वेत्ति किंच-न्निद्रालुवत्स्तंभवदेव तिष्ठति ॥११८॥

अज्ञानं उक्तस्याप्यर्थस्याप्रतिपत्तिः, गीतोक्तं "एतज्ज्ञानमिति प्रोक्तं अज्ञानं यदतोन्यथा" इति मानित्वादिकं वा। आलस्यं अनुद्यमः, जडत्वं कार्यकरणेष्वपाटवं। निद्रा प्रसिद्धा, "अभावप्रत्ययालंबना वृत्तिर्निद्रेति" सूत्रिता। यस्मिन्नावारके तमसि सति वस्त्वभावः प्रतीयते तत्तमोभाव-प्रत्ययः तं विषयीकुर्वती वृत्तिर्निद्रा। प्रमादः कर्तव्यं कर्म कर्तुं शक्तावपि अकरणं तस्य, अजागरूकता "प्रमादोनवधानता" इति कोशात्। मूढत्वं

यथावस्थितविषये अयथावत्प्रतिपत्तिः। आलस्य-जडत्व-निद्राप्रमाद-मूढत्वानि मुखानि येषां ते संशयादीनां ते तमोगुणाः तमः कार्याणि। तदुपपादयति, एतैः अज्ञानादिभिः धर्मैः प्रयुक्तः विशिष्टः किंचिदपि नहि वेत्ति जानाति। निद्रालुवत् यथा सुप्तो न किंचिद्वेत्ति तथा स्तंभवदेव तिष्ठति श्रेयसे किमपि न चेष्टत इत्यर्थः। प्राप्तज्ञायमानताकस्य अज्ञानं प्रमादः, प्राप्तकर्तव्यताकस्य अकरणमालस्यं इति वा भेदः ॥११८॥

एवं राजसानां तामसानां च धर्माणां अत्यंतं श्रेयोविघातकत्वकथनेन सत्वं गुणं सम्यगाश्रित्य तयोर्द्वयोरपि गुणयोः अत्यंतं परित्यागः कार्यं इत्युक्तं भवति। अधर्मोपि जिज्ञास्यः परिहारायेति न्यायेनैव तेषामेवं विवरणं। इदानीमुपादेयत्वाय सत्वकार्याणि वक्तुं सत्वस्वभावं वर्णयति। सत्त्वमिति।

सत्त्वं विशुद्धं जलवत्तथापि
ताभ्यां मिलित्वा सरणाय कल्पते।
यत्रात्मबिंबः प्रतिबिंबितः सन्
प्रकाशयत्यर्क इवाखिलं जडम् ॥११९॥

तथापीत्युत्तरत्र सत्वात् आदौ यद्यपीति पठितव्यम्। यद्यपि जलवत् यथा जलं स्वभावतो निर्मलं तथा सत्वंगुणः विशुद्धं निर्मल एव। तथापि ताभ्यां रजस्तमोभ्यां मिलित्वा सरणाय संसाराय कल्पते प्रभवति। तस्य विशुद्धि स्पष्टयति यत्रेति। आत्मबिंबः आत्मैव बिंबः मुखादिवत्। यथा निर्मले जले साभ्रनक्षत्र आकाशः प्रतिफलितः स्पष्टं भासते यथा वा निर्मले दर्पणे मुखं तथा शुद्धे सत्वे प्रतिबिंबितस्सन्नात्मा अर्कवत् सूर्यवत् निर्मलदर्पणे प्रतिबिंबितसूर्य इव वा अखिलं जडं सर्वमनात्मानं, प्रकाशयति ज्ञातस्वरूपं करोति "सत्त्वात् संजायते ज्ञानं" इति स्मृतेः। "सर्वद्वारेषु देहेस्मिन् प्रकाश उपजायते। ज्ञानं यदा तदा विद्यात् विवृद्धं सत्वमित्युत" इति च ॥११९॥

रजस्तमसोः सत्वेपि ताभ्यामनभिभूयमानस्य सत्त्वस्य गुणानाह। मिश्रस्येति।

मिश्रस्य सत्त्वस्य भवन्ति धर्मास्त्वमानिताद्या नियमा यमाद्याः ।
श्रद्धा च भक्तिश्च मुमुक्षुता च दैवी च संपत्तिरसन्निवृत्तिः ॥१२०॥

मिश्रस्य सर्वात्मना तमश्शून्यस्य ईषद्रजोमिश्रस्य सत्त्वस्य इत्यर्थः । ताभ्यां अभिभूयमानत्वे वक्ष्यमाण-गुणसत्वानुपपत्तेः। तुशब्दः इतरगुणद्वयस्य ताभ्यामभिभूयमानसत्वस्य च व्यावर्तकः। अमानिता आद्या येषां अदंभित्वादीनां ते, ते कथिता गीतायां "अमानित्व-मदंभित्व-महिंसा-क्षान्तिरार्जवं। आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः। इन्द्रियार्थेषु वैराग्यमनहंकार एवच । जन्ममृत्युजराव्याधि-दुःखदोषानुदर्शनम् । असक्तिरनभिष्वंगः पुत्रदारगृहादिषु। नित्यं च समचित्तत्व-मिनिष्टा-निष्टोपपत्तिषु। मयि चानन्ययोगेन भक्तिरव्यभिचारिणी। विविक्त-देशसेवित्व-मरतिर्जनसंसदि । अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनं" इति। तत्र अमानित्वं, विद्यमानैरविद्यमानैर्वा गुणैः आत्मनः श्लाघारूप-संमानं मानित्वं तद्राहित्यममानित्वं। ख्यातिलाभपूजार्थं स्वधर्मप्रकटनं दंभः तद्रहितत्वं अदंभित्वं। त्रिकरण्या परपीडावर्जनं अहिंसा। परैरभिभूय-मानस्यापि तान्प्रत्यविकृतचित्तत्वं क्षान्तिः। मनोवाक्कायानां ऐकरूप्य-मार्जवं। प्रणिपात-परिप्रश्न-सेवादिभिः आचार्यानुवर्तनं आचार्योपासनं। बाह्यमलानां मृज्जलाभ्यां अंतर्मलानां रागादीनां मैत्र्यादिवासनया विषय-दोषदर्शनाभ्यासेन च प्रक्षालनया बहिरंतश्शुचित्वं। स्थैर्यं मुक्तिसाधन-प्रवृत्तस्य विघ्नसंभवेपि तदपरित्यागेन पुनःपुनर्यत्नाधिक्यम्। आत्म-विनिग्रहः आत्मनः देहेन्द्रियादेः मोक्षसाधनप्रातिकूल्य-स्वभावनिरोधनेन तदनुकूलतया व्यवस्थापनं। इन्द्रियार्थेषु शब्दस्पर्श-रूपादिषु दृष्टानुश्रविकेषु वैराग्यं। अनहंकारः अहमेव सर्वोत्कृष्ट इति गर्वराहित्यं। जन्ममृत्यु-जरेति, गर्भवासयोनिद्वारा निस्सरणं जन्म, मृत्युः सर्वमर्मच्छेदनरूपः, जरा बुद्धिबलतेजोनाशसर्वपरिभवरूपा। व्याधयो ज्वरादयः। दुःखानि अनिष्ट संयोगेष्टवियोग-जान्यान्याध्यात्मिकादीनि। दोषास्तु वातपित्तश्लेष्माणः मलमूत्रदुर्गन्धरूपाश्च तेषामनुदर्शनं पुनःपुनरालोचनं । असक्तिः पुत्रादिषु प्रीतित्यागः। तेष्वनभिष्वंगः तेषां सुखे दुःखे अहमेव सुखी दुःखीत्यध्यासाभावः। इष्टानिष्टयोरुपपत्तिषु प्राप्तिषु। नित्यं सर्वदा समचित्तत्वं हर्षविषादशून्यत्वं। अनन्ययोगेन अपृथक्समाधिना अहमेव

भगवान्वासुदेव इति निश्चयेन अत एव स्वात्मभूते मयि अव्यभिचारिणी ऐकान्तिकी भक्तिः। विविक्तः शुद्धः चित्तप्रसादको यो देशः तत्सेवित्वं जनानां वैषयिकाणां संसदि रत्यभावः। आत्मानमधिकृत्य प्रवृत्तं आत्मानात्मविवेकज्ञानं अध्यात्मज्ञानं तस्मिन्नित्यत्वं तत्रैव निष्ठा। त्वंपदार्थशोधनैकपरत्वमिति यावत्। पदार्थविवेकपरस्य वाक्यार्थज्ञानाधिगमात्। तत्त्वज्ञानस्य वाक्यार्थज्ञानरूपस्य योर्थः फलं मोक्षः तस्य दर्शनमालोचनम्। तत्वज्ञानफलालोचने हि तत्साधने प्रवृत्तिः स्यादिति भावः। अत्र यद्यपि यमघटकीभूतायाः अहिंसायाः नियमघटकस्य शौचस्य च घटनमस्ति तथापि उत्तरत्र नियमायमाद्या इत्यत्र तदुभयातिरिक्तस्यैव ग्रहणं संभवतीति बोध्यम्। नियमाः "शौचसंतोष-तपस्स्वाध्यायेश्वर-प्रणिधानानि नियमाः" इति सूत्रानुसारेण शौचादयः जन्महेतून् काम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामे धर्मे नियमयन्ति प्रेरयन्तीति नियमा इत्युच्यन्ते। तत्र शौचं पूर्वं निरुक्तं। संतोषः यथालाभपरितुष्टिः। तपः कायशोषणं तदुक्तं योगयाज्ञवल्क्ये "विधिनोक्तेन मार्गेण कृच्छ्चान्द्रायणादिभिः। शरीरशोषणं प्राहुः तापसाः तप उत्तमं" इति। स्वाध्यायः प्रणवगायत्रीप्रभृतीनां मन्त्राणां जपः। ईश्वरप्रणिधानं अभिहितानां अनभिहितानां च सर्वासां क्रियाणां परमेश्वरे फलानपेक्षतया समर्पणं। तदुक्तं "कामतोऽकामतोवापि यत्करोमि शुभाशुभं। तत्सर्वं त्वयि विन्यस्य त्वत्प्रयुक्तः करोम्यहं इति। फलाभिसंधेः उपघातकत्वमभिहितं महद्भिः "अपिप्रयत्नसंपन्नं कामेनोपहतं तपः। न तुष्टये महेशस्य श्वलीढमिव पायसम्" इति। एतानि पंच नियमाः। यमाः "अहिंसासत्यास्तेय ब्रह्मचर्यापरिग्रहाः यमाः" इति सूत्रानुसारेण अहिंसादयः पंच। तत्र अहिंसा विवृता। सत्यं सर्वदा अनृतानभिभाषणम्। अस्तेयं परस्वानपहारः। ब्रह्मचर्यं अष्टविधमैथुनत्यागः। अपरिग्रहः शरीरस्थितिमात्र-हेतुव्यतिरिक्त-भोगसाधनास्वीकारः। यमा आद्या येषां आसन-प्राणायाम-प्रत्याहारधारणाध्यान-समाधीनां तेपि समाध्यंतानि योगांगानि आदिपदेन गृह्यंते। श्रद्धा सर्वश्रेयोनिदानं आस्तिक्यबुद्धिः। भक्तिः सा परापरभेदेन द्विविधा अपरैव साधनभक्तिरित्युच्यते "भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुं" इति भागवतोक्तेः। "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनं। अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम्।" इति नवविधा भक्तिः परमप्रेम-

लक्षणायाः परभक्तेस्साधनं। मुमुक्षुता स्वस्वरूपसाक्षात्कारेण आविद्यकानां अहंकारादि-देहान्तानां वन्धानां निवृत्तीच्छा। दैवीसंपत्तिः सापि गीतासु षोडशाध्याये "अभयं सत्वसंशुद्धिः" इत्यादिना कथिता। ("अभयं सत्वसंशुद्धि-र्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवं। अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनं। दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलं। तेजः क्षमा धृतिश्शौचं अद्रोहो नातिमानिता। भवंति संपदं दैवीमभिजातस्य भारत।" इति) तत्राभयं नाम इष्टानिष्ट-संयोग-वियोगहेतु-दर्शनजन्यं यद्दुःखभयं तद्राहित्यं, यद्वा शास्त्रोपदिष्टार्थे संदेहं विनानुष्ठाननिष्ठत्वं। सत्वस्यांतःकरणस्य सम्यक्छुद्धिः निर्मलता सत्वसंशुद्धिः। शुद्धेः सम्यक्त्वं नाम भगवत्तत्वस्फूर्ति-योग्यत्वं। शास्त्राचार्योपदेशाभ्यां आत्मतत्वावगतिः ज्ञानं। अवगतस्यार्थस्य चित्तैकाग्रतया स्वानुभवारूढत्वापादनं योगः। तयोर्विशेषेणावस्थितिः सदा तन्निष्ठता ज्ञानयोगव्यवस्थितिः। यथाधिकारं स्वद्रव्यस्य पात्रे प्रतिपादनं दानं। वाह्येन्द्रिय-संयमो दमः। श्रौतः अग्निहोत्रदर्शपूर्णमासादिः, स्मार्तश्च देवयज्ञः पितृयज्ञः भूतयज्ञः मनुष्ययज्ञ इति चतुर्विधो यज्ञो यज्ञः, ब्रह्मयज्ञस्य स्वाध्यायपदेन पृथगुक्तेः। स्वाध्यायो ब्रह्मयज्ञः अदृष्टार्थमृग्वेदाद्यध्ययन-रूपः। तपः शारीरादिभेदेन त्रिविधं। "देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवं। ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते। अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यासनं चैव वाङ्मयं तप उच्यते। मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतत्तपो मानसमुच्यते" इति। अवक्रत्वमार्जवं मनोवाक्कायवृत्तीना-मैकरूप्यमिति यावत्। परपीडावर्जनमहिंसा। यथादृष्टवचनं सत्यं। परैराक्रोशे ताडने वा कृते सति सद्यःप्राप्तस्य क्रोधस्य तत्कालमुपशमनं अक्रोधः। दानस्य प्रागुक्तेः त्यागो दुःखसंगपरित्यागः। शान्तिरंतरिन्द्रियोपरतिः। पर-दोषप्रकाशनं पैशुनं तदभावोऽपैशुनम्। दुःखितेषु भूतेषु तदीयदुःखा-सहिष्णुत्वं दया। अलोलुत्वं अलोलुपत्वं इन्द्रियाणां विषयसन्निधानेप्य-विक्रियत्वं इति यावत्। पवर्णलोप आर्षः। अलोलुप्त्वमिति वा पाठः। मृदुत्वं मार्दवं साधुजनसंश्लेषार्हतेत्यर्थः। अकार्यकरणे लज्जा ह्रीः। वृथाचेष्टाराहित्यं अचापलं। प्रागल्भ्यं तेजः स्त्रीबालकादिमूढजनैः अनभिभवनीयत्वमित्यर्थः। सत्यपि सामर्थ्ये परिभवहेतुं प्रति क्रोधानुत्पत्तिः

क्षमा। उत्पन्नस्य क्रोधस्य सद्यश्शमनमक्रोध इति ततो भेदः। दुःखादिभिः सीदतः चित्तस्य स्थिरीकरणं धृतिः। बाह्यांतरशुद्धिः शौचं। परजिघांसया शस्त्राद्यग्रहणं अद्रोहः। आत्मनि पूज्यत्वातिशयभावना अतिमानिता तदभावो नातिमानिता। तया च तत्कार्य पूज्येषुनम्रत्वमुपलक्ष्यते। त एते षड्विंशतिरभयादयो धर्माः देवयोग्य-सात्विक-शुभवासनारूपसंपत्ति शरीरारंभकाले पुण्यकर्मभिः अभिव्यक्तामभिलक्ष्य जातस्य पुरुषस्य भवंति निष्पद्यन्ते। "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" "पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति" श्रुतेरिति भावः। असन्निवृत्तिः असतः ब्रह्मव्यतिरिक्तात् निवृत्तिः। यद्वा "नाविरतो दुश्चरितात्" इतिश्रुतेः अवृजिनत्वमर्थः॥१२०॥

एवं रजस्तमसोः सत्वेपि ताभ्यामनभिभवनीय-सत्वधर्मानुक्त्वा ताभ्यां सुतरामसंस्पृश्यमान-सत्वधर्मानाह। विशुद्धेति।

विशुद्धसत्वस्य गुणाः प्रसादः
स्वात्मानुभूतिः परमा प्रशान्तिः।
तृप्तिः प्रहर्षः परमात्मनिष्ठा
यया सदानन्दरसं समृच्छति ॥१२१॥

विशुद्धत्वं च रजस्तमोशबलितत्वं। केवलसत्वस्य गुणाः कार्य-भूतधर्माः, प्रसादः मनोनैर्मल्यं। आवरकस्य तमसः विक्षेपकस्य रजसश्च अभावात् अप्रतिबन्धं स्वात्मानुभूतिः। यदा तमसाव्रियते आत्मतत्वं तदा तस्य स्पष्टमभानात् अन्नमयादीनां भानं। केवलसत्वे तु स्वस्वरूपं निष्प्रत्यूहं अनुभूयत इति भावः। अत एव परमा निरतिशया प्रकृष्टा शान्तिः। वक्ष्यते चोत्तरत्र "कस्तां परानन्दरसानुभूतिं उत्सृज्य शून्येषु रमेत विद्वान्। चन्द्रे महाह्लादिनि दीप्यमाने चित्रेन्दुमालोकयितुं क इच्छेत्" इति। पूर्वं साधकदशायां प्रयत्नेन संपाद्यमाना शान्तिः आत्मदर्शने स्वभावभूता भवतीति भावः। अत एव फल्गुप्रपंच-संचारा-भावात् मनसः तृप्तिः अलंबुद्धिः निरंकुशा। प्रहर्षः साधनानधीनः स्वयं सर्वदा स्फुरन्नानंदः। यद्वा कृतं कृत्यं प्रापणीयं प्राप्तं इत्येवं स्वात्मानं धन्यं मत्वा हृष्यतीति प्रकृष्टो हर्षः। यया सदानंदरसं समृच्छति सम्यगश्नुते

सा परमात्मनिष्टा परमात्मन्येव नितरां स्थितिः। स्वरूपानन्दविलोकनेन मनो व्युत्थातुमशक्तं लीनं निर्विकल्पक-समाधिमनुभवतीति भावः ॥१२१॥

इदानीं गुणत्रयमयस्य मायाविद्यादिशब्दैरभिहितस्य अव्यक्तस्य कार्यानुमेयस्य स्थूलसूक्ष्मादिसकलकार्यहेतुत्वात् ज्ञाननाश्यत्वाच्च शीर्यत इति व्युत्पत्या कारणशरीरत्वं च वदन् अव्यक्तनाम्नीत्यादिना उपक्रान्तां मायामुपसंहरति अव्यक्तमेतदिति।

अव्यक्तमेतत्त्रिगुणै-र्निरुक्तं तत्कारणं नाम शरीरमात्मनः।
सुषुप्तिरेतस्य विभक्त्यवस्था प्रलीन-सर्वेन्द्रिय-बुद्धिवृत्तिः ॥१२२॥

अव्यक्तं स्वस्वरूपतः साक्षादस्पष्टं। एतत्त्रिगुणैः त्रयश्च ते गुणाश्च त्रिगुणाः एते च ते त्रिगुणाश्च एतत्त्रिगुणाः, कामक्रोधाज्ञाना-लस्या-मानित्वादिभि-र्धर्मैरनुमेयैः रजस्तमस्सत्वगुणैः, निरुक्तं त्रिगुणात्मिका कार्यानुमेया इति पूर्वं कथितं कृतनिर्वचनमित्यर्थः। तत् अव्यक्तं अविद्यादि शब्दवाच्यं आत्मनः कारणं नाम शरीरं। शास्त्रे कारणशरीरमिति प्रसिद्धमित्यर्थः। अस्यासाधारणीमवस्थामाह सुषुप्तिरिति। एतस्य कारणशरीरस्य अव्यक्तस्य। प्रलीनसर्वेन्द्रियबुद्धिवृत्तिरिति सुषुप्ते-र्विशेषणं। सर्वाणि चतानीन्द्रियाणि च सर्वेन्द्रियाणि तानि च बुद्धिश्च सर्वेन्द्रियबुद्धयः तासां वृत्तयः सर्वेन्द्रियबुद्धिवृत्तयः प्रलीना यस्यां सुषुप्तौ सा प्रलीनसर्वेन्द्रियबुद्धिवृत्तिः। एतेन सर्वेन्द्रियवृत्तिमत्या जाग्रदवस्थायाः केवलबुद्धिवृत्तिमत्याःस्वप्नावस्थायाश्च व्यावृत्तिः कृता। विभक्त्यवस्था विभाजकावस्था। अज्ञानस्य अवस्थात्रये सत्वेपि इतरावस्थयोः स्वेत-रसाधारणत्वात् स्वमात्रस्य सुषुप्तिरसाधारणण्यवस्थेति भावः॥१२२॥

अन्तिमपादार्थं अनुभवेन स्पष्टयति। सर्वेति।

सर्वप्रकार-प्रमिति-प्रशान्ति-
बीजात्मनावस्थितिरेव बुद्धेः।
सुषुप्तिरत्रास्य किल प्रतीतिः
किंचिन्नवेद्मीति जगत्प्रसिद्धेः ॥१२३॥

सर्वे प्रकाराः प्रत्यक्षत्वानुमितित्वादयः यासां प्रमितीनां तासां प्रकर्षेण शान्तिः प्रशान्तिः उपरमः यत्र सुषुप्तौ सा सर्वप्रकार-प्रमिति-प्रशान्तिः। तर्हि परदिने व्यवहारः कथमिति चेत् तत्राह बीजात्मनेति। बुद्धेरंतःकरणस्य बीजात्मना संस्कारात्मना कारणाज्ञानात्मनेत्यर्थः। अवस्थितिरेव न स्वकार्यवृत्यात्मनावस्थितिः तदेत्येवकारेण प्रतीयते। सैव सुषुप्तिः। तदा सर्वप्रकारज्ञानाभावे सर्वानुभवं प्रमाणयति। अत्र सुषुप्तिविषये। अस्य सुप्तप्रबुद्धस्य जीवस्य किंचिन्न वेद्मीति॰जानामीति प्रतीतिः। किल प्रसिद्धा इत्यर्थः। यदि बुद्धिकार्यभूता वृत्तिः स्यात् तदा किंचिन्न वेद्मीति प्रतीतिर्नस्यात् जाग्रत्स्वप्नयोस्तथाप्रतीतेरभावादिति भावः। अनुभवे विवदमानं प्रत्यह जगत्प्रसिद्धेरिति। तथाच सर्व-प्रसिद्धप्रतीतौ विवादोसंगत इत्यभिप्रायः ॥१२३॥

इदानीं आत्मानात्मविवेचनार्थं प्रतिपिपादयिषितं अनात्मान-मुपसंहरति। देहेति।

देहेन्द्रिय-प्राणमनोहमादयः
सर्वे विकारा विषया स्सुखादयः।
व्योमादिभूतान्यखिलं च विश्वं
अव्यक्तपर्यन्त-मिदंह्यनात्मा ॥१२४॥

देहश्च इन्द्रियाणि च प्राणश्च मनश्च अहं च देहेन्द्रिय-प्राणमनोहमः आदयः येषां बुध्यादीनां विकाराणां ते सर्वे विकाराः भौतिकाः पदार्थाः। विषयाः शब्दस्पर्श-रूपरसगंधाः। सुखादयः सुखं आदिर्येषां दुःखमोह-संकल्पादि-वृत्तीनां भयांतानां मनःपरिणामानां ते सुखादयः। व्योम आकाशं आदि येषां तानिपृथिव्यन्तानि-भूतानि। किं बहुना इदं परिदृश्य-मानं अव्यक्तपर्यन्तं अखिलं समस्तं, विश्वं जगत्, अनात्मा। एतेन कोसावनात्मेत्यस्य उत्तरं दत्तम् ॥१२४॥

अन्तिमकार्य-प्रभृति आदिमपरिणाम्युपादान-पर्यन्तं सर्वं अनात्मे-त्युक्तम्। तद्वैपरीत्येन आदिम-परिणाम्युपादानात् अन्तिमकार्य-पर्यन्तं सर्वं तथेति दाढ्यर्थं वदन् तस्य मिथ्यात्वमपि कथयति। मायेति।

माया मायाकार्यं सर्वं महदादि देहपर्यन्तं ।
असदिदमनात्मतत्वं विद्धि त्वं मरुमरीचिकाकल्पम् ॥१२५॥

माया मूलप्रकृतिः, महत् महत्तत्वं "तदैक्षतेति" श्रुतिसिद्धं ईक्षणं तदादि यस्य देहपर्यन्तस्य मायाकार्यस्य तन्महदादि। अहंकारः ईश्वर-संकल्पः "सोऽकामयतेति" श्रुतिसिद्धः। ततः पंच सूक्ष्मभूतानि, ततः पंचीकृतानि स्थूलभूतानि, ततः ब्रह्माण्डं, तत्र चतुर्दशभुवनानि तदंतर्वर्ति-स्थूलदेहादयः एतत्सर्वं देहपर्यन्तं मायाकार्यं त्वं इदं मायां मायाकार्यं च अनात्मतत्वं आत्मव्यतिरिक्तपदार्थं कोसावनात्मेति प्रश्नोत्तरविषयं असत् सद्रूपात्मभिन्नं। अत एव पूर्वोक्त-शुद्धाद्वय-ब्रह्मविबोध-नाश्यत्वादि-हेतुना मरुमरीचिकाकल्पं मृगतृष्णिकासदृशं दृष्टनष्टस्वरूपत्वेन मिथ्या-भूतं विद्धि जानीहि। घर्मकाले मरुभूमौ मिहिरमरीचयः पतिताः महावारिप्रवाह-बुद्धिं जनयन्ति। वस्तुतस्तु विशेषदर्शने तत्र जलं किंचिदपि नास्ति। तथा ब्रह्मज्ञानात्प्राक् माया तत्कार्यं च भासते। तत्साक्षात्कारे च प्रबोधे स्वप्नवत् सर्वं सहमूलं विनश्यतीति दृष्टनष्टस्वरूपत्वं तेषां, ततो मरुमरीचिकावन्मिथ्यात्वं। मरुषु मरीचिकाः मरुमरीचिकाः। उक्तार्थ-मिदं पदम् ॥१२५॥

एवमनात्मानं निरवशेषमुक्त्वा परमः क आत्मा इति प्रश्नस्य उत्तरंवक्तुमारभते। अथेति।

अथ ते संप्रवक्ष्यामि स्वरूपं परमात्मनः।
यद्विज्ञाय नरो बंधान्मुक्तः कैवल्यमश्नुते ॥१२६॥

अथशब्दः अनात्मप्रतिपादनानन्तर्यार्थकः। यत्परमात्मस्वरूपं विज्ञाय साक्षात्कृत्य, नरः विद्याधिकारी पुरुषः, बन्धात् अहंकारादिदेहान्ताद् बन्धात् मुक्तः त्यक्ततत्तादात्म्याध्यासः कैवल्यं सर्वोपाधिसंबंध-विनिर्मुक्तत्वेन केवलदृग्रूपत्वं निर्भेदसच्चिदानन्दरूपत्वं च अश्नुते प्राप्नोति। तत् परमात्मनः स्वरूपं याथात्म्यं ते तव संप्रवक्ष्यामि सम्यक् स्पष्टं प्रकर्षेण विस्तरेण वक्ष्यामि कथयिष्यामीत्यर्थः ॥१२६॥

आत्मानं वक्तुं प्रक्रमते। अस्तीति।

अस्ति कश्चित् स्वयं नित्यमहंप्रत्यय-लंबनः।
अवस्थात्रय-साक्षी सन् पंचकोशविलक्षणः ॥१२७॥

स्वयं, सत्तास्फूर्तिविषये परानपेक्षः, अहंप्रत्यय-लंबनः अहमाकार-वृत्तिमन्मनस्तदात्म्यापन्नतया अहंवृत्तेराश्रयः। अहंप्रत्ययः अहंवृत्तिः लंबनं विवग्राहिणी यस्य सः अहंप्रत्यय-लंबनः अहंवृत्तिविषय इत्यप्यर्थः। अवस्थात्रयसाक्षी सन् जाग्रत्स्वप्न-सुषुप्तिरूपावस्थात्रय-साक्षाद्द्रष्टा सन्। पंचकोशविलक्षणः अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमय-व्यतिरिक्तः। स नित्यं सर्वदा कश्चिदस्ति स एव आत्मेति शेषः। अत्र कालत्रयाबाध्यत्वरूप-सद्रूपत्वमुक्तं ॥१२७॥

अवस्थात्रय-साक्षित्वमुपपादयति। य इत्यादिना।

यो विजानाति सकलं जाग्रत्स्वप्न-सुषुप्तिषु।
बुद्धि-तद्वृत्ति-सद्भावं अभावमहमित्ययम् ॥१२८॥

इदमिदं पश्यामि अनुमिनोमि शब्दात् प्रत्येमि स्मरामीत्यादि-प्रकारेण जाग्रत्स्वप्नयोः बुद्धितद्वृत्तिसद्भावं । नकिंचिदवेदिषमिति सुषुप्त्यनन्तरकालिक-स्मृत्यनुसारेण सुषुप्तौ बुद्धितद्वृत्यभावं च यो विजानाति सकलं जाग्रद्भावान् स्वाप्नपदार्थान् सुषुप्तावज्ञानं च अहमहं इदं जानामि अज्ञासिषं ज्ञास्यामीत्यनुभवात्। अयमात्मा इत्यन्वयः ॥१२८॥

इतरावेद्यत्वेन सर्वद्रष्टृत्वेन च ज्ञानस्वरूपत्वमाह। यः पश्यतीत्यादिना।

यः पश्यति स्वयं सर्वं यं न पश्यति किंचन।
यश्चेतयति बुद्ध्यादि न तद्यं चेतयत्ययम् ॥१२९॥

यः पश्यति स्वयं सर्वं "नान्योतोस्ति द्रष्टा" इति श्रुतेः। यं न पश्यति किंचन "न तत्र चक्षुर्गच्छति न वागगच्छति नो मनः" "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः" "नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा" इत्यादिश्रुतिभ्यः। यः बुध्यादि जडं चेतयति स्वप्रतिफलनेन चेतनवत्करोति। तत् बुध्यादि यं न चेतयति स्वतः चेतनत्वात्।

जडं हि स्वकार्यार्थं चेतनमपेक्षते न चेतनस्य पराकांक्षा। अयमात्मा इत्यन्वयः ॥१२९॥

येन विश्वमिदं व्याप्तं यं न व्याप्नोति किंचन।
अभारूपमिदं सर्वं यं भान्तमनुभात्ययम् ॥१३०॥

सर्वोपादानतया येन सर्वान्तरेण इदं विश्वं जगत् व्याप्तं विशेषेणाप्तम् संबद्धं। किंचन किमपि वस्तु यमात्मानं न व्याप्नोति अस्य सर्वस्य बाह्यत्वात् "विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत्" "विकारावर्ति च तथाहि स्थितिमाह" "पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति स्मृतिसूत्रश्रुतिभ्यः, "ज्यायान्पृथिव्याः ज्यायानन्तरिक्षात् ज्यायानेभ्यो लोकेभ्यः" इत्यादिश्रुतेश्च। अभारूपं अप्रकाशरूपं जडमित्यर्थः। इदं सर्वं चिद्रूपं यं भान्तं अनुभाति "तमेव भान्तमनुभाति सर्वं" इति श्रुतेः अयमात्मा इत्यन्वयः। अत्र सत्यं ज्ञानमनंतं ब्रह्मेति श्रुत्युक्तं आनंत्यं देशपरिच्छेदशून्यत्वकथनेन कथितं बोध्यम् ॥ १३० ॥

यश्चेतयति बुध्यादि विवृणोति। यस्येत्यादिना

यस्य सन्निधिमात्रेण देहेन्द्रियमनोधियः
विषयेषु स्वकीयेषु वर्तन्ते प्रेरिता इव ॥१३१॥

"केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः। केनेषितां वाचमिमां वदंति चक्षुश्रोत्रं कउ देवो युनक्ति" इति पृष्ट्वा "श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः चक्षुषश्चक्षुः" इत्युत्तरितमर्थमाह यस्य आत्मनः संनिधिमात्रेण अभिमानरूप-संवन्ध-वशात्। देहेन्द्रियमनोधियः अत्र देहशब्देन वाक्पाणिपादादीनि कर्मेन्द्रियाणि गृह्यंते। इन्द्रियपदेन श्रोत्रादीनि ज्ञानेन्द्रियाणि मनः अन्तःकरणं। धीः कर्त्री न बुद्धिः। स्वकीयेषु विषयेषु वचनादानगमनादिषु श्रवणदर्शनस्पर्शनादिषु संकल्पनविकल्पनादिषु लौकिकवैदिक-कार्येषु च प्रेरिता इव स्पष्टं जडानां स्वतो व्यापाराभावात्। वर्तन्ते स आत्मा इत्यन्वयः ॥१३१॥

अहंकारादिदेहान्ता विषयाश्च सुखादयः।
वेद्यन्ते घटवद्येन नित्यबोधस्वरूपिणा ॥१३२॥

दृश्यस्य द्रष्टृधर्मत्वाभावात् अहंकारादि-देहान्ताः पंचकोशाः। विषयाः शब्दादयः, सुखादयःतत्प्रयोज्याश्च। नित्यबोधस्वरूपिणा स्वतस्सिद्ध-ज्ञानस्वरूपेण येन घटवत् घट इव वेद्यन्ते ज्ञायन्ते। स आत्माइत्यन्वयः। तेन सुखादीनां दृश्यत्वात् द्रष्टृधर्मत्वं नास्तीत्यसंगत्वमुक्तमात्मनः। अहंकारादि-देहान्तानां पंचानां कोशनां वेद्यत्वकथनेन सूत्रस्थानीय-प्रथम-श्लोकोक्तं पंचकोशविलक्षणत्वं संग्रहेण कथितम्। इदमुत्तरत्र स्पष्टयिष्यते "देहोयमन्नभवन" इत्यादिना॥

एषोन्तरात्मा पुरुषः पुराणो निरन्तराखण्ड-सुखानुभूतिः।
सदैकरूपः प्रतिबोधमात्रो येनेषिता वागसवश्चरन्ति ॥१३३॥

येन इषिताः सन्निधिमात्रेण प्रेरिताः वाक्चासवश्च वागसवः। इदं सर्वस्य कार्यकरणसंघातस्योपलक्षणं। वाक् असव इति भिन्नं वा पदं। वागिन्द्रियं प्राणाश्चरन्ति शब्दोच्चारणोच्छ्वास-निश्वासादीनि कर्माणि स्वकीयानि कुर्वन्ति। एषः अन्तरात्मा लोकसिद्धानां श्रुत्यापि ब्रह्म-प्रतिपत्तिहेतुत्वेन अन्नमयाद्यानन्दमयान्तानां कोशानां कल्पितानां बाह्यानां कल्पनाधिष्ठानत्वेन सर्वानुगततया भूच्छिद्र-सर्प-दण्ड-जलधारादिष्विव रज्जुर्भासमानः अन्तरात्मा। पुरुषः पूर्णः पुरि शरीरे शेत इति वा पुरुषः। पुराणः पुरापि नव एव सनातनः। निरंतराखण्डसुखानुभूतिः निरंतरं निरवधिकं अत एव अखण्डं अपरिच्छिन्नं यत्सुखं आनंदः या च निरंतरा अखण्डा च अनुभूतिः "यत्साक्षादपरोक्षाद्ब्रह्म" इति श्रुतेः तत्स्वरूपः। सदैकरूपः निर्विकार इत्यर्थः। प्रतिबोधमात्रः बोधे बोधे प्रतिबोधं मीयत इति मात्रः सकलबुद्धि-वृत्तिषु अनुगततया काष्ठादिष्विवाग्निः ज्ञात इत्यर्थः। "प्रतिबोधविदितं मतं" इति श्रुतेः। ज्ञानस्वरूपत्वं निरंतराखण्ड-सुखानुभूतिरित्यत्रोक्तम्। गुरूपदेशजन्यबोधो वा प्रतिबोधः तत्र विषय इत्यर्थः गुरुणाप्रतिबोधित इति प्रसिद्धेः। सुप्त-प्रतिबुद्ध इति प्रसिद्धेः अविद्यास्वाप-नाशकः महावाक्यजन्याखण्डाकार-वृत्तिरूपबोधः प्रतिबोधः तत्र विषय इति वार्थः॥१३३॥

"सर्वाणि रूपाणि विचित्य धीरः, नामानि कृत्वाभिवदन् यदास्ते" इत्यादिश्रुत्यनुसारेण "अवस्थितेरिति काशकृत्स्नः" इति सूत्रानुसारेण

च परमात्मन एव जीवभावेनावतिष्ठमानत्वात् शोधितत्वंपदार्थत्वेन आत्मानमभिधाय तत्पदार्थत्वेन "अनश्नन्नन्यो अभिचाकशीति" इत्यादि-श्रुत्यभिप्रेतमर्थमाह । अत्रैवेत्यादिना ।

अत्रैव सत्वात्मनि धीगुहायां
अव्याकृताकाश उरुप्रकाशः ।
आकाश उच्चै-रविवत्प्रकाशते
स्वतेजसा विश्वमिदं प्रकाशयन् ॥१३४॥

अत्रैव साधकशरीर एव सत्त्वं आत्मा यस्याः धीगुहायाः सा सत्वात्मा सत्वप्रधाना या धीः सैव गुहा। गूहू संवरणे इति धातुना, विज्ञानमय-कोशत्वेन आत्मानं संवृणोतीति तस्यां धीगुहायां। उपादानत्वेन अनुस्यूतः यः अव्याकृताकाशः माया तस्मिन् अव्याकृताकाशे। उरुप्रकाशः उरुः अधिकः प्रकाशः ज्ञानरूपतया सर्वावभासकत्वात् "तद्देवा ज्योतिषां ज्योतिः" इतिश्रुतेः। आकाशः परमात्मा स्वतेजसा सूर्यादि-सकल-ज्योति-रवभासक-ज्ञानरूप-प्रकाशेन "येन सूर्यस्तपति तेजसेद्धः" इतिश्रुतेः। इदं विश्वं दृश्यं सर्वं। प्रकाशयन् स्फोरयन् रविवत् सूर्यवत्। उच्चैः प्रकाशते सर्वोत्कर्षेण भासते। उच्चै-रविवदिति वान्वयः आकाशमध्यवर्ति-सूर्य-इव इत्यर्थः। एतेन पूर्वश्लोके "एषोंतरात्मा पुरुष" इत्यत्र कथितः पुरि शरीरे शेत इत्यर्थः अत्रेति स्थूलशरीरे धीगुहायामिति सूक्ष्मशरीरे अव्याकृताकाश इति कारणशरीरे प्रकाशत इति कथनात् विवृतः। सकलदिगवस्थित-वस्तुभासकत्वं गगनतलमध्यवर्ति-रवेः प्रसिद्धं। तद्वत् सर्वान्तर आत्मा सकलवस्त्ववभासक इति भावः ॥१३४॥

ज्ञाता मनोहंकृति-विक्रियाणां देहेन्द्रिय-प्राणकृत-क्रियाणां ।
अयोग्निवत्तानन् वर्तमानो नचेष्टते नो विकरोति किंचन ॥१३५॥

मनोहंकृतिविक्रियाणां मनश्च अहंकृतिश्च मनोहंकृती तयोर्विक्रियाः तासां ज्ञाता कामसंकल्पादीनां मनोविक्रियाणां गर्वदर्पादीनां अहंकार-विकाराणां आन्तराणां ज्ञाता। तथा बाह्यानां देहेन्द्रियप्राणकृतक्रियाणां देहश्च इन्द्रियाणि च प्राणश्च देहेन्द्रियप्राणाः तैः कृताः क्रियाः। देहशब्देन कर्मेन्द्रियाणां विवक्षितत्वात् वचनादीनां चक्षुरादिज्ञानेन्द्रियव्यापाराणां

दर्शनश्रवणादीनां प्राणव्यापारस्य उच्छ्वास-निश्वासादेश्च ज्ञाता इत्यर्थः। सकलांतरवाह्य-विकारसाक्षिणस्तस्यनिर्विकारत्वमाह अयोग्नि-वदित्यादिना। अग्निरिवाग्निवत् यथाग्निः दीर्घं वा वर्तुलं वा अयः अनुवर्तमानः तथा तथा व्यवह्रियते न वस्तुतः दीर्घवर्तुलतादिभाक् एवं तान् मनोहंकृति-देहेन्द्रियप्राणान् अनुवर्तमानः व्यापित्वेन स्वच्छत्वेन च सर्वत्र प्रतिबिंबमानोपि तत्तद्व्यापारवत्वेन व्यवह्रियमाणोपि वस्तुतः न चेष्टते। स्वयं न विक्रियते। नो विकरोति किंचन कुत्रापि विक्रियां नोत्पादयति च। सूर्यस्येव सानिध्यमात्रात् जडप्रवृत्तिहेतुत्वमात्मनः न तु किंचिद्व्यापारवत इति भावः ॥१३५॥

तमेवार्थं सहेतुकं विशदयति। न जायत इति।

न जायते नो म्रियते न वर्धते
न क्षीयते नो विकरोति नित्यः।
विलीयमानेपि वपुष्यमुष्मिन्
न लीयते कुंभ इवांबरं स्वयम् ॥१३६॥

जायतेस्ति विपरिणमते वर्धते अपक्षीयते नश्यतीति जनन-स्थिति-विपरिणाम-वृध्यपक्षयविनाशाः शरीरादेः दृष्टाः षड्विकाराः। अयं परमात्मा नित्यः उत्पत्तिविनाशादिशून्यः अतः न जायते नोत्पद्यते, नो म्रियते न नश्यति अतः आद्यन्तविकारशून्यत्वात् न वर्धते न वृद्धिरूपविकार-वान्भवति, एवं न क्षीयते अपक्षयरूप-विक्रियावान्न भवति। उत्पत्ते-रभावात् तदनन्तरकालिक-स्थितिरपि नैवास्ति। नित्यत्वेन निरवयव-त्वात् विपरिणामो नास्तीति भावः। स्वयं विक्रियावत एव अन्यत्र विकारहेतुत्वात् सर्वविध-विकारशून्यः नो विकरोतीति पूर्वश्लोकार्थः सहेतुकतया कथितोत्रेति मन्तव्यम्। अन्यत्र विक्रियां नोत्पादयतीत्यर्थः। अमुष्मिन्वपुषि शरीरे विलीयमानेऽपि नश्यत्यपि कुंभे नश्यत्यंबरमिव आकाशमिव स्वयं न लीयते स्वतः परतोवा विकारो नास्तीति भावः ॥१३६॥

सम्यज्ज्ञानार्थं विज्ञानात्म-परमात्मनोः स्वरूपमेकीकृत्याह। कृतीति।

प्रकृति-विकृतिभिन्नः शुद्धबोधस्वभावः
सदसदिदमशेषं भासयन्निर्विशेषः।
विलसति परमात्मा जाग्रदादिष्ववस्था
स्वहमहमिति साक्षात्साक्षिरूपेण बुद्धेः ॥१३७॥

प्रकृतिरविद्या, विकृतयः आकाशादयः तद्भिन्नः कार्यकारणव्यतिरिक्त इत्यर्थः। शुद्धबोधस्वभावः शुद्धः निर्विषयः यः बोधः ज्ञानं तदेव स्वभावः स्वरूपं यस्य सः केवलदृग्रूप इत्यर्थः। इदं प्रत्यक्षादिप्रमेयं सत् तेजआदि मूर्तं असत् अमूर्त आकाशवाय्वादिकं अशेषं समस्तं भासयन् प्रकाशयन् निर्विशेषः निर्धर्मकः। परमात्मा जाग्रदादिषु जाग्रत्स्वप्न-सुषुप्त्यादिषु अवस्थासु बुद्धेः साक्षिरूपेण सुषुप्तावपि बीजात्मना बुद्धेः सत्वात्। अहमहमिति साक्षात् प्रत्यक्तया विलसति प्रकाशते ॥१३७॥

अभेदेन परमात्मविज्ञानं मनो-नियमनं तद्द्वारा बुद्धिप्रसादं च हेतूकुर्वन् "ब्रह्मसंस्थोमृतत्वमेति" इति श्रुत्यर्थ शिष्यं प्रत्युपदिशति। नियमितेति।

नियमित-मनसामुं त्वं स्वमात्मान-
मात्मन्ययमहमिति साक्षाद्विद्धि बुद्धिप्रसादात्।
जनिमरणतरंगापार-संसारसिंधुं
प्रतर भव कृतार्थो ब्रह्मरूपेण संस्थः ॥१३८॥

त्वमात्मनि नियमितमनसा पंचभ्यः कोशेभ्यो व्यावर्तितं परमात्मन्येव श्रवणमनननिदिध्यासनैः स्थापितं यन्मनः तेन करणेन मनसैवेदमाप्तव्य-मितिश्रुतेः। बुद्धिप्रसादात् असंभावना-संशयभावना-विपरीतभावना-रूप-दोषनाशेन विशुद्धा सकलविधदोषशून्या या बुद्धिः तस्याः प्रसादात् अनुग्रहात् "दृश्यते त्वग्रयया बुध्या सूक्ष्मया" इति श्रुतेः "ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यते निष्कलं ध्यायमानः" इतिश्रुतेश्च। स्वस्वरूपभूतं आत्मानं परमात्मानं "स आत्मा तत्वमसि" इति श्रुतेः "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इति श्रुतेश्च परमात्मन एव मुख्यत्वात्। अयमहमिति साक्षाद्विद्धि अन्योसावन्योहं इत्येतावंतं कालं स्थितां बुद्धिं विहाय अभेदेन साक्षात्कुरुष्वेत्यर्थः। तत्फलमाह जनिमरण-

तरंगापार-संसारसिंधुं प्रतरेति। पुनरपि जननं पुनरपि मरणं इतिरीत्या ब्रह्मज्ञानालाभे अविरततया प्रसज्यमान-जन्ममरणरूप-तरंगविशिष्टः अपारः ब्रह्मरूपपाराज्ञानात् अपारः यः संसारः स एव सिंधुः समुद्रः तं, प्रतर प्रकर्षेण तर सद्योमुक्तिमाप्नुहीत्यर्थः। सततमपि ब्रह्मरूपेण संस्थः कृतार्थो भव कर्तव्यान्तररहितो भवेत्यर्थः। "ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः। नैवास्ति किंचित्कर्तव्यं अस्ति चेन्न स तत्ववित्"॥ इति प्रमाणात्॥१३८॥

एतावता ग्रन्थेन अस्ति कश्चित्स्वयं नित्यमित्यारभ्य एकादशभिः श्लोकैः परमः क आत्मा इत्यस्य प्रश्नस्य उत्तरमुक्त्वा को नाम बंधः इति शिष्यस्य प्रथमप्रश्नस्य उत्तरमाह। अत्रानात्मनीत्यादिना द्वाभ्यां।

अत्रानात्मन्यहमिति मति-र्बन्ध एषोस्य पुंसः
प्राप्तोऽज्ञानाज्जननमरण-क्लेशसंपातहेतुः।
येनैवायं वपुरिद-मसत्सत्यमित्यात्म-बुध्या
पुष्यत्यु-क्षत्यवति विषयैस्तंतुभिः कोशकृद्वत्॥१३९॥

अत्र पूर्वोक्तरीत्या वस्तुतः परमात्मन एव स्वस्वरूपत्वेपि, अज्ञानात् अनादिसिद्धाविद्यावशात् प्राप्तः अस्य पुंसः अनात्मनि देहादौ अहमितिमतिः अहं मनुष्यः अहं क्षुत्पिपासादिमान् इच्छामि करोमि भुंजे इत्याद्या या मतिः एष वन्ध इत्यन्वयः। तत्र हेतुः अज्ञान्नात्प्राप्त इति। भ्रमसामान्यस्य दोषजन्यत्वात् शरीरादौ आत्मत्वभ्रमे स्वरूपाज्ञानमेव दोषत्वेनापि कारणमिति भावः। अत्र प्रत्यक्षे देहादावनात्मनि इत्यप्यर्थः। सांख्यादिमते मूलाज्ञानानंगीकारेण वन्धमोक्षव्यवस्थैवानुपपन्नेति ज्ञेयम्। आज्ञानिकत्वे वन्धस्य अज्ञानस्य ज्ञानान्निवृत्तौ तन्मूलकस्य बन्धस्यापि निवृत्तेः, अन्यथा बन्धस्य सत्यत्वात् ज्ञानमात्रनिवर्त्यत्वस्य दुर्वचत्वात् दोषाभावे भ्रमस्य उत्पत्तुमशक्यत्वाच्च। बन्धस्य कार्यमाह जननमरण-क्लेश-संपातहेतुरिति। जननं च मरणं च जननमरणे ताभ्यां क्लेशः दुःखं तत्र सम्पातः संमग्नत्वं, तस्य हेतुः। जननमरणेत्युपलक्षणं दुःखहेतूनां क्षुत्पिपासादीनां सर्वेषां, यद्वा जननं च मरणं च क्लेशाश्च जननमरण-क्लेशाः तेषां संपातः स्वधर्मत्वेन ज्ञानं तत्र हेतुरित्यर्थः। अधुना क्लेशपदेन

अस्मितारागद्वेषाभिनिवेशानां परिग्रहः पंचक्लेशमध्ये आदिमक्लेशस्यैव "अनात्मन्यहमितिमतिर्बन्ध" इत्युक्तत्वात्। "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मत्वख्यातिरविद्या" इति योगसूत्रात्। तत्र देहे स्थूलेभिमानात् जननमरणसंपातः आनन्दमयादावभिमानात्
निवेशानां संपातः इति सकलविधदुःखहेतुत्वं आदिमक्लेशस्य कार्याविद्याया बंधशब्दिताया इति बोध्यं। येनैव अनात्मन्यात्मसतिरूप-वन्धेनैव अयं पुरुषः इदमसद्वपुः आत्मबुध्या सत्यमिति अहमित्यभिमानेन। विषयैः बंधकैरप्यनुकूलैरिव प्रतीयमानैः रसादिभिः पुष्यति वर्धयति उक्षति सिंचति अवति रक्षति। तत्रानुरूपः दृष्टांतः तंतुभिः कोशकृद्वदिति। यथा कोशकारः क्रिमिः स्वदेहगत-लालाव्ययेन तंतून् कृत्वा तैः रक्षितो भवामीति भ्रान्त्या तन्मध्यलग्नः अन्यत्र गंतुमशक्तः वृथा म्रियते एवं जीवोपि शरीरमात्मत्वेन मत्वा विषयैः पोषयन् तद्वशः जन्ममरणादिसकलविधदुःखमनुभवतीति भावः। उक्तं हि "कोशक्रिमिस्तंतुभिरात्मदेहं आवेष्ट्य चावेष्ट्य च गुप्तिमिच्छन्। स्वयं विनिर्गन्तुमशक्त एव सन् ततस्तदंतर्म्रियते च लग्नः" इति॥ तत्र अवनं रक्षणं स्थितस्य परिपालनं पोषणं तु तदुपचायकत्वं इति भेदः॥१३९॥

अधिष्ठानारोप्ययोः भेदग्रहे अध्यासासंभवात् अज्ञानस्य मूलकारणस्य अविवेकद्वारा वन्धहेतुत्वं सदृष्टान्तं विशदयन् अध्यासं बन्धशब्दार्थमाह। अतस्मिन्निति।

अतस्मिंस्तद्बुद्धिः प्रभवति विमूढस्य तमसा
विवेकाभावाद्वै स्फुरति भुजगे रज्जुधिषणा।
ततोनर्थव्रातो निपतति समादातुरधिकः
ततोयोसद्ग्राहः स हि भवति बन्धः शृणु सखे॥१४०॥

तमसा अज्ञानेन विमूढस्य विवेकरहितचित्तस्य पुरुषस्य अतस्मिन्नात्मनि देहादौ तद्बुद्धिः आत्मबुद्धिः प्रभवति जायते। तद्यथा विवेकाभावात् स्फुरति भासमाने भुजगे सर्पे नेयं रज्जुरिति भेदज्ञानाभावात्, वै एव, रज्जुधिषणा रज्जुरिति बुद्धिः जायते। ततः रज्जुबुध्यनन्तरं उपादेयत्वधिया समादातुः भुजंगं स्वीकर्तुः अधिकः अनर्थव्रातः मरणपर्यन्त

वहुविधदुःख-समुदायः निपतति प्राप्तो भवति। ततः तस्मात्कारणात् योसद्ग्राहः अन्यथावर्तमानस्य अन्यथाग्रहणं सः बंधः भवति हि निश्चयः। सखे शृणु स्पष्टम्॥ तत्र रज्वां भुजगधिषणामदृष्टान्तयित्वा भुजगे रज्जुधिषणा अनात्मन्यध्यासे दृष्टान्तीकृता अत्यन्तानर्थकरत्व-द्योतनाय॥१४०॥

इदानीं कथमेष आगत इत्यस्य प्रश्नस्य उत्तरं वक्तुमारभते। अखण्डेति।

अखण्डनित्याद्वयबोधशक्त्या स्फुरन्तमात्मानमनन्तवैभवम्।
समावृणोत्यावृतिशक्तिरेषा तमोमयी राहुरिवार्कबिंबम् ॥१४१॥

अज्ञानस्य द्वे शक्ती वन्धहेतुभूते आवरणशक्तिः विक्षेपशक्तिश्चेति। क्रमेण तयोः वन्धहेतुत्वमुपपादयति। अखण्डा अपरिच्छिन्ना अत एव नित्या उत्पत्तिनाशशून्या। अद्वया द्वितीयशून्या या बोधरूपा शक्तिः "स्वाभाविकी ज्ञानवलक्रिया च" इति श्रुतेः "अयमात्मा ब्रह्म सर्वानुभूः" "सत्यं ज्ञानमनन्तं" "विज्ञानमानन्दं ब्रह्म" "कृत्स्नः प्रज्ञानघन एव" इतिश्रुतिभ्यश्च। तया शक्त्या स्फुरन्तं प्रकाशमानं। अनन्तवैभवं विभोर्भावः वैभवं, तस्य गगनादिवदापेक्षिकत्वं वारयति अनन्तेति। अनन्तं निरपेक्षं वैभवं यस्य इति निरतिशय-महत्वमुक्तम् अतिपरिच्छिन्ने देहादौ अहंमतिः अत्यन्तमयुक्तेति बोधयितुं। एतादृशे परिच्छिन्नत्वा-नित्यत्व-सद्वयत्व-जडत्वादिक-मारोप्यते अज्ञानात्। तत्र हेतुं स्फुटयति, तमनन्तवैभवं अखण्डनित्याद्वयबोध-शक्त्या प्रकाशमानमात्मानं तमोमयी तमःप्रचुरा एषा विवेकिजनप्रत्यक्षा आवृतिशक्तिः। अर्कबिंबं महता प्रकाशेन भासमानं सूर्यमण्डलं तमोमयो राहुरिव समावृणोति अभासमान-स्वासाधारण-धर्माणं करोति। यथा महाप्रकाशवानप्यर्कः राहुणावृतः न भासत इत्युच्यते तथा तत्तादृशोप्यात्मा आवृतिशक्त्या समावृतः अज्ञातवास्तवरूपो भवतीति भावः॥१४१॥

पूर्वार्धेन आवरणकार्यं उत्तरार्धेन विक्षेपशक्तिकार्यं च क्रमेणाह। तिरोभूत इत्यादिना।

तिरोभूते स्वात्मन्यमल-तरतेजोवति पुमान्
अनात्मानं मोहादहमिति शरीरं कलयति।
ततः कामक्रोध-प्रभृतिभि-रमुं बन्धकगुणैः
परं विक्षेपाख्या रजस उरुशक्तिर्व्यथयति॥१४२॥

अमलतरतेजोवति अतिस्वच्छप्रकाशवति स्वात्मनि स्वस्वरूपे परमात्मनि अज्ञानगतावरणशक्त्या तिरोभूते न्यग्भूते स्पष्टमभासमाने सति, पुमान् जीवः मोहात् अविवेकात्, अनात्मानं आत्मभिन्नं शरीरं देहं अहमिति तादात्म्येन कलयति जानाति अभिमन्यते। ततः शरीरे तादात्म्याभिमानानन्तरं अमुं पुरुषं विक्षेपाख्या विक्षेपनाम्नी रजसः रजोगुणस्य उरुशक्तिः प्रवला शक्तिः कामक्रोधप्रभृतिभिः कामश्च क्रोधश्च कामक्रोधौ तौ प्रभृती, आदी येषां लोभदंभाभ्यसूयाहंकारेर्ष्या-मत्सराद्यानां ते कामक्रोधप्रभृतयः तैः बन्धकगुणैः अध्यासवृद्धिहेतुभूतैः धर्मैः परमत्यन्तां व्यथयति शोचयति। दुःखजटिलं करीतीत्यर्थः। प्रसिद्धं हि शरीराभिमानवतः तदनुकूले वस्तुनि कामः तदलाभे क्रोधः तल्लाभे लोभः इत्यादि। उक्तं हि गीतायां "त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामःक्रोधस्तथा लोभस्तस्मादेतत्रयं त्यजेत्" इति॥१४२॥

एवमज्ञानं आवरणविक्षेपशक्तिभ्यां सर्वानर्थमूलमित्युक्तं पुनर्विशदयति महामोहेत्यादिना।

महामोह-ग्राहग्रसन-गलितात्मावगमनो
धियो नानावस्थास्स्वयमभिनयंस्तद्गुणतया।
अपारे संसारे विषयविषपूरे जलनिधौ
निमज्योन्मज्यायं भ्रमति कुमतिःकुत्सितगतिः॥१४३॥

महामोह-ग्राहग्रसन-गलितात्मावगमनः महांश्चासौ मोहश्च महामोहः दृढतराविवेकः स एव ग्राहः मकरः तस्य ग्रसनं तत्कर्तृक-निगरणं तेन गलितं नष्टं आत्मावगमनं आत्मनः अवगमनं सम्यज्ज्ञानं यस्य सः अनवबुध्यमानयाथात्म्य इत्यर्थः। धियः बुद्धेः नानावस्थाः बहुविधान् परिणामान्, तद्गुणतया तस्याः गुणाः यस्य सः तद्गुणः तदुपहिततया

तदधीनतयेति यावत् उपाधेः प्रतिबिंबपक्षपातित्वात्। प्रसिद्धं हि जले चलति तत्र भासमान-सूर्यप्रतिबिंबोपि चलतीति। "समानस्सन् उभौ लोकौ अनुसंचरति, सधीःस्वप्नो भूत्वा ध्यायतीव लेलायतीव" इति श्रुतेः। स्वयमभिनयन् स्वस्मिन्नारोपयन्। अपारे अनवधौ विषयविषपूरे विषया एव विषं विषयविषं तस्य पूरः प्रवाहः यत्र स विषयविषपूरः तस्मिन्संसारे जलनिधौ संसाररूपसमुद्रे। सप्तमी समानाधिकरणत्वार्थिका। कुमतिः कुत्सिता अब्रह्मगामिनी मतिः बुद्धिः यस्य सः कुमतिः अत एव कुत्सितगतिः कुत्सिता निंदिता गतिरवगतिः नरकाद्यधोलोकगतिर्वा यस्य स कुत्सितगतिः अयं पुमान् निमज्योन्मज्य अस्वतंत्रः अधो गत्वा ऊर्ध्वमागत्य भ्रमति। अवशीकृतबुद्धेः इन्द्रियलौल्येन विषयाधीनतया भ्रान्तिपरंपरा न संसारपार-ब्रह्म-प्राप्तिरिति भावः ॥१४३॥

स्वकार्यस्यापि स्वतिरोधायकत्वं सदृष्टान्तमाह। भान्विति।

भानुप्रभा-संजनिताभ्र-पंक्तिः
भानुं तिरोधाय यथा विजृंभते।
आत्मोदिताहंकृति-रात्मतत्वं
तथा तिरोधाय विजृंभते स्वयम् ॥१४४॥

भानोः सूर्यस्य प्रभया किरणैः संजनिता समुत्पादिता अभ्रपंक्तिः आपः बिभ्रतीति अभ्राणि मेघाः तेषां पंक्तिः माला, ग्रीष्मे सूर्यकिरणैः आकृष्टा आप एव मेघात्मना भवन्तीति प्रसिद्धिः। सा मेघमाला स्वोत्पादकं भानुं सूर्यंतिरोधाय आवृत्य यथा विजृंभते स्वयं पुरोभवति। तत्किरणैरेव जातत्वं तत्तिरोधाय स्वयमवभासमानत्वं चेति सर्वांशे दृष्टान्तः। तथा आत्मोदिताहंकृतिः आत्मनःसकाशादुदिता उत्पन्ना याहंकृतिः देहादावहंप्रत्ययः आत्माधीन-सत्तास्फूर्तिमानपि आत्मतत्वं आत्मयाथात्म्यं नित्य-शुद्ध-बुद्ध-मुक्तस्वभावत्वं तिरोधाय तदीयस्फुटभानं प्रतिबध्य स्वयं विजृंभते पुरस्स्फूर्तिको भवतीत्यर्थः। अहंकृतिः बुद्धिर्वा तस्या अपि आत्मनः सकाशादुत्पन्नत्वात् विज्ञानमयकोशत्वेन तदावरकत्वाच्च ॥१४४॥

इदानीं आवरणविक्षेपशक्तिकार्यं सदृष्टान्तमाह। कबलितेति।

कबलितदिननाथे दुर्दिने सान्द्रमेघैः
व्यथयति हिमझंझावायुरुग्रो यथैतान्।
अविरततमसात्मन्यावृते मूढबुद्धि
क्षपयति बहुदुःखैस्तीव्रविक्षेपशक्तिः ॥१४५॥

सान्द्रमेघैः सान्द्राः निबिडाः ते च ते मेघाश्च सान्द्रमेघाः तैः निरंतर-मेघैः। कबलितदिननाथे कबलितः ग्रस्तः दिननाथःसूर्यः यस्मिन् तत् कवलितदिननाथं तस्मिन्। दुर्दिने "मेघच्छन्नेऽन्हि दुर्दिनं" इति कोशात्। सूर्याभानेन अप्रकाशमये दिवसे उग्रः भयंकरः। हिमझंझावायुः "झंझावातः सवृष्टिक" इति कोशात् हिमसहितः सवृष्टिकवायुः यथा एतान् पथिकान् जनान् व्यथयति दुःखाकरोति। सूर्यातपो नास्ति मध्येमार्ग स्थितिः हिमवर्ष-सहितः महान् वायुश्चेति तदाऽध्वगानां पीडा दुर्वचा। एवं अविरततमसा सांद्रमेघवत् गाढेन तमसा सूर्यस्थानीये आत्मनि आवृते कवलिते स्फुटतया अप्रतीयमाने नष्टप्राये तीव्रविक्षेपशक्तिः राजसी कामक्रोधादि-रूपेण परिणममाना प्रबलविक्षेपशक्तिः। मूढबुद्धिं तामस्या आवरण-शक्त्या मूढा प्राप्तज्ञायमानताक-ज्ञानासमर्था बुद्धिः यस्य स मूढबुद्धिः तं पुमांसं। बहुदुःखैः बहूनि च तानि दुःखानि च बहुदुःखानि तैः जन्ममृत्यु-जरारोगादिजन्यैः क्षपयति नाशयतीत्यर्थः। संततदुःखपरंपरा-मग्नस्य क्वानन्दरूप-स्वात्मज्ञानं तदभावे स्वात्मादर्शनात् नष्ट इव भवत्यात्मेति भावः ॥१४५॥

कथमेष आगत इतिप्रश्नोत्तरमुक्तं स्फुटज्ञानार्थं-मुपसंहरति। एताभ्यामिति।

एताभ्यामेव शक्तिभ्यां बन्धः पुंसः समागतः।
याभ्यां विमोहितो देहं मत्वात्मानं भ्रमत्ययम् ॥१४६॥

एताभ्यां गुणत्रयमयाज्ञान-गततमोरजश्शक्तिभ्यां आवृतिविक्षेप-रूपाभ्यां पुंसः पुरुषस्य बन्धः अतस्मिंतद्बुद्धि-रूपाध्यासः समागतः। स्थिरतरसाधनचतुष्टयपुरस्सर-वेदान्तविचारजन्य-स्वात्मसाक्षात्कारं विना दुर्निरसः प्राप्तः। याभ्यां पूर्वोक्तशक्तिभ्यां विमोहितः ज्ञातव्यज्ञान-

शून्यः देहं स्थूलादिकं आत्मानं मत्वा अहमिति विज्ञाय अयं पुमान् भ्रमति संसारदीर्घाटव्याम् ॥१४६॥

मुमुक्षूणां सुखबोधार्थं समूलं समग्रं संसारं वृक्षत्वेन रूपयति । बीजमित्यादिना ।

बीजं संसृतिभूमिजस्य तु तमो देहात्मधीरंकुरः,
राग: पल्लवमम्बु कर्म तु वपुः स्कंधोसवःशाखिकाः ।
अग्राणीन्द्रिय-संहतिश्च विषयाः पुष्पाणि दुःखं फलं,
नानाकर्म-समुद्भवं बहुविधं भोक्तात्र जीवः खगः ॥१४७॥

संसृतिभूमिजस्य संसृतिरेव भूमिजः वृक्षः तस्य बीजं मूलकारणं तमः अज्ञानं। तुरवधारणे अज्ञानमेव मूलं नान्यदित्यर्थः। देहात्मधीरंकुरः अनात्मन्यात्मधियः अज्ञानैकनिबन्धनत्वात्। रागः पल्लवं किसलयः अंकुरोत्पत्यनन्तर-कालिकत्वात्-पल्लवस्य । शरीरात्मधी-समनन्तरं शरीरानुकूले आत्मानुकूलत्वज्ञानात् रागः इच्छा वैषयिकी। अंबु जलं वृक्ष-वृद्धिहेतुः कर्म तु कर्मैवेत्यर्थः। तुः पूर्ववत्। "कुर्वते कर्म भोगाय कर्म कर्तुं च भुंजते" इत्युक्तेः। कर्म पुण्यापुण्यात्मकं। वपुःस्कंधः यतश्शाखा उत्पद्यन्ते स मध्यभागः वृक्षस्य स्कंध इत्युच्यते। असवः पंच प्राणादयो वायवः स्कंधतः प्रसृमरत्वात् शाखिकाः शाखा एव शाखिकाः। अग्राणीन्द्रिय-संहतिः इन्द्रियाणां संहतिः इन्द्रियसंहतिः इन्द्रियसमुदायः चक्षुरादीनां वागादीनां च इन्द्रियाणां प्रणाधीनस्थितिकत्वात्। इदं तु इन्द्रियप्राणसंवादश्रुतौ प्रसिद्धं। अग्राणां शाखाधीनस्थितिकत्वंसिद्धमेव। विषयाः शब्दस्पर्श-रूपरसगंधाः पुष्पाणि अग्रसंबन्धात् कुसुमानि। दुःखं फलं विषयेन्द्रिय-संबन्धानंतरकालिकत्वात्। शाखाग्रेषु पुष्पोत्पत्यनंतरं हि फलं जायते। यद्यपि सुखमपि फलत्वेन वक्तव्यमिति प्रतीयेत पूर्वं कर्म-शब्देन पुण्यापुण्यरूपस्यकर्मणः उक्तत्वात् सुखस्यापि कदाचिदनुभवाच्च अथापि वैषयिकसुखमपि दुःखमित्येव परिगण्यते विवेकिभिः। तत्साधनार्थं तन्नाशे च दुःखस्यैवानुभवात् "ये हि संस्पर्शजा भोगा दुःख-योनय एव ते। आद्यन्तवन्तः कौन्तेय न तेषुरमते बुधः" इति गीतायामुक्तेः अत एव एकविंशतिदुःखमध्ये षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः शरीरं

सुखं दुःखं चेति दुःखत्वेन सुखमपि परिगणितं न्यायशास्त्रे। तच्च दुःखं नानाकर्म-समुद्भवं नाना बहुविधानि यानि कर्माणि तेभ्यः समुद्भवो यस्य तत् नानाकर्म-समुद्भवं। अतो हेतोः कर्मणः बहुविधत्वात् फलं स्वयमपि बहुविधं अनेकप्रकारं। अत्र वृक्षेखगः पक्षी जीवः भोक्ता दुःखरूप-फलानुभवीत्यर्थः। तथाच अज्ञानमूलकः दुःखैकफलकः अयं संसारवृक्षः विषवृक्षवद्धेय इति भावः। अनेन देहात्मधीरूप-बंधस्य रागद्वेषादिदोषोत्पादनद्वारा धर्माधर्म-रूपकर्महेतुतया, तेन च कर्मणा शरीरपरंपरया तत्राहमभिमानः इत्येवं रूढमूलतया स्थितिरिति "कथं प्रतिष्ठास्य" इत्यस्य प्रश्नस्य उत्तरं दत्तं भवति॥१४७॥

इदानीं कथं विमोक्ष इत्यस्य प्रश्नस्य उत्तरं वक्तुं पूर्वोक्तं बन्धं सहेतुकं सफलमनुवदति। अज्ञानेति।

अज्ञानमूलोयमनात्मबन्धो
नैसर्गिकोनादिरनन्त ईरितः।
जन्माप्ययव्याधि-जरादिदुःख-
प्रवाहतापं जनयत्यमुष्य॥१४८॥

अयं सर्वलोकप्रसिद्धः अनात्मबन्धः शरीराद्यनात्मतादात्म्याभिमानः अज्ञानमूलः अज्ञानं स्वस्वरूपाज्ञानं मूलं हेतुर्यस्य सः। नैसर्गिकः पूर्वपूर्वाध्यास-जन्यसंस्कारहेतुकः। अनादिः अनाद्यज्ञानकार्यत्वात् कस्मिन्समये उत्पन्न इति वक्तुं ज्ञातुं च अशक्यः। अनन्तः ज्ञानं विना अंतः नाशः न विद्यते अस्येत्यनन्तः। ईरितः अभियुक्तैरिति शेषः। "नान्तो न चादिः" इति स्मृतिश्च। एतादृगयं बन्धः। अमुष्य जीवस्य जन्माप्यय-व्याधि-जरादिदुःख-प्रवाह-तापं जन्म उत्पत्तिः शरीरस्य, अप्ययः मरणं, व्याधिः रोगः, जरा वार्धक्यं आदिपदेन आधिभौतिकाधिदैविकतापपरिग्रहः। तैर्जन्यानि यानि दुःखानि तेषां प्रवाहः परंपरा उपर्युपरि संनिपातः तेन तापं उद्वेगं जनयति उत्पादयति। पातमितिपाठे स्पष्टोर्थः प्रवाहपातमति॥१४८॥

अस्य परमेश्वरानुग्रहलब्ध-दृढतर-विवेक-जन्य-स्वस्वरूपानुभवमंतरा केनाप्यनुच्छेद्यत्वमाह। नास्त्रैरिति।

नास्त्रैर्न शस्त्रैरनिलेन वह्निना
छेत्तुं न शक्यो नच कर्मकोटिभिः।
विवेकविज्ञान-महासिना विना
धातुः प्रसादेन शितेन मंजुना ॥१४९॥

अयं बन्धः धातुः प्रसादेन परमेश्वरस्यानुग्रहेण शितेन निशितेन तीक्ष्णेन दृढेनेति यावत् "यमेवैष वृणुते तेन लभ्य" इति श्रुतेः। मंजुना रमणीयेन, विवेकविज्ञानमहासिना विवेकात् आत्मानात्मविवेचनात् जातं यद्विज्ञानं ब्रह्मसाक्षात्कारः स एव महांश्चासौ असिश्च खड्गः तेन विना। अस्त्रैः आग्नेयादिभिः न छेत्तुं नाशयितुं शक्यः, शस्त्रैः लोहमयैः बाणादिभिः न छेत्तुं नाशयितुं शक्यः। एवं अनिलेन वायुना न छेत्तुं नाशयितुं शक्यः। वह्निना अग्निना न दग्धुं शक्यः। न च कर्मकोटिभिःवेदोक्तैरपि कर्मणां कोटयः तैरपि न नाशयितुं शक्यः। अज्ञानमूलकत्वात् ज्ञानैकनिवर्त्य इति भावः। तथाच अस्य बंधस्य विमोक्षः ईश्वरप्रसादजनित-परमात्मा-भेद-साक्षात्कारादित्युक्तम् कथं विमोक्ष इत्यस्य प्रश्नस्य उत्तरम् ॥१४९॥

नच कर्मकोटिभिरित्युक्तत्वात् कर्मणां वैदिकानां नितरामनपेक्षेति-शंकायां तेषां बुद्धिशुध्यर्थं अपेक्षां वदन् तां वन्धोच्छेदकविज्ञानहेतुमाह। श्रुतीति।

श्रुतिप्रमाणैकमतेस्स्वधर्मनिष्ठा-तयैवात्मविशुद्धिरस्य।
विशुद्धबुद्धेः परमात्मवेदनं तेनैव संसारसमूलनाशः ॥१५०॥

श्रुतिरेव प्रमाणं श्रुतिप्रमाणं "तस्माच्छास्त्रं प्रमाणं ते कार्या-कार्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि" इति गीतावचनात्। तत्र श्रुतिप्रमाणे एका अनन्यसक्ता मुख्या मतिः बुद्धिः यस्य सः श्रुतिप्रमाणैकमतिः तस्य, स्वश्रेयसे कर्तव्यकर्मविषये श्रुत्येक-शरणस्येत्यर्थः। स्वधर्मनिष्ठा स्वस्य धर्मः स्ववर्णस्य आश्रमस्य च विहितः कर्मकलापः स्वधर्मः। तत्र निष्ठा नितरां स्थितिः ऐदंपर्येण अनुष्ठानं स्वधर्मनिष्टा तयैव स्वधर्मे अनन्यासक्ततया स्थित्यैव। अस्य साधकस्य जीवस्य आत्मविशुद्धिः आत्मनः अन्तःकरणस्य विशेषेण शुद्धिः पापक्षयः "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः। कषायपक्तिः कर्माणि ज्ञानं तु

परमागतिः। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इतिप्रमाणानुसारेण विशुद्धा नष्टरागद्वेषादि-सकलविधदोषा बुद्धिः यस्य तस्य विशुद्धबुद्धेः। परमात्मवेदनं अभेदेन परमात्मसाक्षात्कारः। तेनैव परमात्मवेदनेनैव संसारसमूलनाशः समूलं नाशः समूलनाशः संसारस्य समूलनाशः संसारसमूलनाशः। अज्ञानादिदुःखान्तस्य वन्धस्य अत्यन्तमुच्छेद इत्यर्थः ॥१५०॥

"विवेकविज्ञानमहासिने"त्यत्र विवेकजन्यं विज्ञानमित्युक्तम् "तयोर्विवेकः कथमेतदुच्यता" इति पूर्वं शिष्येण पृष्टं च। पूर्वं स्थूलसूक्ष्मकारणशरीराणां सामान्यतः कथनेन संगृहीतं तद्विस्तरेण प्रपंचयितुं समारभते। कोशैरित्यादिना।

कोशैरन्नमयाद्यैः पंचभिरात्मा न संवृतो भाति।
निजशक्ति-समुत्पन्नैः शैवलपटलैरिवांबु वापीस्थम् ॥१५१॥

"सलिल एको द्रष्टा" इत्यादिश्रुतिभिः निर्मलजलवत्स्वच्छस्य आत्मनः स्फुटतया कुतो न भानमिति शंकायां तत्रापि तदेव जलं दृष्टान्तयन् स्फुटाभानहेतुमाह कोशैरिति। निजशक्तिसमुत्पन्नैः निजा स्वकीया स्वस्मिन्कल्पिता अविद्या तया समुत्पन्नैः जातैः अन्नमयाद्यैः वक्ष्यमाणैः पंचभिः कोशैः असेः कोशवत्स्थितैः आवरकैः आनन्दमयान्तैः। स्वोपलब्धिप्रतिबन्धकोपलब्धि-विषयैः संवृतः अम्वृतः आत्मा न भाति न विविक्ततया स्फुटं भासते। तत्र दृष्टान्तः निजशक्तिसमुत्पन्नैः जलगत-द्रवत्वधर्मसमुत्पन्नैः। शैवलपटलैः शैवालपंक्तिभिः। वापीस्थं अंब्विव। यथा वापीगतं जलं तत एव जातैः शैवालैः संवृतं आच्छादितं न स्फुटतया भाति तथा इत्यर्थः ॥१५१॥

दृष्टान्ते स्फुटभाने हेतुमाह। तच्छैवालेति।

तच्छैवालापनये सम्यक्सलिलं प्रतीयते शुद्धम्।
तृष्णासंतापहरं सद्यस्सौख्य-प्रदं परं पुंसाम् ॥१५२॥

तत् आवरकं यच्छैवालं तस्यापनये सम्यगपसारणे शुद्धं निर्मलं सलिलं सम्यक् अप्रतिबन्धं प्रतीयते। ततः फलमाह तृष्णासंतापहरं,

तृष्णया यः संतापः दुःखं हरतीति हरं तस्य नाशकं। पुंसः पुरुषस्य पातुः सद्यस्सौख्यप्रदं दर्शनस्नान-पानादिना प्रकर्षेण संतोषदं। परं श्रेष्ठं प्रतीयत इति पूर्वेणान्वयः ॥१५२॥

दार्ष्टान्तिके तदाह। पंचानामपीति।

पंचानामपि कोशानां अपवादे विभात्ययं शुद्धः।
नित्यानन्दैकरसः प्रत्यग्रूपः परः स्वयंज्योतिः ॥१५३॥

पंचानामपि अपिशब्दः कात्स्न्येंन निषेधार्थः। कोशानां आवरकानां अन्नमयाद्यानन्दमयान्तानां श्रुतिदत्त-युक्त्या अपवादे निषेधे कृते सति। नित्यानन्दैकरसः उत्पत्तिनाशशून्य-दुःखासंभिन्ना-नन्दैकस्वभावः। प्रत्यग्रूपः सर्वान्तरः स्वयंज्योतिः पराप्रकाश्यः केवलज्ञानस्वरूपः। परः सर्वोत्कृष्टः अयमात्मा शुद्धः स्वाभाविकागंतुक-मलासंस्पृष्टः। विभाति विशेषेण भाति अनात्मासंसृष्टतया भासत इत्यर्थः ॥१५३॥

यत एवं ततः,

आत्मानात्मविवेकः कर्तव्यो बन्धमुक्तये विदुषा।
तेनैवानन्दीभवति स्वं विज्ञाय सच्चिदानन्दम् ॥१५४॥

विदुषा शास्त्रजन्यज्ञानवता पुरुषेण। बन्धमुक्तये अध्यासनिवृत्तये। आत्मानात्मविवेकः आत्मा च अनात्मानश्च आत्मानात्मनः तेषां विवेकः असंकीर्णतया ज्ञानं। कर्तव्यः यत्नात् संपादनीयम्। तेनैव आत्मानात्म-विवेचनेनैव स्वं स्वस्वरूपं सच्चिदानन्दं कालत्रयाबाध्यं ज्ञानं आनन्दं विज्ञाय साक्षात्कृत्य, उक्तं हि द्वितीयश्लोके आत्मानात्मविवेचनं स्वनुभव इति, आनन्दीभवति आनन्दः अस्यास्तीति आनन्दी निरतिशय-सार्वदिक-सुखवान्भवतीत्यर्थः ॥१५४॥

विवेचनप्रकारं दृष्टान्तेन बुद्धावारोहयन् ब्रह्मात्मना संस्थितिरूप-मुक्त्यै विवेचनानन्तरकर्तव्यमाह। मुंजादिति।

मुंजादिषीकामिव दृश्यवर्गात्
प्रत्यंचमात्मान-मसंगमक्रियम्।

विविच्य तत्र प्रविलाप्य सर्वं
तदात्मना तिष्ठति यस्स मुक्तः ॥१५५॥

मुंजात् मुंजं तृणविशेषः तस्मात्। इषीकामिव तन्मध्यवर्ती-मृणाल-तंतुनिभ-सूक्ष्मांशः इषीका तामिव। सा सूक्ष्मा परितस्तृणावृता तस्याः पृथक्करणे अत्यंतमैकाग्र्यं त्रोटनादिकं विना संपूर्णेषीकाग्रहणे यत्नविशेषश्च अपेक्ष्यते तद्वत् "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इतिश्रुत्या विहितकर्मभिः उपासनया च संस्कृतया बुध्या दृश्यवर्गात् अनात्मसमूहात्। प्रत्यंचं प्रातिलोम्येन अंचतीति प्रत्यङ असज्जड-दुःखाहंकारादिविलक्षणत्वेन सच्चित्सुख-रूपतया प्रकाशत इत्यर्थः। तं असंगं अद्वितीयतया सर्वसंगरहितं। अक्रियं अपरिच्छिन्नतया क्रियारहितं। आत्मानं विविच्य पृथक्कृत्य तत्र प्रत्यगात्मनि सर्व दृश्यवर्ग प्रविलाप्य प्रकर्षेण विलाप्य अपुनस्स्मरणं प्रत्यगात्मव्यतिरेकेण किमपि नास्तीति विनिश्चित्य। तदात्मना अधिष्ठान-भूत-प्रत्यगात्मना यस्तिष्ठति सर्वदा वर्तते स मुक्तः सकलविधात् बन्धात् इति, ब्रह्मात्मना संस्थितिः आत्मानात्मविवेकेन आत्मनि समारोपितानात्म-बाधेन लब्धव्या इति प्रपंचप्रविलापनं विवेकिना कर्तव्यमित्युक्तं भवति ॥१५५॥

इदानीं पंचसु कोशषु अन्तिममपि प्रथमं स्थूलतया विवेकार्हं "अस्माल्लोकात्प्रेत्य, एतमन्नमयमात्मानमुपसंक्रामति" इति श्रुत्युक्तक्रमेण सर्वान्तरमात्मानं ग्राहयितुं विवेचयति देहोयमित्यादिना दशभिः श्लोकैः ।

देहोयमन्नभवनोन्नमयस्तु कोशो
ह्यन्नेन जीवति विनश्यति तद्विहीनः।
त्वक्चर्म-मांसरुधिरास्थि-पुरीषराशिः
नायं स्वयं भवितुमर्हति नित्यशुद्धः ॥१५६॥

अन्नाद्भवनमुत्पत्तिर्यस्य स अन्नभवनः मातापितृ-भुक्तान्नविकाराद्धि अस्योत्पत्तिरिति तथा। अयं देहः परिदृश्यमानः स्थूलदेहः अन्नमयस्तु कोशः, तुशब्दः इतरव्यावर्तकः। पंचानां कोशानां मध्ये स्थूलदेह एव अन्नमयः कोशः नेतर इत्यर्थः। "अन्नाद्वै प्रजाः प्रजायन्ते। अथो अन्नेनैवजीवन्ति"

इतिश्रुतिः। न केवलमुत्पत्या अन्नविकारत्वं उत्पत्यनंतरमपि अन्नेन जीवति धृतप्राणो भवति। तद्विहीनः विनश्यति म्रियते उत्क्रान्तप्राणो भवतीत्यर्थः। अतः अन्वयव्यतिरेकाभ्यां अन्नाधीनस्थितिकत्वं तस्य। हि निश्चयः। न केवलं पराधीनोत्पत्तिस्थितिकत्वं अनात्मत्वे हेतुः अशुद्धत्वं चेत्याह त्वगिति। त्वक्चर्म-मांसरुधिरास्थि-पुरीषराशिः स्पष्टम्। अयं देहः नित्यशुद्धः "अजो नित्यः" "शुद्धमपापविद्धं" इत्यादिश्रुति-बोधित-नित्यशुद्धत्वादि-धर्मकः स्वयमात्मा भवितुं नार्हति। देहो नात्मा अनित्यत्वात् अशुद्धत्वात् केशादिवत्॥१५६॥

अनित्यत्वमुपपादयति स्पष्टं पूर्वमिति।

पूर्वं जनेरपि मृतेरथ नायमस्ति
जातक्षणक्षण-गुणोनियतस्वभावः।
नैको जडश्च घटवत्परिदृश्यमानः
स्वात्मा कथं भवति भावविकारवेत्ता॥१५७॥

जनेः उत्पत्तेः पूर्वं मरणस्य अथ अनन्तरं अपिरुभयत्र संबध्यते "आदावंते च यन्नास्ति वर्तमानेपि तत्तथा" इति माण्डूक्यकारिकया अनिर्वचनीयः दृष्टनष्टस्वरूपतया इत्यर्थः। तदेवोपपादयति जातक्षण-क्षणगुण इति। क्षणे क्षणे गुणः क्षणक्षणगुणः जातः क्षणक्षणगुणः यस्य सः तथा प्रतिक्षणं उपचयापचयरूपधर्मवानिति भावः। वायुसंयोगादिना आध्यात्मिकवायुसंचारेण अन्तःशोषादिना च। अत एवहि पुनःपुनराहरणं जलपानादिकं च। अत एव अनियतस्वभावः नियतः स्वभावः यस्य स नियतस्वभावः न नियतस्वभावः अनियतस्वभावः एकरूपतया न व्यवस्थित इत्यर्थः। नैकः एकस्मिन्जन्मन्यपि बाल्ययौवनादिषु भिन्नत्वेन ज्ञायमान-श्चेत्यर्थः। घटवत्परिदृश्यमानः। अत एव जडश्च पराधीनस्फूर्तिकः। एतादृशदेहः भावविकारवेत्ता इदानीं कृशः इदानीं स्थूलः इत्यादिनाभाव-विकारवेत्ता ज्ञाता स्वात्मा कथं भवति स्वगतधर्मस्य स्वेनाज्ञायमानत्वात्, न हि घट एव घटं पश्यति, अतो देहो नात्मा दृश्यत्वात् घटवदित्युक्तं भवति। आत्मा तु नित्यः निर्गुणः एकरूपः एकः द्रष्टा च॥१५७॥

तत्रैव हेत्वंतरमाह। पाणीति।

पाणिपादादिमान्देहो नात्मा व्यंगेपि जीवनात्।
तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः॥१५८॥

पाणी च पादौ च तेषां समाहारः पाणिपादं तदादि यस्यैतरस्य पक्षकुक्ष्याद्यवयवसमुदायस्य तदस्यास्तीतितद्वान् पाणिपादादिमान्। नात्मा व्यंगेपि पाणिपादादिरहितेपि जीवनात् आत्मकार्यस्य प्राणधारणस्य सत्वात्। 'जीवंति हि लोके कुणिखंजादयः। दारुचर्मनिर्मित-पाणि-पादादिना आदानगमनादिकार्यं कुर्वन्तीति तत्तच्छक्तेः पाणिपादादिशक्तेः अनाशाच्च। पाण्यादिमान् देहो नात्मा इत्यन्वयः। उक्तं चकठोपनिषदि "न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवंति यस्मिन्नेता-वुपाश्रितौ" इति सर्वशक्त्याश्रयत्वमात्मनः। न नियम्यः आत्मा, नियामकः सर्वेषां देहेन्द्रियादीनां। देहस्तु नियम्यः जडत्वात् नियमकत्वा-भाववांश्च। ततः सावयवत्वात् नियम्यत्वाच्च निरवयवः नियामकः आत्मा नेति समुदायार्थः॥१५८॥

देहस्य आत्मभिन्नत्वमुपपाद्य आत्मनः तद्विलक्षणत्वं विवेक-दाढ्यार्योपदिशति। देहेति।

देहतद्धर्म-तत्कर्म-तदवस्थादि-साक्षिणः।
सत एव स्वतस्सिद्धं तद्वैलक्षण्यमात्मनः॥१५९॥

तस्य देहस्य धर्माः रूपस्पर्शगन्धादयः, तत्कर्माणि हिताहितप्राप्ति-परिहारार्थक्रियाः गमनादयः, तदवस्थाः उपवेशनस्थानशयनादयः आदि-पदेन स्थौल्यकार्श्यदिविकाराः। देहश्च तद्धर्माश्च तत्कर्माणि च तदवस्थादि च देहतद्धर्म-तत्कर्मतदवस्थादीनि तेषां साक्षाद्रष्टा। तस्य सत एव सर्वावस्थासु बाल्यादिषु भिन्नभिन्नकालिकास्वपि अविकारितया काल-त्रयेप्यबाध्यतया वर्तमानस्यैव आत्मनः तद्वैलक्षण्यं तस्माद्वैलक्षण्यं तद्वैलक्षण्यं देहादिविलक्षणत्वं स्वतः साक्षित्वादेव हेत्वंतरं विनैव सिद्धं निश्चितम् इत्यर्थः। आत्मा देहादिविलक्षणः तत्साक्षित्वात् यन्नैवं तन्नैवं यथा देहादि॥१५९॥

एवं देहस्य अनित्यत्वात् दृश्यत्वात् च अनात्मत्वमुपपादितं इदानीं तदुपपादयति। शल्येति।

शल्यराशिः मांसलिप्तो मलपूर्णोतिकश्मलः ।
कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः ॥१६०॥

शल्यानां कीकसानां राशिः यत्र स शल्यराशिः मांसलिप्तः मांसेन लिप्तः उपदिग्धः मलपूर्णः मलेन पुरीषेण पूर्णः दूषिका-सिंघाण-पिंजूषादिभिः सहितश्च। अत एवातिकश्मलः अत्यंतं कश्मलः अतिकश्मलः। स्वेद-दुर्गंधादिभूयिष्ठतया वह्वशुद्धः अयं देहः एतद्विलक्षणः निर्मलः स्वयमात्मा कथं भवेत् इत्यन्वयः। अनुमानं तु पूर्वं दर्शितम् ॥१६०॥

एवंविवेकस्य फलमाह। त्वगिति।

त्वङ्मांसमेदोस्थिपुरीषराशा-वहंमतिं मूढजनः करोति।
विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम् ॥१६१॥

मूढश्चासौ जनश्च मूढजनः विचारहीनः भ्रान्तबुद्धिः मनुष्यः त्वङ्मांसमेदोस्थिपुरीषराशौ देहे अहंमतिं अहमितितादात्म्यबुद्धिं करोति, वध्नाति। विचारशीलः पुमांस्तु विलक्षणं देहविलक्षणं परमार्थभूतं कालत्रयेपि वाधायोग्यं निजस्वरूपं वास्तविकं स्वयाथात्म्यं परमात्मानमेव स्वात्मानं जानाति ॥१६१॥

तत्रापि

देहोहमित्येव जडस्य बुद्धिः
देहे च जीवे विदुषस्त्वहंधीः।
विवेकविज्ञानवतो महात्मनो
ब्रह्माहमित्येव मतिः सदात्मनः ॥१६२॥

जडस्य पामरस्य अहं देहः एव नतद्व्यतिरिक्तः कश्चित् इति बुद्धिः। विदुषस्तु शास्त्रजन्यपरोक्षज्ञानवतः देहे च जीवे च अहंधीः लौकिकव्यवहारेषु देहे वैदिके स्वर्गार्थयागादिकरणार्थं देहव्यतिरिक्ते जीवे अहंधीः। विवेकविज्ञानवतः विवेकाद्विज्ञानं विवेकविज्ञानं आत्मानात्म-विवेचनात् आत्मन्यनात्मप्रविलापनेन जातं यद्विज्ञानं साक्षात्कारः तदस्या-स्तीति तद्वान् तस्य महान् परिच्छेदत्रयशून्यः आत्मा यस्य सः महात्मा। पूर्वं परिच्छिन्नेषु अनात्मसु कोशेषु आत्मत्वधिया अल्प आसीत् इदानीं तु

सम्यग्ज्ञानवान् स्वात्मान् त्रिविधपरिच्छदशून्यं मनुते "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इति श्रुतेः। तादृशस्य सदात्मनि सदा सर्वदापि आत्मनि स्वविषये ब्रह्माहमित्येव मतिः अनुभव इत्यर्थः ॥१६२॥

तस्मात्

अत्रात्मबुद्धिं त्यज मूढबुद्धे त्वङ्मांसमेदोस्थिपुरीषराशौ।
सर्वात्मनि ब्रह्मणि निर्विकल्पे कुरुष्व शान्तिं परमां भजस्व ॥१६३॥

मूढबुद्धे विवेचनरहितान्तःकरण, यद्वा मूढैः बुद्धे अहंतया ज्ञाते अत्र त्वङ्मांसमेदोस्थिपुरीषराशौ अत्र स्थूलदेहे आत्मबुद्धिं अहमिति मतिं त्यज विसृज। "इदं सर्वं यदयमात्मा" "सर्वं खल्विदं ब्रह्म" इतिश्रुत्या सर्वोपादानत्वेन कल्पितसकलाधिष्ठानत्वेन सर्वस्य वस्तुनः वास्तविकरूपे निर्विकल्पे विविधकल्पनाशून्ये ब्रह्मणि परमात्मनि इदानीं देहे वर्तमानां आत्मबुद्धिं अहमिति मतिं कुरुष्व अहमेव परं ब्रह्मेति जानीहि। तत्फलमाह परमां मुक्तिसुखदां शान्तिं बुध्युपशान्तिं ब्रह्मसंस्थामिति यावत् भजस्व प्राप्नुहि। शान्तिं निर्वाणपरमांमत्संस्थामधिगच्छतीति स्मृतेः ॥१६३॥

देहादावभिमानत्यागं विना केवलशास्त्रजन्यज्ञानान्नमुक्तिरित्याह। देहेन्द्रियेति।

देहेन्द्रियादावसति भ्रमोदितां
विद्वानहंतां न जहाति यावत्।
तावन्न तस्यास्ति विमुक्तिवार्ता-
प्यस्त्वेष वेदान्तनयान्तदर्शी ॥१६४॥

विद्वान् विवेचनकुशलः। असति मिथ्याभते देहेन्द्रियादौ देहश्च इन्द्रियाणि च देहेन्द्रियाणि तानि आदीनि यस्य तत् प्राणमनोबुध्यादि तस्मिन्, यावत् यावता कालेन भ्रमोदितां भ्रान्तिजनितां अहंतां आत्मबुद्धिं न जहाति न परित्यजति तावत् तावत्कालपर्यन्तं तस्य पुंसः विमुक्तिवार्तापि नास्ति कुतो विमुक्तिरितिभावः। एष पुमान् वेदान्तनयान्त-

दर्श्यप्यस्तु वेदान्ता एव नयः शास्त्रं तस्य अन्तः पारः तं द्रष्टुं शीलमस्यास्तीति दर्शी वेदान्तनयान्तदर्शी। सोपि अभिमानत्यागं विना न मुक्तिमर्हति। अतः निरंतरनिदिध्यासनेन विपरीतभावना त्यक्तव्येति भावः ॥१६४॥

तस्याः त्यागे विचारं सुलभोपायमाह। छायेति।

छायाशरीरे प्रतिबिंबगात्रे
यत्स्वप्नदेहे हृदिकल्पितांगे।
यथात्मबुद्धिस्तव नास्ति काचित्
जीवच्छरीरे च तथैव मास्तु ॥१६५॥

यत् यस्मात्कारणात् छायाशरीरे शरीरच्छायायां प्रतिबिंबगात्रे दर्पणादौ प्रतीयमानगात्रप्रतिबिंबे स्वप्नदेहे स्वप्नावस्थायां दृश्यमानशरीरे हृदि मनसि कल्पितांगे कल्पितं च तत् अंगं च कल्पितांगं तस्मिन् जाग्रदवस्थायां मनःकल्पितदेहे यथा तव काचित् आत्मबुद्धिः अहमितिमतिः नास्ति न विद्यते। तथैव जीवच्छरीरे च प्राणान्धरद्यच्छरीरं तस्मिन्नपि मास्तु। द्रष्टुः स्वस्माद् भिन्नत्वेन प्रतीतेः सर्वत्र अविशिष्टत्वात् इति भावः ॥१६५॥

अन्नमयकोशमुपसंजिहीर्षुः सर्वानर्थकरी देहात्मधीस्त्याज्येत्याह। देहात्मधीरिति।

देहात्मधीरेव नृणामसद्धियां
जन्मादिदुःखप्रभवस्य बीजं।
यतस्ततस्त्वं जहि तां प्रयत्नात्
त्यक्ते तु चित्ते न पुनर्भवाशा ॥१६६॥

यतः यस्मात् असत्सु ब्रह्मभिन्नेष्वनात्मसु धीर्येषां ते असद्धियः तेषां नृणां मनुजानां देहात्मधीरेव देह एवात्मा इति धीरेव जन्मादिदुःखप्रभवस्य जन्म उत्पत्तिरादिः येषां मरणादीनां तानि जन्मादीनि तैर्यद्दुःखं तस्य प्रभवः उत्पत्तिः तस्याः बीजं कारणं शरीरगतत्वात् जन्ममरणादेः। तदेवाहमिति जानानस्य तत्सर्वं स्वकीयमेवेति ज्ञानात् दुःखं दुष्परिहरमिति भावः। ततः सर्वदुःखहेतुत्वात् तां देहात्मधियं प्रयत्नात् श्रवणमनननिदिध्यासनरूप-शास्त्रीयप्रयत्नात् जहि जहीहीत्यर्थः। नाशयेति वा।

देहादौ चित्ते त्यक्ते तु मनसःसंचाराभावे वासनात्मनाप्यभिमानाभावे पुनः भवाशा संसाराशा नैवेत्यर्थः। "अहंभावस्य देहेस्मिन् निश्शेषविलयावधि। सावधानेन युक्तात्मा स्वाध्यासापनयं कुरु" इति वक्ष्यमाणत्वात्। "देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकं। आत्मन्येव भवेद्यस्य स जीवन्नपि मुच्यते" इति प्रमाणात्॥१६६॥

अन्नमयं निरूप्य ततः आन्तरं प्राणमयं श्रौतक्रमेण अनात्मानं निरूपयति। कर्मेन्द्रियैरित्यादिना द्वाभ्यां।

कर्मेन्द्रियैः पंचभिरंचितोयं प्राणो भवेत्प्राणमयस्तु कोशः।
येनात्मवानन्नमयोनुपूर्णः प्रवर्ततेसौ सकलक्रियासु॥१६७॥

पंचभिः वाक्पाणिपादपायूपस्थाख्यैः कर्मेन्द्रियैः वचनादानविहरणोत्सर्गानन्द-रूपकर्मजनकैः इन्द्रियैः क्रमेण आकाशादिपंचभूतरजोंशजातैः अंचितः विशिष्ट इत्यर्थः। भूतपंचक-समष्टिरजःकार्यः प्राणः शरीरान्तस्संचारी वायुः प्राणमयः तच्छब्दशब्दितः। कोशः अशनाया-पिपासादिधर्मैः आत्मानमावृण्वन् अपिपास-विजिघत्सात्मोपलब्धिप्रतिबंधिका या अहं पिपासार्तः क्षुत्पीडितः इत्यादिरुपलब्धिः तद्विषयो भवतीत्यर्थः। "तेनैष पूर्णः, सवा एष पुरुषविध एव, तस्य पुरुषविधतां, अन्वयं पुरुषविधः" इति प्राणमय-पर्यायस्थ-श्रुत्यर्थमाह, येन प्राणमयेन आनन्दमय-विज्ञानमय-मनोमयद्वारा आत्मप्रतिफलनवत्वेन आत्मवता अन्नमयः "तस्माद्वा एतस्मादन्नरसमयात् अन्योन्तर आत्मा प्राणमयः" इति श्रुतेः आत्मवान् आत्मप्रतिफलनवान्। तत्र हेतुः अनुपूर्ण इति, "स एष इह प्रविष्ट आ नखाग्रेभ्यः" इतिश्रुतेः प्राणस्य पूर्णतामनुपूर्णः "तस्य पुरुषविधतां अन्वयं पुरुषविधः" इतिश्रुतेः। तथाविधस्सन् सकलक्रियासु हिताहितप्राप्तिपरिहारार्थासु प्रवर्तते। अचेतनं चेतनाधिष्ठितं कार्यं करोतीति न्यायात्। यद्भागे प्राणसंबन्धो नास्ति तत्र निर्व्यापारत्वं लोकसिद्धमिति प्राणसंबन्धादेव शरीरे व्यापारः, मृते तदभावादेव आत्मसंबन्धद्वाराभावात् अचेतनत्वं। अत्र समष्टिव्यष्टिकार्यत्वविशेषसत्वेपि रजोगुणकार्यत्वं समानमिति कर्मेन्द्रियाणां प्राणमयेन्तर्भाव इति मन्तव्यम् ॥१६७॥

इदानीं तस्य अनात्मत्वमाह। नैवेति।

नैवात्मायं प्राणमयो वायुविकारो
गन्तागन्ता वायुवदन्तर्बहिरेषः।
यस्मात्किंचित्क्वापि न वेत्तीष्टमनिष्टं
स्वं वान्यं वा किंचननित्यं परतन्त्रः॥१६८॥

वायुविकारः वायोर्विकारः वायुविकारः वायुकार्यः अयं प्राणमयः नैवात्मेति प्रतिज्ञा। तत्र हेतुः वायुवत् एषः प्राणमयः अन्तः बहिः गन्ता आगन्ता निश्वासे अन्तर्गन्ता उच्छ्वासे बहिरागन्ता। यथा बाह्यवायुः। सक्रियः परिच्छिन्नश्चायं सर्वव्यापी निष्क्रियः आत्मा न भवतीति भावः। सक्रियत्वात् परिच्छिन्नत्वात् बाह्यवायुवदिति सदृष्टान्तो हेतुः। एवमचेतनत्वं परतन्त्रत्वं च अनात्मत्वे हेतुमाह उत्तरार्धेन। यस्मादयं प्राणमयः इष्टमनिष्टं वा सुखं दुःखं वेत्यर्थः क्वापि कस्मिन्नपि काले देशे वा स्वं वा अन्यं वा स्वात्मानं परं वा न वेत्ति न जानाति नित्यं परतन्त्रः जीवनयोनियत्नजन्यसंचारवत्वात्, प्राणायामादिकाले तस्य निरुध्यमानत्वं प्रसिद्धं। अतः सक्रियत्व-परिच्छिन्नत्वाचेतनत्व-पराधीनत्वहेतुभिः एतद्विलक्षणः आत्मा न भवति। यद्ययमात्मा तर्हि सुषुप्तिदशायां जागरूकत्वात् चोरादिबाधां जानीयात्। आत्मनः सर्वप्रधानत्वात् स्वभृत्येषु चक्षुरादिषु स्वपत्सु स्वयं व्यापारवानिति विरुद्धं च अतः नैवात्मायं प्राणमयः॥१६८॥

इदानीं मनोमयं निरूपयति। ज्ञानेन्द्रियाणीति।

ज्ञानेन्द्रियाणि च मनश्च मनोमयः स्यात्
कोशो ममाहमिति वस्तुविकल्पहेतुः।
संज्ञादिभेदकलना-कलितो बलीयान्
तत्पूर्वकोशमनुपूर्य विजृंभते यः॥१६९॥

श्रवणदर्शनादि-कार्यकरणानि ज्ञानेन्द्रियाणि श्रोत्रचक्षुस्त्वग्जिह्वाघ्राणानि मनः कामसंकल्प-विचिकित्सा-श्रद्धादिवृत्तिकं मनश्च मनोमयः तथाशब्दितः कोशः स्यात्। सर्वेन्द्रियव्यापारस्यापि मनोधीनत्वात् इन्द्रियाभावेपि स्वप्ने सत्वाच्च मनसः तत्प्रधानतया मनोमय इति संज्ञा न तु श्रोत्रमय इति संज्ञा इति भावः। अत्रापि प्रत्येकाकाशादिपंचभूत-सत्व-

कार्यत्वात् ज्ञानेन्द्रियाणां भूतपंचकसत्व-समष्टिकार्यत्वाच्च मनसः एकस्मिन्कोशे घटनम् तेषामिति बोध्यम् । अहं शृणोमि अहं पश्यामि अहं स्पृशामि अहं रसये अहं जिघ्रामि अहं कामये संकल्पये इत्यादिना सर्वत्र आत्मबुद्धेः सत्वात् "तस्माद्वा एतस्मात्प्राणमयात् अन्योन्तर आत्मा मनोमयः" इतिश्रुत्या अयमपि स्वोपलब्ध्या आत्मयाथात्म्योपलब्धिं प्रतिबध्नातीति कोश इत्युच्यते। तस्य कार्यमाह ममाहमिति वस्तुविकल्पहेतुः, देहेन्द्रियादौ गृहक्षेत्रादौ अहंतां ममतां च मन एव संकल्पविकल्पात्मकत्वात् जनयतीति वस्तुषु देहगेहादिषु अहंममेत्यादयः ये विकल्पाः तेषां हेतुरित्यर्थः। तस्य स्वरूपमाह संज्ञादिभेद-कलना-कलित इति। संज्ञा नाम, आदिपदेन रूपं भिद्यत इति भेदः संज्ञादिरूपः यो भेदः अस्य वस्तुनः घटः कलशः कुम्भ इत्यादिसंज्ञा, पृथुबुध्नोदराद्याकारः रूपं नीलपीतादिकं च इति रीत्या सर्वपदार्थेष्वपि भिद्यमान-नामरूपादिविषयककलनया कलितः विशिष्ट इत्यर्थः। सर्वा अपि वृत्तयः शब्दविषयिण्यः अर्थविषयिण्यश्च मन, आश्रित्य वर्तन्ते। अतः शब्दार्थव्यतिरिक्त-प्रपंचस्य अभावात् सर्वोपि प्रपंचः मनसि स्वविषयकवृत्तिमति वर्तत इति बलीयान्, बन्धस्य मोक्षस्य च एतदधीनत्वात् अन्नमये प्राणमये वा ज्ञानशक्त्यभावात् ततो बलिष्ठत्वं अस्य। एतत्संबंधाभावे तत्रात्मसंबंधाभावाच्च। तदाह तत्पूर्वकोशमनुपूर्य इति। तस्य पूर्वकोशः तत्पूर्वकोशः प्राणमयः तं अनुपूर्य विज्ञानमयकोशेन स्वयं पूरितः तदनु प्राणमयं व्याप्य यो विजृम्भते निरर्गलं स्वकार्यं करोति स मनोमय इत्यन्वयः। तत्पर्यायेपि श्रुतिः "स वा एष पुरुषविध एव तस्य पुरुषविधतां अन्वयं पुरुषविधः" इति ज्ञेया॥१६९॥

तस्य बन्धकत्वं विशदयति। पंचेन्द्रियैरित्यादिना चतुर्भिः।

पंचेन्द्रियैः पंचभिरेव होतृभिः
प्रचीयमानो विषयाज्यधारया।
जाज्वल्यमानो बहुवासनेन्धनैः
मनोमयोग्निः दहति प्रपंचम्॥१७०॥

सुखप्रतिपत्तये मनोमयमग्नित्वेन श्रोत्रादीन्द्रियाणि होतृत्वेन पुनः पुनः संपततः विषयानाज्यधारात्वेन विषयवासनाः इन्धनत्वेन रूपयति। पंच

च तानि इन्द्रियाणि च पंचेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि.तैरेव पंचभिः होतृभिः हविरग्निसंयोगानुकूल-व्यापारवद्भिः प्रक्षेप्तृभिः। विषयाज्यधारया विषयाः शब्दस्पर्श-रूपरसगंधाः त एव आज्यं तस्य धारा तया प्रचीयमानः संवर्ध्यमानः नैरंतर्येण तत्तदिन्द्रियैः तत्तद्विषयाणां मनसि निपात्यमानत्वात्, इन्धनेषु सत्सु आज्यधारा चेत् ज्वलनमधिकं अत आह बहुवासनेन्धनैरिति वह्व्यः याः वासनाः"दृढभावनयात्यक्तपूर्वापरविचारणं। यदादानं पदार्थस्य वासना सा प्रकीर्तिता" इति बन्धकत्वेपि विषयाणां सुखकरत्वभ्रान्त्या तेषुउपादेयत्वभावनाः ता एव इन्धनानि शुष्ककाष्ठानि. इन्धनाभावे केवलाज्यधारायाः बहुकालज्वलनहेतुत्वाभावात् वासनाभावे विषयाणां बन्धकत्वाभावाच्च। तैः बहुवासनेन्धनैः जाज्वल्यमानः पौनःपुन्येन निरंतरं ज्वलन् मनोमयः मनोरूपः अग्निः प्रपंचं दहति भस्मीकरोति सर्वान्पुरुषान् पुरुषार्थायोग्यान् करोतीति यावत् ॥१७०॥

अन्वयव्यतिरेकाभ्यां तस्य बन्धकत्वमाह। न ह्यस्तीति।

नह्यस्त्यविद्या मनसोतिरिक्ता
मनो ह्यविद्या भवबन्धहेतुः।
तस्मिन्विनष्टे सकलं विनष्टं
विजृम्भितेस्मिन् सकलं विजृम्भते ॥१७१॥

सुषुप्तौ कारणाविद्यासद्भावेपि बन्धस्याभावात् तत्कार्यमनस एव बन्धकत्वं तदा तस्य लीनत्वात् बन्धोभाव इत्यभिप्रेत्य। मनसोतिरिक्ता अविद्या नास्ति इत्युक्तम्। हि निश्चितं। हि यतः भवबन्धहेतुः अविद्या तत्कार्यत्वात् मन एव। मनस्सत्वे देहादावभिमान-रूपबन्धात् तदभावे तदभावात् मनो-भवबन्धयोः अन्वयव्यतिरेकौ। तदेवोपपादयति तस्मिन्विनष्टे मनसि विशेषेण निर्वासनं नष्टे सकलं विनष्टं। स्पष्टं हि सुषुप्तौ जगदेव नास्तीति। अस्मिन्विजृम्भिते वर्धमाने सकलं विजृम्भते सर्वमपि वृद्धिमाप्नोतीत्यर्थः ॥१७१॥

तदेव विस्तरेणोपपादयति। स्वप्न इत्यादिना।

स्वप्नेर्थशून्ये सृजतिस्वशक्त्या भोक्त्रादि विश्वं मन एवसर्वम्।
तथैव जाग्रत्यपि नो विशेषः तत्सर्वमेतन्मनसो विजृम्भणम् ॥१७२॥

प्रथमंनान्वयमाह, अर्थशून्ये शरीरान्तर्वर्तिनाडीषु मनस्संचार-दशायां स्वप्नावस्थेति श्रुत्या बोधितत्वात् केशतोपि सूक्ष्मासु तासु नाडीषु गिरिनदी-समुद्रादीनां तदा प्रतीयमानानां असंभावितत्या चक्षुरादीनां तदा उपरतव्यापारत्वात् तद्द्वारा मनसः बहिर्निर्गमनाभावात् शरीराद्बहिर्वर्त-मानानां प्रतीत्यभावाच्च केवलं मनोवर्तिवासनावशात् तदा अर्थाः बाह्या इव प्रतीयन्ते नतु वस्तुसंतः इति अर्थशून्ये इत्युक्तं। तथाविधे स्वप्ने स्वशक्त्या वासनाभिः केवलं स्वस्मिन् आत्मप्रतिफलनसामर्थ्येन च सर्वं भोक्त्रादि विश्वं जगत् मन एव सृजति निर्मिमीते। यद्यपि जीवः भोक्ता वर्तत इति भोक्त्रादीति कथमिति शंका भवितुमर्हति। तथापि भोग्याभावे भोक्तृत्वाभावात् भोग्यसृष्टिहेतोः मनस एव निरूपकदानेन भोक्तृस्रष्टृत्वं मन्तव्यम्। तथैव स्वप्नवदेव जाग्रत्यपि जाग्रदवस्थायामपि मन एव सर्वं सृजति नो विशेषः। तत् तस्मात् सर्वमेतत् जगत् मनसो विजृम्भणं विलासः॥१७२॥

व्यतिरेकेण इममर्थं द्रढयति। सुषुप्तीति।

सुषुप्तिकाले मनसि प्रलीने नैवास्ति किंचित् सकलप्रसिद्धेः।
अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुतोस्ति॥१७३॥

सुषुप्तिकाले सुषुप्त्यवस्थायां मनसि प्रलीने परिणामान् विहाय कारणात्मना अवतिष्ठमाने नैवास्ति किंचित् जगत्। सकलप्रसिद्धेः सर्वप्राण्यनुभवात् न किंचिदवेदिषमिति। अतः एतस्य बद्धस्य पुंसः संसारः मनःकल्पित एव। वस्तुतः परमार्थतः नास्ति मनस्सत्वे स्वप्नजाग्रतोः संसारोपलब्धेः मनसः असत्वे सुषुप्तावनुपलंभात्। मृदन्वयव्यतिरेकानु-विधायि-घट इव मृद्व्यतिरेकेण मनोव्यतिरेकेण संसारो नास्तीति तस्मिन्विनष्टे इति यदुक्तं पूर्वं तदुपपादितम्॥१७३॥

वायुदृष्टान्तेन एकस्यैव तस्य विरुद्धद्वयहेतुत्वमाह। वायुनेति।

वायुना नीयते मेघः पुनस्तेनैव लीयते।
मनसा कल्प्यते बन्धः मोक्षस्तेनैव कल्प्यते॥१७४॥

स्पष्टम्॥१७४॥

दार्ष्टान्तिके वन्धहेतुत्वं मोक्षहेतुत्वं च उपपादयति। देहेति।

देहादिसर्वविषये परिकल्प्य रागं
वध्नाति तेन पुरुषं पशुवद्गुणेन।
वैरस्यमत्र विषवत् सुविधाय पश्चा-
देनं विमोचयति तन्मन एव बन्धात्॥१७५॥

देहः आदिः यस्य सः, सर्वश्चासौ विषयश्च शब्दस्पर्शादिः पुत्रादिश्च देहादिश्चासौ सर्वविषयश्च। शब्दादौ रागस्यापि देहमूलकत्वात् देहादीति। तस्मिन् देहादिसर्वविषये। रागं परिकल्प्य दृढं जनयित्वा तेन रागेण गुणेन रज्वा पशुवत् पशुमिव पुरुषं वध्नाति स्वेप्सित-परमपद-प्राप्त्ययोग्यं करोति। पश्चादनन्तरं तत् यद्बंधं जनयामास तत् मन एव। अत्र देहादौ विषये वैरस्यं वैराग्यं अनासक्ति विषवत् विष इव अनर्थकरत्वज्ञापनेन सुविधाय सुष्ठूत्पाद्य एनं पुमांसं बन्धात् देहाद्यभिमान-लक्षणात् विमोचयति विशेषेण मोचयति। सदापि ब्रह्मणि संस्थया पुनर्यथा देहादिकं नाभिमन्यते तथा करोतीत्यर्थः॥१७५॥

बन्धमोक्षहेतुत्वं उपपादितं निगमयति। तस्मादिति।

तस्मान्मनः कारणमस्य जन्तोः
बन्धस्य मोक्षस्य च वा विधाने।
बन्धस्य हेतुः मलिनं रजोगुणैः
मोक्षस्य हेतुः विरजस्तमस्कम्॥१७६॥

तस्मात् पूर्वोक्तहेतोः अस्य जन्तोः प्राणिनः बन्धस्य मोक्षस्य च वा विधाने उत्पादने। मनःकारणं "मन एव मनुष्याणां" इतिश्रुतेः। एकस्य विरुद्धद्वयहेतुत्वकथंतायां आह रजोगुणैः, प्रवृत्तयः बहुविधाः रजः-कार्या इति बहुवचनं। नानाविधतया बहिर्मुखत्वापादकैः कामक्रोध-लोभादि-रजोधर्मैरिति वा अर्थः। मलिनं कलुषितं मनः बन्धस्य हेतुः। शुद्धं निर्मलं, तत्र हेतुमाह विरजस्तमस्कमिति। रजसा तमसा च नितरांरहितं मनः मोक्षस्य हेतुरित्यर्थः। अतो मनसः एकत्वेपि गुणभेदान् विरुद्धद्वय-हेतुत्वं कालभेदेन अविरुद्धमिति भावः॥१७६॥

मोक्षहेतुतया मनश्शुद्धिः कथं संपादनीयेति शंकायामुत्तरमाह। विवेकेति।

**विवेक-वैराग्य-गुणातिरेकाच्छुद्धत्वमासाद्य मनो विमुक्त्यै।**
**भवत्यतो बुद्धिमतो मुमुक्षोस्ताभ्यां दृढाभ्यां भवितव्यमग्रे ॥१७७॥**

विवेकश्च वैराग्यं च विवेकवैराग्ये ते एव गुणौ सत्फलप्रदधर्मौ तयोरतिरेकः अतिशयः विवेकदार्ढ्यं वैराग्ये तीव्रतरत्वं च। तस्मात् विवेकवैराग्यगुणातिरेकात्। ब्रह्म सत्यं जगन्मिथ्येत्येवं निश्चये मिथ्या-वस्तुनि कामानुदयात् आब्रह्मलोकं वैराग्यं प्रकृष्यते। कामानुपहतेरेव शुद्धिशब्दार्थत्वात्। तदुभयगुणयुक्तं मनः शुद्धत्वं निर्मलत्वं आसाद्य प्राप्य विमुक्त्यै बहिर्मुखत्वशून्यतया ऐदंपर्येण ब्रह्मसंस्थं आत्यंतिकबन्ध-निवृत्तये हेतुर्भवति। अतो विवेकवैराग्यातिरेक-विशिष्टमनसो विमुक्ति-हेतुत्वात्। बुद्धिमतः बुद्धिरस्यास्तीति बुद्धिमान् तस्य उपायकुशलस्येत्यर्थः मुमुक्षोः मोक्षरूपफलेच्छावतः अग्रे आदौ ताभ्यां विवेकवैराग्याभ्यां दृढाभ्यां आशिथिलाभ्यां प्रकृष्यमाणाभ्यां च भवितव्यम् उपायेच्छां प्रति फलेच्छायाः कारणत्वात्। मोक्षेच्छावान् पुमान् विवेकवैराग्ये आदौ प्रयत्नेन संपादयति चेत् फलमवर्जनीयमिति कथितं भवति ॥१७७॥

मोक्षार्थ मनो निर्विषयं कर्तुं विषयेभ्यः निवर्तयितुं विवेकवैराग्ये हेतू उक्त्वा रत्ने यदि शिलाबुद्धिः जायते वा भयं ततः। समीचीनत्वधी-र्नैति नोपादेयत्वधीरपि। इति वस्तुविचारवत् भयस्यापि यतो भयं ततो निवृत्तिहेतुत्वात् तेषु भयमाह। मन इति। दयया भयोत्पादनद्वारा तेभ्यो निवर्तयति।

**मनो नाम महाव्यघ्रः विषयारण्यभूमिषु।**
**चरत्यत्र न गच्छन्तु साधवो ये मुमुक्षवः ॥१७८॥**

विषयारण्यभूमिषु विषया एव अरण्यभूमयः अनेकानर्थसंकुलत्वात् "विषयांस्तेषु गोचरान्" इतिश्रुतेश्च। तासु मनो नाम महाव्यघ्रः मनस्संज्ञक-चण्डपुण्डरीकः चरति संचरति। परांचि खानीति श्रुतेः विषयप्रवणता मनसः स्वभावः निम्नभूमिगमनमिव जलस्य। ततः "बन्धाय विषयासक्त" मितिश्रुतेः जीवस्य महाननर्थस्संभवति।

तदुक्तं गीतासु " संगात्संजायते कामः कामात्क्रोधोभिजायते। क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः। स्मृतिभ्रंशाद्बुद्धिनाशः बुद्धिनाशात्-प्रणश्यति " इति। अतः ये साधवः सत्पुरुषाः मुमुक्षवः मोक्षकांक्षिणः ते अत्र विषयारण्यभूमिषु न गच्छन्तु मागमन्। विषयेभ्यः मनो निवर्तयन्तु मोक्षाय इत्यभिप्रायः। कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्व-मिच्छन् इतिश्रुतेरिति भावः ॥१७८॥

नह्यस्त्यविद्या मनसोतिरिक्तेत्युक्तं उपपादयन् तस्य बन्धकत्वं विशदयति मनः प्रसूत इत्यादिना चतुर्भिः,

मनः प्रसूते विषयानशेषान् स्थूलात्मना सूक्ष्मतया च भोक्तुः।
शरीरवर्णाश्रम-जातिभेदान् गुणक्रियाहेतु-फलानि नित्यम् ॥१७९॥

भोक्तुः जीवस्य जाग्रदवस्थायां स्थूलात्मना तत्तद्देवतानुगृहीत-तत्तदिन्द्रियजन्यानुभव-विषयतया स्थूलात्मना, स्वप्नावस्थायां इन्द्रियाणा-मुपरतेः सूक्ष्मतया केवलसाक्षिवेद्यतया च अशेषान् सर्वान् विषयान् भोग्य-पदार्थान् मनः प्रसूते उत्पादयति। ते विषयाः के इत्याकांक्षायामाह शरीरवर्णाश्रमजातिभेदान् शरीरं च वर्णाश्च आश्रमाश्च जातयश्च शरीरवर्णाश्रमजातयः तासां भेदाः प्रकाराः तान् देवतिर्यङ्मनुष्यादि-शरीराणि ब्राह्मण-क्षत्रिय-वैश्य-शूद्ररूपवर्णान् ब्रह्मचारि-गृहस्थ-वानप्रस्थ-संन्यास्याश्रमान् देवमनुष्यादि-शरीरं च देवत्वादिजातीश्च प्रसूते। सुषुप्त्यादौ मनसोभावे एतेषां भेदानां अभावात् सर्वमिदं मनसा कल्पित-मेवेति भावः। एवं गुणक्रियाहेतुफलानि गुणाः शब्दादयः क्रियाः उत्क्षेपणा-दयः हेतवः तत्तत्कार्यनिमित्तोपादानानि। फलानि घटादीनि तत्तत्कार्याणि एतत्सर्वं मन एव नित्यं सदा प्रसूते। नान्यनिमित्तं इदं मनसोभावे कस्याप्य-भावात्। तदेव सर्वस्य मूलकारणमिति भावः। शरीरेत्यत्र भिद्यन्ते इति भेदाः इतिव्युत्पत्त्या कर्मधारयो वा ॥१७९॥

असंगचिद्रूप-ममुं विमोह्य देहेन्द्रिय-प्राणगुणैर्निबध्य।
अहंममेति भ्रमयत्यजस्रं मनस्स्वकृत्येषु फलोपभुक्तिषु ॥१८०॥

मनः कर्तृ असंगचिद्रूपं असंगा सर्वसंगविधुरा या चित् अखण्डं ज्ञानं तदेव रुपं यस्य सः असंगचिद्रूपः तं। अमुं आत्मानं। देहेन्द्रिय-

प्राणगुणैः विमोह्य स्ववास्तवरूपं ज्ञातुसमर्थं कृत्वा तेष्वेव देहेन्द्रिय-प्राणगुणेषुदेहेन्द्रियप्राणेषु अहमिति तद्गुणेषु तद्धर्मेषु ममेति निवध्य। अजस्रं सततं स्वकृत्येषु लौकिक-वैदिक-कर्मसु। फलोपभुक्तिषु तत्तत्कर्म-जन्यफलभोगेषु भ्रमयति ऊर्ध्वमधश्च नयति। "कुर्वते कर्म भोगाय कर्म कर्तुं च भुंजते" इत्युक्तेः। उक्तं हि श्रुत्या "आत्मानं चेद्विजानीयात् अयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत्" इति। अतः विज्ञातस्वकासंग-चिदानन्दरूपः पुरुषः नैव किंचित्कामयते न वा कर्माणि करोति। ततः कर्तृत्वं वा भोक्तृत्वं वा देहेन्द्रियाद्यभिमान-निबन्धनम्। स चाभिमानः मनोमूलः सुषुप्तावदर्शनात् तदा मनसो लीनत्वात्। अतः स्वरूपसत्याः अविद्यायाः मनो विना वन्धहेतुत्वा-भावात् सर्ववन्धहेतुत्वं मनस एवेति भावः ॥१८०॥

इदानीं तस्य वन्धद्वारा दुःखहेतुत्वमाह। अध्यासेति।

अध्यासयोगात्पुरुषस्य संसृतिः
अध्यासबन्धस्त्वमुनैव कल्पितः।
रजस्तमोदोषवतोऽविवेकिनो
जन्मादि-दुःखस्य निदानमेतत् ॥१८१॥

रजस्तमोदोषवतः रजश्च तमश्च रजस्तमसी ते एव दोषौ तावस्य स्त इति तद्वान् तस्य रजस्तमोदोषवतः आवरणविक्षेपहेतुभूत-दोषद्वय-विशिष्टस्य अत एव अविवेकिनः आत्मानात्मभेदज्ञानरहितस्य पुरुषस्य अध्यासयोगात् अनात्मस्वात्मबुद्धियोगात्, संसृतिः जन्ममरण-प्रबन्धा-विच्छेदः। संसृतिहेत्वध्यासः मनोमूल इत्याह अध्यासवन्ध इति। अध्यास-रूपो यो वन्धः सतु सोपि, शरीरेन्द्रियादयः मनसा प्रसूयन्ते इति "मनः प्रसूते" इत्यत्रोक्तं। इदानीं तत्र अध्यासोपि अमुनैव कल्पितः जनितः इत्यपिशब्दार्थः। ततः जन्ममरण-प्रबन्धाविच्छेद-लक्षण-संसृतिहेतुभूता-ध्यास-हेतुत्वेन। एतत् मन एव जन्मादिदुःखस्य जन्ममरण-जरा-रोगादि-जन्य-सकल-विधदुःखस्य निदानं • आदिकारणम् ॥१८१॥

अतः प्राहुर्मनोऽविद्यां पण्डितास्तत्वदर्शिनः।
येनैवभ्राम्यते विश्वं वायुनेवाभ्र-मण्डलम् ॥१८२॥

तत्वदर्शिनः तत्वं द्रष्टुं शीलं येषां ते। पण्डिताः श्रुतवेदान्ताः पुरुषधौरेयाः। अतः संसृतिमूल-कारणत्वान्मनसः मन एव अविद्यां प्राहुः अविद्याकार्यत्वात् केवलाविद्यायाः संसृतिहेतुत्वाभावाच्च। मन एवाविद्येति कथनं युक्तमिति बोधयितुं प्रेत्युपसर्गः। तत्र हेतुः येनैव मनसैव विश्वं सर्वंजगत् सर्वे जीवा इति यावत्। भ्राम्यते अन्यथाग्रहणेन ऊर्ध्वमधश्च नीयते। तत्र दृष्टान्तः वायुनेवाभ्रमण्डलं, मेघसमुदायः वायुना यथा सर्वासु दिक्षु भ्राम्यते तथा॥१८२॥

इदानीं मुमुक्षुजनकर्तव्यमाह। तदिति।

तन्मनश्शोधनं कार्यं प्रयत्नेन मुमुक्षुणा।
विशुद्धे सति चैतस्मिन् मुक्तिः करफलायते॥१८३॥

तत् पूर्वकथितकारणात् रजस्तमोदोषवतः पुंसः अध्यासद्वारा संसृतिहेतुरितिरूपात्। मुमुक्षुणा मोक्षेच्छावता पुरुषेण प्रयत्नेन प्रकृष्टयत्नेन मनश्शोधनं मनोगत-रजस्तमोरूप-दोषापनयनं कार्यं विधेयं। चकारो हेत्वर्थः यत इति। एतस्मिन् मनसि, विशुद्धे रजस्तमोहीने केवलसत्वप्रधाने, मुक्तिः करफलायते करगतफलवत् सुष्ठु वेद्या भवतीत्यर्थः ॥१८३॥

मनश्शुद्धिहेतु-प्रयत्नप्रकारमाह। मोक्षेति।

मोक्षैकसक्त्या विषयेषु रागं निर्मूल्य संन्यस्य च सर्वकर्म।
सच्छ्रद्धया यश्श्रवणादिनिष्ठो रजस्स्वभावं स धुनोति बुद्धेः॥१८४॥

मोक्षे एकस्मिन् सक्तिः आसक्तिः तीव्रमुमुक्षा तया, विषयेषु देहादिषु रागं सुखजनकत्वभ्रान्त्या आसक्तिं निर्मूल्य अहंतानिरसनेन परित्यज्य, सर्वकर्म निष्कामकर्माणि नित्यनैमित्तिकानि च, सन्यस्य स्वरूपतोपि परित्यज्य। सच्छ्रद्धया सति कालत्रयाबाध्ये ब्रह्मणि या श्रद्धा, सती अचंचला वा याश्रद्धा गुरुवेदान्तवाक्यविश्वासः तया यः पुमान् श्रवणादिनिष्ठः श्रवणं आदि ययोः मनननिदिध्यासनयोः तेषु श्रवणादिषु निष्ठा नितरां स्थितिः यस्य सः श्रवणादिनिष्ठः सः पुरुषः बुद्धेः रजस्स्वभावं रजसः स्वभावः विक्षेपः तं। धुनोति चालयति नितरां नाशयतीति यावत्।

देहादिषु रागसत्वे कर्म करोति कर्मसत्वे विक्षेपः। रागनिर्मूलनेन सर्वं कर्मत्यक्त्वा श्रवणादिभिः अन्तर्निष्ठस्य श्रद्धालोः बुद्धिविक्षेपस्य नैवावसरः। अतो विरक्तेन सन्यासिना श्रवणादिकं श्रद्धया बुद्धिदोषनिवृत्तये कार्य-मित्युक्तं भवति॥१८४॥

इदानीं मनोमयस्य अनात्मत्वं निगमयति। मनोमय इति।

मनोमयो नापि भवेत्परात्मा
ह्याद्यन्तवत्वात् परिणामिभावात्।
दुःखात्मकत्वात् विषयत्वहेतोः
द्रष्टा हि दृश्यात्मतया न दृष्टः॥१८५॥

मनोमयोपि परात्मा परमात्मा न भवदेत्यन्वयः। तत्र हेतवः संगृह्यन्ते आद्यन्तवत्वात् सुषुप्तौ लयात् जाग्रदादौ उत्पत्तेश्च आद्यन्तशून्यः आत्मा न भवति एवं परिणामिभावात् परिणामिनः भावः परिणामिभावः विकारवत्वं कामसंकल्पाद्यात्मना परिणममानत्वात् अविकारी आत्मा न भवति। दुःखं आत्मा स्वरूपं यस्य दुःखात्मकं तस्य भावः तत्वं। अत एव निरुध्यते शोध्यते च। अध्यासद्वारा सर्वदुःखहेतुत्वं उपपादितं। अतः आनन्द-रूपः आत्मा न भवति। विषयत्वमेव हेतुः तस्मात् "अन्यत्र मना अभूवं नाद्राक्षम् अन्यत्रमना अभूवं नाश्रौषं" इति श्रुतेः। साक्षिणा विषयीक्रियत इति विषयत्वरूपहेतोश्च सर्वसाक्षी आत्मा न भवति। तदिदमाह द्रष्टाहीत्यादिना, हि यतः द्रष्टा पश्यतीति द्रष्टा ज्ञाता यः सः दृश्यात्मतया विषयतया न दृष्टः न लोकसिद्धः इत्यर्थः। अतः सर्वदा मनस्थितिकाले तदभावे च साक्षिणा सद्भावाभावयोः ज्ञायमानतया कर्तृकर्मविरोधात् स्वद्रष्टृत्वस्य स्वस्मिन् विरुद्धत्वाच्च दृश्यं मनः न द्रष्टृस्वरूप आत्मा इत्यनात्मत्वं तस्य सिद्धम्॥१८५॥

इदानीं विज्ञानमयकोशं निरूपयति। बुद्धिरिति।

बुद्धिर्बुद्धीन्द्रियैः सार्धं सवृत्तिः कर्मलक्षणः।
विज्ञानमयकोशस्स्यात् पुंसः संसारकारणम्॥१८६॥

बुद्धीन्द्रियैः पंचभिः ज्ञानेन्द्रियैः श्रोत्रादिभिः सार्ध सह। सवृत्तिः वृत्या निश्चयात्मिकया सह वर्तत इति सवृत्तिः बुद्धिः कर्तृलक्षणः कर्तृ लक्षणं ज्ञानेच्छाकृतिमत्वं यस्य सः कर्तृलक्षणः। विज्ञानमयकोशः स्यात् तत्संज्ञकः कोशो भवति। तस्य कार्यमाह पुंस इत्यादिना, पुंसः आत्मनः संसारकारणं "स समानस्सन्नुभौ लोकावनुसंचरति, सधीः स्वप्नो भूत्वा ध्यायतीव लेलायतीव" इत्यादिश्रुतिभ्यः एकमेवान्तःकरणं संशयात्मकवृत्तिमत् मन इति, निश्चयात्मकवृत्तिमत् बुद्धिरिति कथ्यते। तत्र मनसः करणत्वं बुद्धेः कर्तृत्वं। निश्चित्य हि करोति। अतः पूर्वापरीभाववत्वेन मनोबुध्योः वहिरंतर्भाव इति मनोमयांनन्तरं बुध्यात्मक-विज्ञानमयस्य पार्थक्येन कथनं। नो चेत् पंचानां ज्ञानेन्द्रियाणां उभयत्राविशिष्टत्वात् भेदानापत्ते-रिति बोध्यं। "तस्माद्वा एतस्मान्मनोमयात्। अन्योन्तर आत्मा विज्ञान-मयः" इति श्रुतेश्च। तत्राप्ययमेवाभिप्रायः ॥१८६॥

अनुव्रजच्चित्प्रतिबिंबशक्तिः
विज्ञानसंज्ञः प्रकृतेर्विकारः।
ज्ञानक्रियावान् अहमित्यजस्रं
देहेन्द्रियादिष्वभिमन्यते भृशम् ॥१८७॥

भूतपंचकसत्व-समष्टिकार्यत्वाद् बुद्धेः स्वच्छतया तत्र चिदवश्यं प्रतिबिंबत इति अनुव्रजन् यः चितेः चिद्रूपस्य परमात्मनः प्रतिबिंबः जीवः तस्य शक्तिर्भासकत्वरूपा यस्य भासकप्रतिबिंबस्यापि भासकत्वात्, प्रसिद्धं हि लोके दर्पणादिर्बिंबितसूर्यप्रतिबिंबस्यापि सूर्यप्रवेशायोग्यान्ध-कारावृत-भूविवरादिगत-वस्तुभासकत्वं इति। अनुव्रजच्चित्प्रतिबिंब-शक्तिः चिदनुप्रवेशाच्चिच्छक्तिविशिष्टः अत एव विज्ञानसंज्ञः विज्ञानमिति संज्ञा यस्य सः "विज्ञानं यज्ञं तनुते" इतिश्रुतेः। प्रकृतेः मूलप्रकृतेः अविद्यायाः विकारः सूक्ष्मभूतपंचक-सत्वसमष्टिकार्यत्वात् सूक्ष्मभूतपंचकस्य अविद्या-कार्यतया परंपरया अविद्याकार्यत्वं अस्य कोशस्य। ज्ञानक्रियावान् ज्ञानं च वृत्यात्मकं क्रिया च विषयविचार-ध्यान-लोकान्तरगमनादिरूपा ज्ञान-क्रिये ते अस्य स्त इति ज्ञानक्रियावान् देहेन्द्रियादिषु उक्तं हि पूर्वं "अन्तःकरणमेतेषु चक्षुरादिषु वर्ष्मणि। अहमित्यभिमानेन तिष्ठत्याभास तेजसा" इति। अतः जीवस्य योभिमानः देहादौ तस्य बुद्धिं विना

असंभवात् जीवत्वस्यापि बुध्युपाधिनिवन्धनत्वात् अयं कोश एव आध्यासिकतादात्म्यापन्नतया जीवाभिन्नत्वेन विवक्षित इति अजस्रं सर्वदा जाग्रत्स्वप्नयोः भृशं अत्यन्तं अहमित्यभिमन्यते। अहं मनुष्यः स्थूल गच्छामि तिष्ठामि लंघयामि अहं पश्यामि अहं शृणोमि अहमुच्छ्वसिमि निश्वसिमीत्यादिप्रकारेण तादात्म्याभिमानवान् भवतीति ज्ञानवत्वमुपपादितं ॥१८७॥

क्रियावत्वमुपपादयति। अनादीत्यादिना।

अनादिकालोयमहंस्वभावो जीवस्समस्त-व्यवहारवोढा।
करोतिकर्माण्यनु-पूर्ववासनः पुण्यान्यपुण्यानि च तत्फलानि ॥१८८॥

भुङ्क्ते विचित्रास्वपि योनिषु व्रजन् आयाति निर्यात्यध ऊर्ध्वमेषः।
अस्यैव विज्ञानमयस्य जाग्रत्स्वप्नाद्यवस्थाः सुखदुःखभोगः ॥१८९॥

यद्यपि प्रकृतेर्विकार इत्युक्तत्वात् सादित्वं वक्तव्यम्। अथापि महाप्रलयेपि कारणात्मना अव्यक्ततया वर्तमानत्वात् पूर्वकर्मवासनाश्रय बुद्धेः अत्यन्तनाशे पुनःसृष्टेरनुपपत्तेः सृष्टिकाल एव 'अनेन जीवेनात्मना' इति परदेवतया नामरूपव्याकरणार्थं ईक्षणश्रुतेश्च आविदेहकैवल्य आत्यंतिकनाशो नास्तीति पुंसः संसारकारणभूताया बुद्धेरपि अनादित्व अवश्यं वक्तव्यमिति तत्प्रयोज्य-देहेन्द्रियाद्यभिमानोपि स्वप्रागभावकालत्व व्यापक-स्वसजातीय-कत्वरूपानादित्ववान् भवति। अनादिः काल यस्य अनादिकालः इदमिदानीं आरब्धमिति वक्तुमशक्यत्वात्। अय देहेन्द्रियादिषु अहमितिस्वभावः अभिमानः वासना यस्य सः अहंस्वभाव जीवः समस्तव्यवहारबोढा "विज्ञानं यज्ञं तनुते। कर्माणि तनुतेपि च" इतिश्रुतेः लौकिक-वैदिकसर्वव्यवहारकर्ता। तदुपपादयति अनुपूर्ववासन अनुगताः पूर्ववासनाः यं सः अनुपूर्ववासनः "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इतिश्रुतेः "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इति च श्रुतेः। पुण्यानि शास्त्रविहितानि अपुण्यानि तन्निषिद्धानि विहित निषिद्धान्यानि उदासीनानि भोजनस्वापादीनि च करोति। भोक्तृत्व वक्ति। तत्फलानि तेषां कृतविहित-निषिद्धकर्मणां फलानि। विचित्रास् देवतिर्यङ्मनुष्यादिचतुरशीति-लक्षप्रभेदासु योनिषु व्रजन् भुंक्तेपि सुख

दुःखानुभववान्भवत्यपि। तदर्थं अधः नरकादौ आयाति आगच्छति, ऊर्ध्वे स्वर्गादौ निर्याति निर्गच्छति एष जीव इत्यर्थः। अहं जागर्मि अहं स्वपिमि अहमस्वाप्सं, अहं सुखी दुःखीत्यादिरीत्या आत्मनि प्रतीयमान-धर्माः सर्वेपि एतत्तादात्म्याभिमानादिति निधर्मकमात्मानं इतो विवेचयति। अस्यैव विज्ञानमयस्य जाग्रत्स्वप्नाद्यवस्थाः आदिपदेन सुषुप्तिसमाधि-परिग्रहः। सुखदुःखभोगः, अनुभवः भोगः ॥१८९॥

देहादिनिष्ठाश्रम-धर्मकर्म-गुणाभिमानः सततं ममेति।
विज्ञानकोशोयमतिप्रकाशः प्रकृष्टसान्निध्य-वशात्परात्मनः।
अतो भवत्येष उपाधिरस्य यदात्मधीः संसरति भ्रमेण ॥१९०॥

देहादीति। आदिपदेन चक्षुरादीन्द्रिय-प्राणपरिग्रहः। तन्निष्ठाः ये आश्रमाः ब्रह्मचर्यादयः, धर्माः मनुष्यत्व-ब्राह्मणत्वादयः, कर्माणि स्थितिगत्यादीनि लौकिकानि मन्त्रोच्चारणादीनि वैदिकानि गुणाः ह्रस्वत्वदीर्घत्वादयः सौगुण्यवैगुण्यादयो वा एतेषु सततं ममेत्यभिमानः आत्मप्रतिफलनानुविद्धा बुद्धिः इन्द्रियेषु प्राणेषु देहे च संबध्यमाना, तदीयधर्मानात्मन्यारोपयति। स्वतो जडाया अप्यस्याःचेतनवदेवस्थितौ निमित्तमाह, परात्मनः "चेतनश्चेतनानां" इति श्रुत्या केवलनिर्मलासंग-चिद्रूपस्य परमात्मनः प्रकृष्टसान्निध्यवशात् परमुखनिरपेक्षप्रतिफलन-महिम्ना अयं विज्ञानकोशः बुद्धिरूपकोशः अतिप्रकाशः। इतरेषु इन्द्रियेषु साक्षाच्चैतन्य-संबन्धाभावादित्यभिप्रायः। अतः प्रकृष्टसान्निध्यस्य सत्वात् अस्य आत्मनः एषः कोशः उपाधिः जीवइति भेदहेतुः भवति। कर्तृत्व-भोक्तृत्व-निवासभूत-जीवत्वधर्माश्रय-मूलहेतुः। यदात्मधीः यस्मिन्नुपाधौ आत्मधीः अहमिति मतिमान् भ्रमेण भ्रान्त्या संसरति कर्तृत्वादिदुःखमनुभवति ॥१९०॥

तदेवोपपादयति। योयमित्यादिना त्रिभिः।

योयं विज्ञानमयः प्राणेषु हृदिस्फुरत्स्वयंज्योतिः।
कूटस्थस्सन्नात्मा कर्ता भोक्ता भवत्युपाधिस्थः ॥१९१॥

पाषाणे वृक्ष इतिवत् सामीप्यसप्तमी। प्राणेषु चक्षुरादिसमीपे। एतेन अहमिति प्रतीतिविषयत्वस्य बहुषु सत्वात् "कतम आत्मा" इति-

जनकप्रश्नोत्तरवाक्ये "प्राणेषु" इति पदेन प्राणशब्दबोधितेंद्रिय-मुख्य-प्राणत्व-मात्मनो नास्तीति कथितं भवति। प्राणसामीप्यं बुद्धेरप्यस्ति अतः व्यावर्तयति हृदिस्फुरत्स्वयंज्योतिरिति हृदयपुण्डरीकावच्छिन्नबुद्धौ प्रकाश-मानं पराप्रकाश्यं यज्ज्योतिः चैतन्यं सर्वादिभासकं तद्रूपः योयं विज्ञानमयः आमोक्षं बुद्ध्या न विना भूयतेऽनेनेति तत्प्रचुरत्वात्तन्मयत्वं। स्वार्थे मयड्वा विज्ञानस्वरूप इत्यर्थः। ईदृगात्मा कूटस्थः कूटवत्तिष्ठतीति कूटस्थः अयोघनवत् निर्विकारः सन्नपीति अपिशब्दो योजनीयः। उपाधिस्थः उपाधौ ज्ञानक्रियावत्यां बुद्धौ तादात्म्येन आविद्यकेन वर्तमानः कर्ता भोक्ता भवति यथा स्फटिके लौहित्यं भ्रमात् तथा॥१९१॥

तदेवस्फुटयति। स्वयमिति।

स्वयं परिच्छेदमुपेत्य बुद्धेः<br>
तादात्म्यदोषेण परं मृषात्मनः।<br>
सर्वात्मकस्सन्नपि वीक्षते स्वयं<br>
स्वतः पृथक्त्वेन मृदोघटानिव ॥१९२॥

मृषात्मनः मिथ्यास्वरूपवत्याः बुद्धेः, तादात्म्यदोषेण परं केवलं न तु स्वतः इत्यर्थः स्वयं परिच्छेदं अल्पत्वं उपेत्य प्राप्य स्वयं सर्वात्मक-स्सन्नपि "इदं सर्वं यदयमात्मा" "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतेः। अकुशलमतिः मृदः पंचमी घटानिव यथा मृदुपादानकतया तदव्यतिरिक्तान् घटान् पृथक्पश्यति भिन्नत्वेन् वीक्षते तथा सर्वोपादानतया स्वव्यतिरेकेण कस्याप्यभावेपि स्वतः पृथक्त्वेन भेदेन वीक्षते अहं सः इदं त्वं इत्यादिभेद-बुद्धिमान्भवतीत्यर्थः ॥१९२॥

इममर्थं निर्विकारस्य सविकारत्वं "कूटस्थस्सन् आत्मा" इत्यत्रोक्तं च सदृष्टान्तं कथयति। उपाधीति।

उपाधिसंबन्धवशात्परात्माप्यु-<br>
पाधिधर्माननुभाति तद्गुणः।<br>
अयोविकारानविकारिवह्निवत्<br>
सदैकरूपोपि परःस्वभावात् ॥१९३॥

अयोविकारान् अयसः विकाराः अयोविकाराः दीर्घत्व-वर्तुलत्वादयः तान् अविकारिवह्निवत् वस्तुतः तादृशधर्मशून्य-वह्निरिव अयसि दीर्घे दीर्घो वह्निरिति वर्तुले वर्तुल इति भ्राम्यन्ति लोके। तथा परात्मापि परमात्मापि उपाधिसंवन्धवशात् स्वप्रकाश्येनापि उपाधिना अविद्यया कल्पितः यः तादात्म्यरूपसंवन्धः तद्वशात् उपाधिधर्मान् कर्तृत्वभोक्तृत्वादीन् "ध्यायतीव लेलायतीव" इतिश्रुतेः, बुद्धौ ध्यायन्त्यां ध्यायतीव, लेलायन्त्यां चलन्त्यां चलतीव इत्यर्थः श्रुतेः। अनुसृत्य तद्गुणः उपाधिधर्मवानिव भाति अहं करोमि सुखी दुःखीत्यादिप्रकारेण। वस्तुतः सदा स्वभावात् स्वकीय-सच्चिदानन्दस्वरूपतः परः नित्यशुद्ध-बुद्धमुक्तस्वभावः। अतः एकरूपोपि विकारशून्योपीति पूर्व योजनीयं। प्रकाशके वह्नौ दृष्टान्ते परात्मनि च दार्ष्टान्तिके सर्वप्रकाशके विकारशून्यत्वेन एकरूपत्वं समानं ॥१९३॥

शिष्य उवाच ।

भ्रमेणाप्यन्यथावास्तु जीवभावः परात्मनः ।
तदुपाधेरनादित्वात् नानादेर्नाश इष्यते ॥१९४॥

अतोस्य जीवभावोपि नित्यो भवति संसृतिः ।
न निवर्तेत तन्मोक्षः कथं मे श्रीगुरो वद ॥१९५॥

परात्मनः असंसारितया सर्वोत्कृष्टस्य परमात्मनः जीवभावः जीवत्वं भ्रमेण वा भ्रान्त्या वा अन्यथापि वा वस्तुतो वा अस्तु तदुपाधेः जीवभावः येनोपाधिना उच्यते तस्य उपाधेः विज्ञानमयकोशस्य "अनादि-कालोयमहंस्वभावः जीव" इत्युक्ततया अनादित्वात् आत्मनः इव अनादेः नाशः कस्यापि नेष्यते अतः जीवभावप्रयोजकोपाधेरनादित्वात् नाशा-संभवाच्च अस्य परात्मनः जीवभावोपि नित्यो भवति न नश्यति संसृतिः जीवभावनित्यत्वे नित्येति न निवर्तेत नैव नश्येत् तत् तस्मात् मोक्षः कथं मे मम संसारनिवृत्तिः कथं श्रीगुरो वद उपदिश ॥१९५॥

श्रीगुरुरुवाच ।

सम्यक्पृष्टं त्वया विद्वन् सावधानेन तच्छृणु ।
प्रमाणिकी न भवति भ्रान्त्या मोहितकल्पना ॥१९६॥

· हे विद्वन् बुद्धिमन् त्वया सम्यक्पृष्टं। तत् पृष्टं यद्वस्तु तत् सावधनेन विषयान्तर-संचाररहित-मनसा शृणु श्रुत्वावधारयेत्यर्थः। भ्रान्त्या मोहितकल्पना मोहोस्य संजातः मोहितः मोहश्च प्राप्तज्ञायमानताक-वस्तुनः ज्ञानाभावः तामसः धर्मः। वस्तुतः निर्मलज्ञानस्वरूपत्वेपि अज्ञानजनितभ्रान्त्यादृढीभूतया मोहः पूर्वोक्तः तद्विशिष्टस्य पुरुषस्य या कल्पना स्वस्य असंसारिणोपि संसारित्वकल्पना सा प्रामाणिकी न भवति यथार्था न भवति प्रमाणसिद्धा न भवतीत्यक्षरार्थः। भ्रमप्रयोज्यमोहमूलकत्वात् मुग्धस्य सम्यज्ज्ञानासमर्थत्वात् ॥१९६॥

भ्रान्तिं विना त्वसंगस्य निष्क्रियस्य निराकृतेः।
न घटेतार्थसंबन्धो नभसो नीलतादिवत् ॥१९७॥

तुरवधारणार्थः नञा संबध्यते। असंगस्य वस्तुतः संगशून्यस्य "असंगोह्ययं पुरुषः" इतिश्रुतेः सुषुप्तावनुभवाच्च। निष्क्रियस्य निर्विकारस्य "निष्कलं निष्क्रियं" इतिश्रुतेः "अव्यक्तोयमचिन्त्योयं अविकार्योयमुच्यते" इतिस्मृतेश्च। निराकृतेः "न तस्य कार्यं करणं च विद्यते, अस्थूलं अनणु" इत्यादिश्रुतेः। भ्रान्तिं विना स्थूलसूक्ष्म-कारण-शरीरेषु तादात्म्याभिमानं विना अर्थसंबन्धः दृश्यसंबंधः नैव घटेत। नभसः गगनस्य असंगस्य निष्क्रियस्य निराकृतेः नीलतादिवत्। उक्तं हि "अप्रत्यक्षेपिह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति" इति भाष्ये। अविवेकिनः गगनमपि नीलं पीतं इन्द्रनीलकटाह इति कल्पयन्ति इति गगनस्य यथा नीलत्वादिकं अप्रामाणिकं न घटते,तथेत्यर्थः । एवं परमात्मन्यपि जीवभावः अप्रामाणिक इति भावः। नहि कल्पनामात्रात् गगनं नीलादिरूपं भवति एवं प्रकृतेपि इति बोध्यम् ॥१९७॥

तदेव स्फुटयन् संसारनिवृत्तिमुपपादयति द्वाभ्यां, आत्मनः-वास्तविकस्वरूपं श्रुतिसिद्धं विद्वदनुभवसिद्धं च कथयति। तत्र जीवस्य मिथ्यात्वसिद्धये। स्वस्येति।

स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य
प्रत्यग्बोधानन्दरूपस्य बुद्धेः।
भ्रान्त्या प्राप्तो जीवभावो न सत्यो
मोहापाये नास्त्यवस्तु स्वभावात् ॥१९८॥

द्रष्टुः साक्षिणः निर्गुणस्य केनापि धर्मेण रहितस्य अक्रियस्य निष्क्रियस्य विकारशून्यस्य प्रत्यग्बोधानन्दरूपस्य सर्वान्तरः यो बोधः सः प्रत्यग्बोधः सचासावानन्दश्च प्रत्यग्बोधानन्दः स एव रूपं यस्य सः प्रत्यग्बोधानन्दरूप तस्य स्वस्य आत्मन बुद्धेः भ्रान्त्या तादात्म्याभिमानेन प्राप्तः कल्पितः जीवभावः न सत्यः अबाध्यः न भवति। स्वस्वरूपविषयकसाक्षात्कारे भ्रान्तेः नाशेन बाध्यत्वात्। तदेवाह मोहापाये श्रुत्याचार्योपदेशजनित-तत्वसाक्षात्कारेण अज्ञाननाशे तज्जनितभ्रान्तेरभावात् तदभावे मोहस्य दूरपलायितत्वात् तस्य अपाये अवस्तु यत्कल्पितं तत् स्वभावात् स्वधर्मतः कल्पनाविषयत्वेन नास्ति। यद्वा स्वभावात् कल्पितानां मोहापाये अप्रतीयमानतया नास्तित्वस्य स्वभावात् अयमेव स्वभावः आरोपितानां वस्तूनां भ्रान्त्यभावे पूर्ववदप्रतीयमानत्वम् इत्यर्थः ॥१९८॥

पूर्वश्लोकचतुर्थ-पादार्थमुपपादयति। यावदिति।

यावद्भ्रान्तिस्तावदेवास्य सत्ता
मिथ्याज्ञानोज्जृंभितस्य प्रमादात्।
रज्वां सर्पो भ्रान्तिकालीन एव
भ्रान्तेर्नाशे नैव सर्पोस्ति तद्वत् ॥१९९॥

कार्यस्य मिथ्यात्वं वक्तुं कारणं विशिनष्टि मिथ्येति। मिथ्याज्ञानोज्जृम्भितस्य मिथ्याभूतं अधिष्ठानसाक्षात्कारनिवर्त्यं यदज्ञानं तस्मादुज्जृंभितस्य संजनितस्य अस्य अवस्तुनः प्रमादात् अधिष्ठानारोप्याविवेकात्। यावद्भ्रान्तिः विपरीतज्ञानं तावदेव सत्ता अस्तित्वेन प्रतीयमानत्वं। तत्र दृष्टान्तः रज्वां सर्पः रज्वज्ञानात् रज्जुसाक्षात्कारबाध्यात् प्रमादात् पुरोव्यक्तौ नायं सर्प इतिविवेकाभावात् उज्जृम्भितः भ्रान्तिकालीन एव यावत्पर्यन्तं अयं सर्प इतिभ्रान्तिः तावदेव अस्तितया प्रतीयते। नायं सर्पः किंतु रज्जुरितिविशेषदर्शने भ्रान्तेः अयं सर्पइत्याकारिकाया नाशे बाधे नैव सर्पोस्ति। तद्वत् अहं ब्रह्मास्मीति साक्षात्कारपर्यन्तं मूलाज्ञानजनित-प्रमादात् संसारित्वभ्रान्तिः वस्तुतः संसारः कदापि नास्त्येव। रज्वां सर्प इव पूर्वं भ्रान्त्या प्रतीयते स्म। जाते च ज्ञाने

यथार्थे न प्रतीतिरपि तस्येति केवलं ब्रह्ममात्रमवशिष्यते स्वरूपसाक्षात्कारस्य अज्ञानतत्कार्य-सकलनाशकत्वात् "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इतिप्रमाणात् ॥१९९॥

एतावतापि "तदुपाधेरनादित्वान्नानादेर्नाश इष्यते" इत्यस्य स्पष्टमुत्तरमलभमानमिव शिष्यं ज्ञात्वा तदेवानूद्य समादधाति श्रीगुरुः सार्धश्लोकद्वयेन । अनादित्वमिति ।

अनादित्वमविद्यायाः कार्यस्यापि तथेष्यते ।
उत्पन्नायां तु विद्यायां आविद्यकमनाद्यपि ॥२००॥

प्रबोधे स्वप्नवत्सर्वं सहमूलं विनश्यति ।
अनाद्यपीदं नो नित्यं प्रागभाव इव स्फुटं ।
अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः ॥२०१॥

यदुक्तं त्वया उपाधेरनादित्वमिति तत्तथैव अविद्यायाः कार्यस्यापि विज्ञानमयकोशस्य तथा अविद्याया इव अनादित्वं इष्यते । अविद्याया एकरूपत्वात् विचित्रसृष्टेः विचित्रोपाधिनिबन्धनत्वात् सर्वसमस्य परमकृपालोः ईश्वरस्य विचित्रकर्माश्रय-बुद्धिरूपोपाध्यपेक्षायाः आवश्यकत्वात् बुद्धेरपि तत्कारणभूतायाः अनादित्वमकामेनाप्यंगीकर्तव्यं इतिभावः । इदानीं तस्य निवृत्तिमाह विद्यायां उपनिषज्जन्यायां अधिष्ठानसाक्षात्काररूपायां प्रमायां उत्पन्नायां सत्यामिति शेषः । तुशब्दः पक्षं व्यावर्तयति अनादेर्नाशो नास्तीतिरूपम् । आविद्यकं अविद्याप्रयोज्यं । अनाद्यपि सृष्ट्यादिव्यवहारसिध्यर्थं अनादित्वेनांगीकृतमपि प्रबोधे निद्रां त्यक्त्वा जागरे प्राप्ते स्वप्नवत् सहमूलं विनश्यति । न केवलं स्वयमेव स्वस्य मूलभूता याऽविद्या तया सह मूलभूतनिद्रया साकं स्वाप्निकवस्तुजातमिव जागरे सर्वं विनश्यति । तेजस्तमसोरिव विद्याऽविद्ययोरेव साक्षाद्विरोधः तथा निद्राजागरयोः । अविद्यायां विद्यया नाशितायां "तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः" "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं श्येत्" "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्यादिश्रुत्या तादृशभूमविद्यायां संसारहेत्वविद्यायाः समूलकाषं कषितत्वात् मूलेछिन्ने वृक्षस्येव अविद्याकार्यस्य बुध्यादेर्विनाश एवेति

भावः। नहि निद्रायां नष्टायां तत्कालप्रतिपन्नसुखदुःखादिकं जाग्रतः। तथा सम्यज्ज्ञानवतः नाज्ञानकालिकं संसारित्वं निमित्तापायात्। अनादेरपि नाशोस्ति इत्यत्र परमतरीत्या दृष्टान्तमाह अनाद्यपीति। इदं अविद्या तत्कार्यं च अनाद्यपि आदिरहितमपि नो नित्यं नैव नाशाप्रतियोगि इतिस्फुटं। यथा तार्किकैः उत्पत्तिशून्यत्वेन अंगीक्रियमाणोपि तत्प्रतियोगिनि कार्येजाते नश्यतीत्यंगीक्रियते एवं प्रकृतमपि। यद्यपि अनादिभावस्य नाशो नास्तीति दृष्टान्ते प्रागभावे वैषम्यमापादयितुं शक्यं-अविद्यातत्कार्यस्य अभावरूपत्वाभावात् तथापि प्रागवस्थायाः भावरूपतया तत्रैव कार्याभिव्यक्त्यनन्तर-मदृश्यमानायां उक्तार्थस्य वक्तुं शक्यत्वात् तार्किकैरपि प्रागभावनिरूपणावसरे "तथाप्यस्तु कश्चिदतिरिक्तः पदार्थः तथापि तस्य सप्रतियोगिकत्वे मानाभाव" इति स्वीकाराच्च। "नाभावो विद्यते सत" इति गीतावचनात्। विनाशिनां अविद्यातत्कार्याणां सत्वरूपभावत्वस्य अनावश्यकत्वाच्च। श्रुत्यनुसारेण अविद्यादिकं अनादित्वेन स्वीकुर्वतां लोकप्रसिद्धेरनादरणीयत्वाच्च इति दिक्। कस्मिश्चन पदार्थे उत्पत्तिशून्यत्वस्य नाशाप्रतियोगित्वस्य च शास्त्रमन्तरा ज्ञातुमशक्यत्वाच्च दृष्टान्तभूतात्मनि तादृशत्वस्य शास्त्रेणैव ज्ञातत्वाच्च "जीवेशावाभासेन करोति" "मायाऽविद्या च स्वयमेव भवति" इत्यनादित्वस्य "भूयश्चान्ते विश्वमायानिवृत्तिः" इतिनाशस्य च अविद्यादौ श्रुत्यैवावगमितत्वाच्च नात्र संशयप्रसक्तिः। एतावंतं कालं अज्ञातमिदं इदानीं ज्ञातं इतिव्यवहारात् कदा अज्ञातमिति प्रश्नाभावात् अज्ञानानादित्वस्य ज्ञानात्तन्नाशस्य च अनुभवसिद्धत्वाच्च। अनादिभावत्वस्य आत्मनोन्यत्र कुत्राप्यभावादिति सर्वमनाकुलम्। कार्योत्पत्तेः प्राक् कार्यसमवायिकारणे इह कपाले घटे नास्तीति व्यवहारसाक्षिकः अभावः प्रागभाव इत्युच्यते। स च घटे उत्पन्ने नश्यति अतः अनादेरपि उत्पत्तेः प्रागनादितया स्थितस्य कार्योत्पत्यनन्तरं प्रागभावस्य विध्वंसः वीक्षितः तथा ज्ञानोत्पत्तौ अज्ञानं अनाद्यपि नश्यति। नष्टे तस्मिन् तत्कार्यं कुतस्त्यमिति भावः॥२०१॥

उपाधेर्निवृत्तौ औपाधिकस्य जीवत्वस्यापि निवृत्तिमाह। यदित्यादिना द्वाभ्यां।

यद्बुध्द्युपाधिसंबन्धात् परिकल्पितमात्मनि।
जीवत्वं न ततोन्यत्तु स्वरूपेण विलक्षणम्॥२०२॥

आत्मनि परमात्मनि बुध्द्युपाधिसंबन्धात् बुद्धिरेवोपाधिः बुध्द्युपाधिः तस्य संबन्धः आज्ञानिकतादात्म्यं तस्मात् परिकल्पितं यत् जीवत्वं मिथ्याभूतं ततः अन्यत् सत्यभूतं, स्वरूपेण असंसारित्वादिरूपेण विलक्षणं भिन्नं न-तु नैवेत्यर्थः॥ भ्रमेणाप्यन्यथा वास्तु जीवभावः परात्मनः इति शिष्येणोक्तत्वात् अन्यथावास्तु इति वास्तविकं जीवत्वं यथा सुधायाः हरिद्रायाश्च योगे रक्तिमा वस्तुतः तथा इत्यभिप्रेत्य प्रश्नस्य कृतत्वात् तमभिप्रायं निरसितुं आत्मनि बुध्द्युपाधिसंबन्धवशात् यत्परिकल्पितं जीवत्वं तद्विना स्वरूपेण विलक्षणं ततोन्यन्नास्तीत्युक्तं श्रीगुरुणा॥२०२॥

"असंगोह्ययं पुरुषः" इतिश्रुत्या अवस्तुभूत एवसंबन्धः बुध्द्या सह तस्य वक्तव्य इत्याह। संबन्ध इति।

संबन्धः स्वात्मनो बुध्या मिथ्याज्ञानपुरस्सरः।
विनिवृत्तिर्भवेत्तस्य सम्यज्ज्ञानेन नान्यथा॥२०३॥

स्वात्मनः निरवयवतया संयोगादेर्वक्तु-मशक्यत्वात् संयोगस्थले परस्परधर्मस्य परस्परस्मिन् प्रतीत्यभावाच्च। अयोवन्ह्योः संयोगसंभवेपि अयो दहति वह्निर्दीर्घः इति व्यवहारस्य परस्पराध्यासेनैव उपपाद्यमानत्वात् बुध्द्यात्मनोः कर्तृत्वचैतन्यादिधर्माणां प्रतीयमानानां अन्योन्याध्यासमूलकत्वस्यैव वक्तव्यतया धर्मितादात्म्याध्यासः धर्माणामध्यासे कारणमित्याध्यासिकतादात्म्यमेव मिथ्याभूताज्ञानमूलकं बुध्द्या साकं संबन्ध इति भावः। तस्य अज्ञानमूलकस्य संबन्धस्य सम्यज्ज्ञानेन विनिवृत्तिर्भवेत् रज्वादौ प्रतीत-सर्पतादात्म्यस्य रज्जुप्रमया बाधदर्शनात्। नान्यथा आज्ञानिकनिवृत्तौ प्रकारान्तरं नास्तीत्यर्थः। मिथ्याज्ञानपुरस्सर इत्यत्र मिथ्या च तदज्ञानं च मिथ्याज्ञानं तत्पुरस्सरं पूर्वभावि यस्य इति विग्रहे मिथ्याज्ञानमूलकत्वं लभ्यते संबन्धस्य। मिथ्याज्ञानपदेन भ्रमापरपर्यायस्य अध्यासस्य परिग्रहे सः पुरस्सरः पूर्वं घटकः यत्र इत्यर्थेन आध्यासिक-तादात्म्यरूपसंबन्धे पूर्वमध्यासस्य घटकत्वात् संबन्धे तद्विशेषणं योजनीयम्। अर्थद्वयमपि सुवचम्॥२०३॥

भ्रमप्रमादादि-दोषदूषितैः पुरुषैः इदमेव सम्यग्ज्ञानमिति ज्ञातुमशक्यत्वात् निर्दोषश्रुत्यनुसारेण सम्यग्ज्ञानं दर्शयति। ब्रह्मेति।

ब्रह्मात्मैकत्व-विज्ञानं सम्यग्ज्ञानं श्रुतेर्मतम् ॥२०४॥

ब्रह्म च आत्मा च ब्रह्मात्मानौ तयोरेकत्वं भेदाभावः तस्य विज्ञानं अनुभवः सम्यग्ज्ञानं इतिश्रुतेर्मतम्। "तत्वमसि" "अहं ब्रह्मास्मि" "अयमात्मा ब्रह्म" "प्रज्ञानं ब्रह्म" "स एतमेव पुरुषं ब्रह्म ततममपश्यत्" "स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः।" "एष त आत्मा अन्तर्याम्यमृतः" "एष त आत्मा सर्वान्तरः नान्योतोस्ति द्रष्टा नान्योतोस्तिश्रोता नान्योतोस्ति मन्ता नान्योतोस्ति विज्ञाता। सवा एष महानज आत्मा योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इत्यादिश्रुतिभ्यः जीवब्रह्म-भेदनिराकरणात् ॥२०४॥

तत्र हेतुमाह। तदात्मेति।

तदात्मानात्मनोः सम्यग्विवेकेनैव सिध्यति।
ततो विवेकः कर्तव्यः प्रत्यगात्मासदात्मनोः ॥२०५॥

तत् सम्यग्विज्ञानं आत्मानात्मनोः आत्मा च अनात्मा च जात्येकवचनं आत्मानात्मानौ तयोरात्मानात्मनोः सम्यक् विवेकेन निरक्षीरवत् विभेदग्रहणेनैव सिध्यति। भेदग्रहे अध्यासव्यापकस्य भेदाग्रहस्य असंभवात् तदभावे भ्रमरूपस्य अध्यासस्य व्याप्यस्य अभावात् तदभावे विक्षेपशून्यं मनः बहिर्मुखत्वशून्यं सत् श्रवणमननंनिदिध्यासनैः सर्वान्तरं ब्रह्म साक्षात्करोतीति भावः। ततः विवेकस्य सम्यग्ज्ञानहेतुत्वात्। प्रत्यगात्मासदात्मनोः असन् मिथ्याभूत आत्मा असदात्मा प्रत्यङ सर्वान्तरः आत्मा परमात्मा प्रत्यगात्मा च असदात्मा च प्रत्यगात्मासदात्मानौ तयोः विवेकः श्रुत्याचार्यदत्तयुक्त्या पृथक्तया ज्ञानानुकूलव्यापारः मननरूपः कर्तव्यः ॥२०५॥

तथाकृते तस्य स्फुटभानं सदृष्टान्तमाह। जलमिति।

जलं पंकवदस्पष्टं पंकापाये जलं स्फुटं।
यथा भाति तथात्मापि दोषाभावे स्फुटप्रभः ॥२०६॥

पंकमस्यास्तीति पंकवत् पंकिलं जलं अस्पष्टं विजातीयेन पार्थिवेन पंकेन मिश्रितत्वात्। पंकापाये पंकस्यापाये तत उद्धृत्यापनयने जलं स्फुटं इतरामिश्रं शुद्धं यथा भाति तथा आत्मापि परमात्मापि दोषाभावे स्फुटप्रभः स्फुटा प्रभा प्रकृष्टा भा प्रभा अखण्डचैतन्यप्रकाशः यस्य सः स्फुटप्रभः "सलिल एको द्रष्टा" इत्यादिश्रुतेः निर्मलजलवत् अनात्माविषयकतया भासत इत्यर्थः ॥२०६॥

तदेव स्फुटयन् अनात्माविषयकतया भानार्थं प्रयतितव्यमित्याह। असन्निवृत्ताविति।

असन्निवृत्तौ तु सदात्मनः स्फुटप्रतीतिरेतस्य भवेत्प्रतीचः।
ततो निरासः करणीय एवासदात्मनः साध्वहमादिवस्तुनः ॥२०७॥

यतः एतस्य समीपतरवर्तिनः प्रतीचः सर्वान्तरस्य सदात्मनः कालत्रयेप्यबाध्यस्य आत्मनः परमात्मनः स्फुटप्रतीतिः इतरामिश्रणेन भानं असन्निवृत्तौ तु असतां अन्नमयादीनां अनात्मनां निवृत्तौ तु निवृत्तावेव भवेत् नतु तेषामपि प्रतीयमानत्वे। ततः तस्मात् कारणात् असदात्मनः असन् मिथ्या आत्मा स्वरूपं यस्य सः असदात्मा तस्य अहमादिवस्तुनः अहं अहंकारः आदिर्यस्य तदहमादि तच्च तद्वस्तु अहमादिवस्तु तस्य अहंकारादिदेहान्तस्य आत्मत्वेन भ्रमविषयतया स्वरूपावरकस्य साधु यथा इतः परं अहंतास्पदतया न प्रतीयते तथा निरासः प्रतिकोशं नायमात्मेति दृढतमविवेचनेन निरासः बाधः करणीय एव। उक्तं हि पूर्वं "पंचानामपि कोशानां अपवादे विभात्ययं शुद्धः। नित्यानन्दैकरसः प्रत्यग्रूपः परः स्वयंज्योतिः" इति। सर्वथा मुच्यतामयं जनः इति बहुप्रकारैः उपदिशति करुणानिधिः श्रीगुरुः। तत्र शैवालावृतजलं दृष्टान्ततया कथितं। अत्र विजातीयपंकमिश्रं तत् सर्वप्रकारैः अनात्मभेदस्य प्रतीचि सिध्यर्थम् ॥२०७॥

इदानीं विज्ञानमयस्य अनात्मत्वं निगमयति। अत इति।

अतो नायं परात्मास्यात् विज्ञानमयशब्दभाक्।
विकारित्वाज्जडत्वाच्च परिच्छिन्नत्वहेतुतः।
दृश्यत्वाद् व्यभिचारित्वान्नानित्यो नित्य इष्यते ॥२०८॥

अतः वक्ष्यमाणहेतुभ्यः विकारित्व-जडत्व परिच्छिन्नत्व-दृश्यत्व-व्यभिचारित्व-रूपेभ्यः विज्ञानमयशब्दभाक् विज्ञानमय इति शब्दं भजत इति विज्ञानमयशब्दभाक् अयं कोशः परात्मा मुख्यात्मा न स्यात् मरुतोयवत् आभासमात्र-सत्ताश्रयत्वतः दृष्टनष्टस्वरूपत्वात्। "नित्यो नित्यानां" इत्यादिश्रुतेः, "नित्यत्वाच्च ताभ्यः" इति सूत्रेण नित्यमुक्त्यन्वयित्वयुक्त्या च नित्य आत्मा विकारित्वादिहेतुभिः अनित्यः विज्ञानमयकोशः नेष्यते। विज्ञानमयकोशः आत्मभिन्नः विकारित्वात् जडत्वात् परिच्छिन्नत्वात् दृश्यत्वात् व्यभिचारित्वात् स्थूलदेहवत् इतिप्रयोगः। हेतुबाहुल्यं अनात्मत्वदाढ्यर्थिम्। एतावत्सु हेतुषु सत्स्वपि तत्र मोहादात्मत्वं कल्पितमिति पौनःपौन्येन बहुविवतया अनात्मत्वं द्रढनीयमिति वैभवम्। तत्र विकारित्वं जन्मनाशवत्त्वं, जडत्वं अस्वप्रकाशत्वं, परिच्छिन्नत्वं असर्वगतत्वं, दृश्यत्वं चिद्विषयत्वं, व्यभिचारित्वं अभावप्रतियोगित्वं इति भेदः ॥२०८॥

इदानीं आनन्दमयकोशं निरूपयति। आनन्देति।

आनन्दप्रतिबिम्ब-चुम्बिततनुः वृत्तिस्तमोजृम्भिता
स्यादानन्दमयः प्रियादिगुणकः स्वेष्टार्थलाभोदयः।
पुण्यस्यानुभवे विभाति कृतिनामानन्दरूपः स्वयं
भूत्वानन्दति यत्र साधु तनुभृन्मात्रः प्रयत्नं विना ॥२०९॥

आनन्दस्य परमात्मस्वरूपानन्दस्य प्रतिबिंबः प्रतिफलनं तेन चुंबिता व्याप्ता तनुः शरीरं स्वरूपं यस्याः वृत्तेः सा आनन्दप्रतिबिंब-चुम्बिततनुः, तमोजृंभिता तमसा अविद्यया जृम्भिता जनिता अविद्यापरिणामरूपा वृत्तिः आनन्दमयकोशः स्यात्। स्फुटतया तं बुद्धावारोहयति प्रियादिगुणक इति। "तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा" इतिश्रुत्या इष्टवस्तु-दर्शन-लाभ-भोगजन्य-सुखविशेषावयवकः प्रियादिः प्रमोदान्तः गुणः अवयवः यस्य स इति विग्रहः। तस्य कादाचित्कत्वमाह स्वेष्टेति। स्वस्य इष्टः स्वेष्टः स चासावर्थश्च स्वेष्टार्थः पुत्रमित्रादिः शब्दादिर्वा तस्य लाभे, लाभ इत्युपलक्षणं दर्शन-भोगयोः। तदा उदयः उत्पत्तिः यस्य सः कोशः स्वेष्टार्थलाभोदयः। कृतिनां

श्रीमतां पुण्यस्य प्राक्कृतस्य फलोन्मुखस्य अनुभवे फलानुभवकाले विभाति विशेषेण भाति। तमेवार्थं स्पष्टयति यत्र यस्मिन्काले तनुभृन्मात्रःसर्वोपि शरीरीप्रयत्नं विना तात्कालिक-प्रयत्नं विना इत्यर्थः पुण्यस्यानुभवे इति पूर्वप्रयत्नस्य हेतूक्ततत्वात्। स्वयमानन्दरूपः भूत्वा यदा आनन्दरूपः भूत्वा साधु नन्दति तदा आनन्दमयकोशेन योगः अवगन्तव्य इति भावः। वक्ष्यति च "देहप्राणेन्द्रियमनो-बुध्द्यादिभिरुपाधिभिः। यैर्यैर्वृत्तेस्समायोगः तत्तद्भावोस्य योगिनः" इति। तथा च पुण्यवशात् सुखाकारा जाग्रत्स्वप्नयोः संभवन्ती तामसी वृत्तिः आनन्दमयकोशः इत्युक्तं भवति। तस्यापि स्वरूपावरकत्वमस्त्येव। न हि तद्योगे निरामयं सुखं नित्यं निरुपाधिकं सुज्ञानं। अत एव "न प्रहृष्येत्प्रियं प्राप्य" "आत्मानं हर्षशोकाभ्यां शत्रुभ्यामिव नार्पयेत्" "हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति" "हर्षामर्षभयोद्वेगैः मुक्तो यस्स च मेप्रियः" इत्यादिप्रमाणैः हेयत्वं तस्य। अत्र पुण्यशब्देन काम्यकर्मजन्यमपूर्वं ग्राह्यं "मुक्तिर्नो शतकोटिजन्मसु कृतैः पुण्यैर्विना लभ्यते" इति "कर्म अशुक्लाकृष्णं योगिनः त्रिविधमितरेषाम्" इति "वृत्तीनामनुवृत्तिस्तु प्रयत्नात्प्रथमादपि। अदृष्टाद्वा सकृदभ्यास-संस्कारसचिवाद्भवेत्" इत्यादिना योगज-पुण्यस्य ज्ञानद्वारा अनावृतानन्दाभिव्यंजकत्वं आनन्दावरकतमोभंजकत्वं इति तादृशानन्दस्य कोशत्वाभावात् तदा तमोजृम्भितत्वाभावात् वृत्तेरिति बोध्यम्॥२०९॥

तामसी सुखाकारवृत्तिः आनन्दमयकोश इतिकृत्वा सुषुप्तौ तस्य उत्कटत्वं दर्शयति तदानीं पुण्याजन्यस्य स्वरूपसुखस्यैव अविद्यावृत्तिविषयत्वात् प्रत्यहं आरब्धपुण्यक्षयं एव दैनंदिनप्रलयरूप-सुषुप्तिसंभवात् उक्तं हि सूत्रभाष्ये "अदृष्टमपि भोगप्रसिध्यर्थं न प्रलयप्रसिध्यर्थमिति"।

आनन्दमयकोशस्य सुषुप्तौ स्फूर्तिरुत्कटा।
स्वप्नजागरयोरीषदिष्टसंदर्शनादिना॥२१०॥

उत्कटा अधिका स्फूर्तिः स्फुरणं सुषुप्तौ आनन्दमयकोशस्य, तदा सुखस्य दुःखासंभिन्नत्वादिति भावः। तथाप्यज्ञानेनावृतत्वात् न मुख्यानन्दरूपत्वं। स्वप्नजागरयोः ईषत् स्वल्पा स्फूर्तिः इष्टसंदर्शनादिना आदिपदेन लाभभोगपरिग्रहः। तदा भिन्नविषयकवृत्तिभिः अस्या वृत्तेः नाश्यमानत्वात् सुषुप्तौ वृत्यंतराभावात् उत्कटत्वमिति भावः॥२१०॥

तस्याप्यनात्मत्वं वदति। नैवेति।

नैवायमानन्दमयः परात्मा सोपाधिकत्वात् प्रकृतेर्विकारात्।
कार्यत्वहेतोः सुकृतक्रियाया विकारसंघात-समाहितत्वात्॥२११॥

अयमानन्दमयः परात्मा मुख्यात्मा नैव। तत्र हेतवः सोपाधिकत्वात् सनिमित्तत्वात् इत्यर्थः इष्टसंदर्शनादिजन्यत्वात् प्रकृतेः मूलप्रकृतेरविद्यायाः विकारात् विकारत्वात् इत्यर्थः तमोजृंभितवृत्तेः तथात्वात्। सुकृतक्रियायाः पुण्यकर्मणः कार्यत्वहेतोः कार्यत्वात्। "पुण्यस्यानुभवे विभाति" इत्युक्ततया सुखाकाराविद्यावृत्तेरपि जागरस्वप्नकालिकायाः पुण्यजन्यत्वात्। विकारसंघात-समाहितत्वात् प्रियादिगुणक इत्यनेन "तस्य प्रियमेव शिरः" इत्यादिश्रुत्या दर्शन-लाभभोग-जन्य-सुखरूपावयव समुदायसंजनितत्वात्। पुण्यवशात् इष्टार्थदर्शने लाभे च तमोमिश्रसत्वोद्भवे जायमाना वृत्तिः सुखाकारा अहं सुखीतिरूपा एवं भोगे "कोन्योस्ति सदृशोमया यक्ष्ये दास्यामि मोदिष्ये" इत्यादिरूपा उत्कृष्यमाणा तस्याः पुण्येष्टविषयादिविकारजन्यत्वादिति वा अर्थः॥२११॥

कोशपंचक-विवेकानन्तर-कृत्यमाह। पंचानामिति।

पंचानामपि कोशानां निषेधे युक्तितः कृते।
तन्निषेधावधिः साक्षी बोधरूपोवशिष्यते॥२१२॥

पंचानामपि कोशानां निषेधे प्रतिकोशं नायमात्मा इति निषेधे निराकरणे सति, तन्निषेधावधिः तद्बाधाधिष्ठानभूतः साक्षी यत्पर्यन्तं निषेधः सः अवधिः सीमा इति यावत्। साक्षी साक्षित्वोपलक्षितः। बोधरूपः केवलनिर्विषयज्ञानस्वरूपः अवशिष्यते॥२१२॥

स एव मुख्यात्मेति ज्ञेय इत्याह। योयमिति।

योयमात्मा स्वयंज्योतिः पंचकोशविलक्षणः।
अवस्थात्रयसाक्षी सन्निर्विकारो निरंजनः।
सदानन्दः स विज्ञेयः स्वात्मत्वेन विपश्चिता॥२१३॥

यः अवशिष्यते अयमात्मा इति पूर्वश्लोकेन संबन्धः। उपक्रमैकवाक्यतया परमात्मनिरूपणमुपसंहरति। "अस्ति कश्चित्स्वयं नित्यं अहं-

प्रत्ययलंबनः । अवस्थात्रयसाक्षी सन् पंचकोशविलक्षणः" इत्यादिना उपक्रान्तः एतावता कोशपंचकनिषेधेन तद्विलक्षणतया उपपादितः जाग्रदादि-साक्षी अबाध्यः विकारशून्यः निर्लेपः सदा आनन्दस्वरूपः सः विपश्चिता विवेककुशलेन स्वात्मत्वेन स्वस्वरूपतया विज्ञेयः येष्वात्मत्वं कल्पितं तेषां निरासे कृते तदधिष्ठानं "ब्रह्मपुच्छं प्रतिष्ठेति" श्रुत्या बोध्यमानं परं ब्रह्मैव वास्तवस्वरूपं। अत एवोक्तं श्रुत्या असन्नेव स भवति, असद्-ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति इति। ब्रह्मणः स्वस्वरूपत्वे तदसदिति वेद चेत् स्वस्यासत्वं तस्यान्यत्वे स्वेनात्मत्वेन ज्ञातानां कोशानां निरासे नैरात्म्यमेव प्रसज्येत इत्यर्थः ।।२१३।।

शिष्य उवाच ।

मिथ्यात्वेन निषिद्धेषु कोशेष्वेतेषु पंचसु ।
सर्वाभावं विना किंचित् न पश्याम्यत्र हे गुरो ।
विज्ञेयं किमु वस्त्वस्ति स्वात्मनात्र विपश्चिता ।।२१४।।

स्पष्टोर्थः ।।२१४।।

श्रीगुरुरुवाच ।

सत्यमुक्तं त्वया विद्वन् निपुणोसि विचारणे ।
अहमादिविकारास्ते तदभावोयमप्यथ ।।२१५।।

सर्वे येनानुभूयंते यस्स्वयं नानुभूयते ।
तमात्मानं वेदितारं विद्धि बुध्या सुसूक्ष्मया ।।२१६।।

हे विद्वन् त्वया सत्यमुक्तं यथाज्ञातं कथितं। विचारणे निपुणोसि पूर्वमुच्चावचतया प्रतीतस्य सर्वस्यापि यथा नभानं तथा विचारस्य कृतत्वात् इति श्लाघया तद्बुद्धिमुल्लास्य वक्तव्यं सूक्ष्ममाह अहमादीति। ते पूर्वमनुभूताः अहमादिविकाराः अथ इदानीं अयं तदभावोपि पूर्व-प्रतीतानां सर्वेषां अभावोपि। एते सर्वे येनानुभूयंते पूर्वमनुभूताः तादात्म्येन इदानीं पृथक्तया तदभावो वा अनुभूयते। यः स्वयं नानुभूयते तं वेदितारं सर्वसाक्षिणं सुसूक्ष्मया बुध्या एकाग्रया अनन्यविषयकया बुध्या आत्मानं वद्धि जानीहि ।।२१६।।

तदेवोपपादयति स्फुटतया ज्ञानाय। तत्साक्षिकमिति।

तत्साक्षिकं भवेत्तत्तद्यद्येनानुभूयते।
कस्याप्यननुभूतार्थे साक्षित्वं नोपपद्यते ॥२१७॥

यद्यत् येनानुभूयते अनुभवविषयीक्रियते तत्तत् सः साक्षी यस्य तत् तत्साक्षिकं भवेत्। त्वया सर्वाभावं विना किंचिन्नपश्यामीत्युक्तत्वात् सर्वाभावं त्वं पश्यसीति सिद्धं भवति। त्वया दृष्टः सः अभावः त्वत्साक्षिक इति तत्साक्षी त्वं आत्मेति भावः तत्र हेतुमाह अननुभूतार्थे स्वकीयानुभवाविषये अर्थे कस्यापि पुरुषस्य साक्षित्वं नोपपद्यते अकर्तृत्वे सति बोद्धृत्वस्यैव साक्षित्वात् ॥२१७॥ सामान्यत उक्त्वा प्रकृते त्वाह। असाविति।

असौ स्वसाक्षिको भावो यतस्स्वेनानुभूयते।
अतः परं स्वयं साक्षात् प्रत्यगात्मा नचेतरः ॥२१८॥

असौ अहमादिसर्वविकाराणां अभावः स्वसाक्षिकः। स्वं स्वयं साक्षी यस्य सः स्वसाक्षिकः। तत्र हेतुः यतः यस्मात्कारणात् स्वेन पंचानां कोशानां निषेधेपि अवशिष्टेन स्वेन अनुभूयते। तत्र सर्वाभावं विना किंचिन्नपश्यामीत्युक्तिरेव मानं सर्वाभावं विना किंचिन्नपश्यामीत्युक्तौ सर्वाभावं पश्यामीत्युक्तमेव भवति इति तस्याभावस्य दर्शनविषयत्वं, तव द्रष्टृत्वं अतः प्रत्यगात्मा स्वयं साक्षात् नित्यापरोक्षं " यत्साक्षादपरोक्षाद् ब्रह्म " इति श्रुतेः परं सर्वोत्कृष्टं ब्रह्मैव इतरो न च ब्रह्मभिन्नं नैवेत्यर्थः ॥ ॥२१८॥

उक्तमर्थं स्पष्टं विस्तरेण कथयति। जाग्रदिति।

जाग्रत्स्वप्न-सुषुप्तिषु स्फुटतरं यासौ समुज्जृम्भते
प्रत्यग्रूपतया सदाहमहमित्यंतः स्फुरन्नेकधा।
नानाकारविकार-भाजिन इमान् पश्यन्नहंधीमुखान्
नित्यानन्दचिदात्मना स्फुरति तं विद्धि स्वमेतं हृदि ॥२१९॥

प्रत्यग्रूपतया सर्वान्तरतया सदा एकधा एकरूपेण अहमहमिति अनिदन्तया स्फुरन् स्वयं प्रकाशमानः अहंधीमुखान् अहंकारप्रमुखान्

देहान्तान् कोशान् नानाकार-विकारभाजिनः नानाविधा ये आकाराः अवयव-संस्थानविशेषाः ते च विकाराः जन्मस्थितिविपरिणामवृध्द्य-पक्षय नाशरूपा ये नाना बहवः विकाराः तान् भजन्त इति नानाकारविकार-भाजिनः तान्, अहंकारस्याप्यन्तःकरणपदवाच्यस्य देहाद्याकारेण परिणम-मानत्वात् नानाकारत्वं बोध्यं। इमान् दृश्यपदार्थान् पश्यन् विषयीकुर्वन्। जाग्रत्स्वप्नसुषुप्तिषु सकलप्राणिसिद्धासु तिसृष्वप्यवस्थासु, स्फुटतरं अतिस्फुटं योसौ अविवेकिनः विप्रकर्षाददश्शब्दप्रयोगः। समुज्जृम्भते परनिरपेक्षं भासते। नित्यानन्दचिदात्मना स्वयंप्रकाशनित्यानन्दस्वरूपेण हृदि स्फुरति तमेतं अविदुषां दूरमपि विदुषां प्रत्यक्तया प्रत्यासन्नतरं स्वं स्वात्मानं विद्धि जानीहि ॥२१९॥

एवं सर्वसाक्षितया स्फुटस्य कुतस्तथा विविक्ततया अग्रहणमिति शंकायां मौढ्यमेव मूलमिति सदृष्टान्तमाह। घटोदक इति।

घटोदके बिंबितमर्कबिंबम्
आलोक्यमूढो रविमेव मन्यते।
तथा चिदाभासमुपाधि-संस्थं
भ्रान्त्याहमित्येव जडोभिमन्यते॥२२०॥

मूढः घटोदके घटान्तर्वर्तिजले बिंबितं प्रतीयमानं अर्कविंवं सूर्यमण्डलं प्रतिबिंबं आलोक्य दृष्ट्वा रविमेव मन्यते। न तस्य तत्र सूर्यः भिन्नः अयंतु तत्प्रतिबिंब इति ज्ञानं, तथा उपाधिसंस्थं उपाधिषु बुध्द्यादिषु प्रतीयमानं चिदाभासं चित्प्रतिबिंबं भ्रान्त्या अविवेकेन अहमित्येव अभिमन्यते भ्राम्यति विपरीतं प्रतिपद्यते इत्यर्थः ॥२२०॥

वस्तुतस्तु

घटं जलं तद्गतमर्कबिंबं
विहाय सर्वं दिवि वीक्ष्यतेर्कः।
तटस्थितस्तत्त्रितयावभासकः
स्वयंप्रकाशो विदुषो यथा तथा॥२२१॥

घटमिति। घटं जलं, तद्गतं घटगतजलगतं अर्कबिंबं सूर्यप्रतिबिंबं सर्वं विहाय। तटस्थितः उदासीनः, त्रीनेतान् अतिरिच्य वर्तमानः। तत्र हेतुः तत्त्रितयावभासकः घट-तद्गत-जलतद्गत-प्रतिबिंबरूप-पदार्थ-त्रयप्रकाशकः। स्वयंप्रकाशः स्वेतरबहिर्ज्योतिरनवभास्यः यथा अर्कः सूर्यः दिवि वीक्ष्यते अन्तरिक्षे अवलोक्यते तथा॥२२१॥

देहं धियं चित्प्रतिबिंबमेतं
विसृज्य बुद्धौ निहितं गुहायां।
द्रष्टारमात्मानमखण्डबोधं
सर्वप्रकाशं सदसद्विलक्षणम् ॥२२२॥

नित्यं विभुं सर्वगतं सुसूक्ष्मं
अन्तर्बहिश्शून्यमनन्यमात्मनः।
विज्ञाय सम्यङ्निजरूपमेतत्
पुमान्विपाप्मा विरजा विमृत्युः ॥२२३॥

देहमिति। देहं घटवदवस्थितं स्थूलदेहं धियं स्वच्छतया सूक्ष्मतया च जलवत्तदन्तर्गतां बुद्धिं, गुहायां आवारकत्वेन अनेकानर्थसंकुलायां गुहा-सदृश्यां बुद्धौ निहितं च एतं भ्रन्त्या अहमिति प्रतीयमानं चित्प्रतिबिंबं विसृज्य त्यक्त्वा। पूर्ववत् तटस्थितं तत्त्रितयावभासकं द्रष्टारं सर्व-साक्षिणं आत्मानं सर्वान्तरं। अखण्डबोधं अपरिच्छिन्नज्ञानस्वरूपं अत एव सर्वप्रकाशं सर्वस्य प्रकाशः यस्मात् तं। सदसद्विलक्षणं सत् प्रत्यक्षं तेजः आपः अन्नं च। असदप्रत्यक्षं वायुराकाशं च। एद्विलक्षणं तद्भिन्नं व्यक्ताव्यक्तभिन्नमिति वा अर्थः। नित्यं कालपरिच्छेदशून्यं विभुं देश-परिच्छेदशून्यं सर्वगतं सर्वोपादानतया अन्वयिनं। अथापि सुसूक्ष्मं रूपादिरहिततया दुर्ज्ञेयम् "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" इतिश्रुतेः। अन्तर्बहिश्शून्यं "अनन्तरमबाह्यमिति" श्रुतेः। आत्मनः अनन्यं न अन्यः अनन्यः आत्मनः ब्रह्मणः भेदरहितं "अयमात्मा ब्रह्मेति" श्रुतेः पूर्वोक्तयुक्तेश्च। यद्वा अनन्यं न विद्यते अन्यः यस्मात् सः अनन्यः अद्वितीय इत्यर्थः तम्। आत्मनः निजरूपं वास्तविकस्वरूपं विज्ञाय एतत्। पुमान् पूर्वमन्यथा ज्ञातवान् एष एव पुमान् विपाप्मा विगतपापः "ज्ञानाग्निः

सर्वकर्माणि" इत्यादिस्मृतेः। तत्र हेतुः विरजाः निर्गुणब्रह्मनिष्ठतया तत्स्वरूपतया च तापहेतुरजश्शून्यः पापपदं पुण्यस्याप्युपलक्षकं तस्यापि बन्धकत्वेन मुमुक्षोरनिष्टत्वात् अत एव जन्मनिमित्तकर्मशून्यतया विमृत्युः मृत्युसहितसंसार-रहित इत्यर्थः। स्वरूपच्युतिशून्य इति यावत्। भवतीति शेषः। "प्रमादं वै मृत्युमहं ब्रवीमि" इति सनत्सुजातोक्तेः॥२२३॥

अत एव

विशोक आनन्दघनो विपश्चित्
स्वयं कुतश्चिन्न बिभेति कश्चित्।
नान्योस्ति पन्था भवबन्धमुक्तेः
विना स्वतत्वावगमं मुमुक्षोः॥२२४॥

विशोकः निर्दुःखः अत एवानन्दघनः आनन्द एवघनः मूर्तिः यस्य सः आनन्दघनः निरामयानन्दस्वरूपः इत्यर्थः। विपश्चित् सर्वज्ञ इत्यर्थः सर्वात्मकब्रह्मवित्वात्, स्वयं कुतश्चित् न बिभेति द्वितीयाभावात्। अतः मुमुक्षोः नित्यनिरतिशय-निरामयस्वयंप्रकाश-सुखरूपमोक्षेच्छावतः स्वतत्वावगमं विना स्वयाथात्म्यावबोधं विना भवबन्धमुक्तेः पन्थाः अन्यः कश्चित् नास्तीत्यन्वयः॥२२४॥

एवं त्वंपदार्थं अवस्थात्रयसाक्षित्वेन पंचकोशविलक्षणत्वेन असंगत्वेन विशोध्य सप्रपंचत्वेन ज्ञातं तत्पदवाच्यार्थं परिशोध्य तयोरैक्यं सर्वोपनिषत्तात्पर्यविषयीभूतं संप्रदायानुसारेण विस्तरेण वक्तुं पातनिकामरचयति। ब्रह्मेत्यादिना।

ब्रह्माभिन्नत्वविज्ञानं भवमोक्षस्य कारणम्।
येनाद्वितीयमानन्दं ब्रह्म संपद्यते बुधः॥२२५॥

ब्रह्माभिन्नत्वविज्ञानं अहंब्रह्मास्मीत्यपरोक्षानुभवः भवमोक्षस्य संसारमुक्तेः कारणं येन विज्ञानेन अद्वितीयं निर्भेदं आनन्दं सुखस्वरूपं ब्रह्म बुधः संपद्यते प्राप्नोति भवतीति वा अर्थः "ब्रह्मविदाप्नोति" "ब्रह्मविद् ब्रह्मैव भवति" इति श्रुतेः। "असतो मा सद् गमय मृत्युर्वा असत् सदमृतं मृत्योर्मा अमृतं गमय अमृतं मा कुरु इत्येवैतदाह" इतिश्रुतेः ब्रह्मभाव एव मोक्षः॥२२५॥

ब्रह्मभावे भवमोक्षः कथमिति शंकमानं प्रत्याह। ब्रह्मभूत इति।

ब्रह्मभूतस्तु संसृत्यै विद्वान्नावर्तते पुनः।
विज्ञातव्यमतः सम्यग् ब्रह्माभिन्नत्वमात्मनः ॥२२६॥

ब्रह्मभूतः विद्वान् पुनः संसृत्यै नैवावर्तत इत्यर्थः। "न स पुनरावर्तत" इतिश्रुतेः। तुरवधारणे। अतः आत्मनः ब्रह्माभिन्नत्वं सम्यक् विज्ञातव्यं ॥२२६॥

प्रपंचमिथ्यात्वकथनेन निष्प्रपंचत्वं ब्रह्मणो वक्तुमारभते। सत्यं ज्ञानमिति॥

सत्यं ज्ञानमनन्तं ब्रह्म विशुद्धं परं स्वतस्सिद्धं।
नित्यानन्दैकरसं प्रत्यगभिन्नं निरंतरं जयति ॥२२७॥

कालत्रयेपि बाधरहितं स्वयंप्रकाशं देशतः कालतः वस्तुतश्च परिच्छेदशून्यं व्यापकत्वात् नित्यत्वात् अद्वितीयत्वात् ब्रह्म विशुद्धं स्वभाविकागन्तुक-सकलमल-शून्यं परं मायातीतं स्वतस्सिद्धं सत्तायां स्फूर्तौ वा परनिरपेक्षं। नित्यानन्दैकरसं दुःखास्पृष्ट-नित्यसुखस्वरूपं जीवाभिन्नं निर्भेदमखण्डं ब्रह्म सर्वोत्कर्षेण वर्तत इत्यर्थः। इति वस्तूपक्षेपः ॥२२७॥

तत्र अनन्तपदार्थैकदेशं वस्तुपरिच्छेदशून्यत्वमुपपादयति। सदिदमिति।

सदिदं परमाद्वैतं स्वस्मादन्यस्य वस्तुनोऽभावात्।
नह्यन्यदस्ति किंचित् सम्यक्परतत्वबोधसुदशायाम् ॥२२८॥

इदं प्रकृतं ब्रह्म सत् अस्तीति सत्। परमाद्वैतं परमं च तदद्वैतं च परमाद्वैतं। अद्वैते परमत्वं गुणगुणिभावादिप्रयुक्त-तादात्म्येनापि शून्यत्वं सदाप्यस्तीति। न विद्यते द्वैतं द्वयोर्भावः द्विता द्वितैव द्वैतं यत्र तत् भेद-शून्यमित्यर्थः। तत्र हेतुः स्वस्मादिति स्वस्मादन्यस्य वस्तुनोभावात् यदन्यत्स्यात् तदा भेदः प्रसज्येत अतः अद्वैतं। उच्चावचप्रपंचस्य बहूनां जीवानां च सत्वात् कथं स्वस्मादन्यस्याभावः इति चेत् वस्तुपदेन तेषां परमार्थता नास्तीति ज्ञापितं। कल्पितेन भेदाभावात्। नहि कल्पितसर्पेण

सद्वितीयत्वं रज्वाः। यदि जगदादेः परमार्थत्वं सदा भासेत तदभावात् न वस्तुत्वं। तदाह सम्यक्परतत्वबोधसुदशायां इति। इदानीं अन्यथा अविद्यया ज्ञातत्वात् सम्यगिति। यत्र नान्यत्पश्यतीत्यादिश्रुत्या परतत्वविषयक-सम्यज्ज्ञानं यदा तस्यां शोभनायामवस्थायां। हि यस्मात् अन्यत्किंचिन्नास्ति अतः स्वभिन्नवस्त्वभावात् इदं सत् परमाद्वैतमित्यन्वयः॥२२८॥

अज्ञानावस्थायामपि "तदनन्यत्वमारम्भणशब्दादिभ्यः" इतिन्याय-निर्णीतं प्रपंचस्य ब्रह्माव्यतिरेकमाह यदिदमित्यादिना।

यदिदं सकलं विश्वं नानारूपं प्रतीतमज्ञानात्।
तत्सर्वं ब्रह्मैव प्रत्यस्ताशेषभावनादोषम्॥ २२९॥

अज्ञानात् नानारूपं सकलं विश्वं यत् इदं प्रतीतं कल्पितं तत्सर्वं प्रत्यस्ताशेषभावनादोषं अशेषाश्च ताः भावनाश्च अशेषभावनाः तद्रूपः दोषः प्रत्यस्तः निरस्तः यस्मात् तत् प्रत्यस्ताशेषभावनादोषं सकलकल्पना-रूपदोषशून्यं ब्रह्मैव॥२२९॥

तदुपपादयति मृदित्यादिना सदृष्टान्तम्॥

मृत्कार्यभूतोपि मृदो न भिन्नः कुम्भोस्ति सर्वत्र तु मृत्स्वरूपात्।
न कुम्भरूपं पृथगस्ति कुम्भः कुतो मृषा कल्पितनाममात्रः॥२३०॥

मृत्कार्यभूतोपि मृदुपादेयोपि कुम्भः मृदो भिन्नो नास्ति सर्वत्र तु मूले अग्रे पार्श्वयोर्वा सर्वत्रापि मृत्स्वरूपात् मृदभिन्नत्वात् पृथुबुध्नोदराद्याकार-विशेषविशिष्टा मृदेव कुम्भइत्युच्यते न कुंभरूपं पृथगस्ति मृद्रूपव्यतिरेकेण कुम्भस्य रूपं नीलादिकं नास्ति मृदाकारव्यतिरेकेण कुम्भस्याकारो नास्ति आकारविशेषविशिष्टा मृदेव कुम्भइत्युच्यते न तु कुम्भस्य कश्चिदाकारः। "वाचारंभणं विकारो नामधेयं" इतिश्रुत्या मृषाकल्पित-नाममात्रः कुम्भः। कुतः कस्माद्धेतोः पृथगस्ति मृद्रूपभिन्नरूपं नास्ति मृदाकारव्यतिरिक्ताकारो नास्ति। कुम्भ इति शब्दः परं कल्पितः। तावता एक एव देवदत्तः संकोचितहस्तपादः प्रसारितहस्तपादश्च यथा न भिद्यते तद्वत् कुम्भोपि मृद इत्यर्थः॥२३०॥

स्फुटप्रतिपत्यर्थं पुनरुपपादयति। केनापीत्यादिना।

केनापि मृद्भिन्नतया स्वरूपं घटस्य संदर्शयितुं न शक्यते।
अतो घटः कल्पित एव मोहात् मृदेव सत्यं परमार्थभूतम् ॥२३१॥

केनापि पुरुषेण ब्रह्मणापीति वा। घटस्य स्वरूपं मृद्भिन्नतया संदर्शयितुं न शक्यते यतः अतो घटः मोहात् भिन्नतया कल्पित एव। मृदेव सत्यं परमार्थभूतं घटशब्दस्य मुख्यार्थभूतम् मृत्तिकेत्येव सत्यमिति श्रुतेः आदावन्ते च वर्तमानत्वात् ॥२३१॥

एवं मृद्घटदृष्टान्तेन उपादानव्यतिरेकेण उपादेयं कार्यं नास्तीत्युक्त्वा दार्ष्टान्तिके तदाह। सद्ब्रह्मेति।

सद्ब्रह्मकार्यं सकलं सदैव
सन्मात्रमेतन्नततोऽन्यदस्ति।
अस्तीति यो वक्ति न तस्यमोहो
विनिर्गतो निद्रितवत्प्रजल्पः ॥२३२॥

सद्रूपं यद् ब्रह्म तस्य कार्यं सकलं वियदादि सदैव सदापि ब्रह्मैव। परमते सत्कपालादिकार्यं घटादि भिन्नमपि सदेवोच्यते। तद्वन्नेत्याह सन्मात्रमेतत् यथा घटो मृदेव एवं वियदादि ब्रह्मैव न ततोन्यदस्ति। तत्तदुपादेयस्य तदुपादानव्यतिरेकेणासत्वात् सर्वोपादानत्वात् ब्रह्मणः तद्व्यतिरेकेण किमपि नास्तीत्यर्थः। अत एव श्रुतौ मृत्तिकेत्येव सत्यमिति इतिपदेन योगः। मृण्मयं सर्वं सत्यं चेत् मृत्तिकेत्येव मृत्तिकात्वेन सत्यं न स्वरूपत इत्यर्थः। एवं मृदः तदुपादानरूपेण तस्याः पंचीकृतभूतकार्यत्वात् तद्व्यतिरेकेणाभाव इति तद्रूपेण सत्यत्वं। "यदग्ने रोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य, अपागादग्नेरग्नित्वं, वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं" इति श्रुत्यनुसारेण तेषां भूतानां अपंचीकृतभूतरूपेण पृथक्करणे पृथिव्याः अब्रूपेण अपां तेजोरूपेण तस्य वायुरूपतया तस्य वियत्वेन तस्य सत्वेन इति सद्रूपब्रह्मभिन्नतया किमपि सत्यं नास्तीति सन्मात्रमेतदित्युक्तम्। ततोन्यन्नास्तीति तदेव स्पष्टीकृतम्। एवं स्थितेपि अस्तीति यो वक्ति ब्रह्मभिन्नतया

वियदादिकं जगत् अस्तीति यो ब्रवीति तस्य मोहः भ्रमः अज्ञानं वा न विनिर्गतः नष्टो नाभूत् निद्रितवत् निद्रितस्येव प्रजल्पः यथा सुप्तः अनन्वितार्थकं किंवा किंवा असंबद्धं वदति तद्वत् विचारजन्यज्ञानमन्तरा कथनं उपादानव्यतिरेकेण कार्यमस्तीति ।।२३२।।

छान्दोग्यश्रुत्यनुसारेण कथितं अर्थं गतिसामान्याय आथर्वणिकश्रुत्या आह । ब्रह्मैवेदमित्यादिना ।

ब्रह्मैवेदं विश्वमित्येव वाणी
श्रौती ब्रूतेऽथर्वनिष्ठा वरिष्ठा ।
तस्मादेतद् ब्रह्ममात्रं हि विश्वं
नाधिष्ठानाद् भिन्नतारोपितस्य ।।२३३।।

श्रौती सामान्यतः वैदिकीति, विशेषत आह अथर्वनिष्ठेति । अथर्वनिष्ठा अथर्ववेदघटकीभूता अथर्वाख्य-ब्रह्मज्येष्ठपुत्रनिष्ठा वा श्रौती वैदिकी अत्यन्तवरिष्ठा वाणी ब्रह्मैवेदं विश्वमिदं वरिष्ठं इतिरूपा, इदं विश्वं सर्वं जगत्, ब्रह्मैव नातिरिक्तमित्येव एवकारेण पृथक् सत्तां निषिध्य ब्रूते यस्मात् तस्मादेतत्सर्वं ब्रह्ममात्रं विश्वं । हि निश्चयः आरोपितस्य कल्पितस्य अधिष्ठानाद् भिन्नता न । एतेन अज्ञानादेरनादेः ब्रह्मोपादानकत्वाभावात् भिन्नत्वशंका परास्ता ।।२३३।।

एवं श्रुत्या प्रपंचसत्यत्वंनिरस्य युक्त्यापि तदनुसारिण्या निरस्यति । सत्यमिति ।

सत्यं यदि स्याज्जगदेतदात्मनोऽ
नंतत्वहानि-र्निगमा-प्रमाणता ।
असत्यवादित्वमपीशितुः स्यात्
नैतत्त्रयं साधु हितं महात्मनाम् ।।२३४।।

एतत् जगत् परिदृश्यमानं विश्वं यदि सत्यं अकल्पितं स्यात् आत्मनोऽनंतत्वहानिः अन्योन्याभावाप्रतियोगित्वरूप-वस्तुपरिच्छेदशून्यत्वं न स्यात् अकल्पितेन जगता वस्तुभूतेन परिच्छिद्यमानत्वात् । हीयतामनन्तत्वमिति

चेत् निगमाप्रमाणता "सत्यं ज्ञानमनंतं ब्रह्मेति" वेदस्य बाधितार्थबोधकता स्यात्। इष्टापत्तिरितिचेत् ईशितुरपि परमाप्तस्य सर्वज्ञस्य परमेश्वरस्य असत्यवादित्वं अयथार्थवक्तृत्वं स्यात्। तदपि भवत्विति चेत् महात्मनां आस्तिकानां इत्यर्थः। महानात्मा येषां श्रुत्याचार्योपदेशेन परिच्छिन्न-पंचकोशात्मबुद्धिं त्यक्त्वा कृतब्रह्मसाक्षात्कारतया अखण्डाकारवृत्तिमदन्तःकरणानां वा तेषां। नैतत्त्रयं साधु हितं सौमनस्यकरं सम्मतमित्यर्थः। स्वानुभवविरोधात् ॥२३४॥

प्रपंचमिथ्यात्वे भगवद्गीतां प्रमाणयति। ईश्वर इति।

ईश्वरो वस्तुतत्वज्ञो न चाहं तेष्ववस्थितः।
न चमत्स्थानि भूतानीत्येवमेव व्यचीकथत् ॥२३५॥

अज्ञानाभावेन भ्रमादिदोषशून्यः वस्तुयाथात्म्यज्ञानवानीश्वरः "मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः। न च मत्स्थानि भूतानि पश्यमे योगमैश्वरम्" इत्येकस्मिन्वाक्ये मत्स्थानि सर्वभूतानि न च मत्स्थानीति प्रतियोग्यभावयोः एकत्र विरोधशंकायां पश्य मे योगमैश्वरम् इति ईश्वरस्य मम अघटितघटनोपायरूपं योगं मायां इत्यर्थः पश्येति मायिकत्वमुक्तवान्। तदेव मिथ्यात्वं प्रतिपन्नोपाधौ अभावप्रतियोगित्वस्यैव मिथ्यात्वात्। मत्स्थानि न च मत्स्थानीति पदाभ्यां अयमर्थः उक्तः। स्वाश्रयत्वेनाभिमतयावन्निष्ठाभावप्रतियोगित्वं स्वप्रकारकधी-विशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वपर्यवसितं प्रतिपन्नोपाधौ इत्मादेरर्थः। तथा च मत्स्थानीत्यत्र ईश्वरः भूतानामाश्रय इति ज्ञातः। न च मत्स्थानीत्यनेन भूतानां तन्निष्ठात्यन्ताभावप्रतियोगित्वमवगम्यते। तथाच "सर्वेषामेव भावानां स्वश्रयत्वेन सम्मते। प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता" इति चित्सुखाचार्यवचनेन पूर्वोक्तमिथ्यात्वं जगति सिद्धम्। घटवत्तया भ्रमविशेष्यनिष्ठाभावप्रतियोगित्वं परमतेप्यस्तीति अर्थान्तरवारणाय स्वप्रकारकधीविशेष्यताव्यापकेति। तथाच यत्रास्तीति प्रमा तत्रापि स्वरूपतः कल्पितत्वेनअभावात् यत्र यत्र स्वप्रकारकधीविशेष्यता तत्र सर्वत्र घटादेर्वस्तुतोऽभावात् तत्प्रतियोगित्वं सूपपादमिति बोध्यम्। "मया ततमिदं सर्वं जगदव्यक्तमूर्तिना" इति सर्वाधिष्ठानतया इदं सर्वं जगद्व्याप्तं,

ननु तदधिष्ठानकत्वं मम, "स भगवः कस्मिन् प्रतिष्टित इति, स्वे महिम्नि, यदि वा न महिम्नि" इति निराधारत्वस्य कथितत्वात्। अतः जगदधिष्ठानकत्व-भ्रमं निराकरोति "न चाहं तेष्ववस्थित" इति। धूमेन व्याप्तं गृहमित्यादौ गृहाधिकरणकत्वं धूमे प्रतीयते तद्वदिदं मया ततमित्यादिना ज्ञेयमिति। तथाच नाधिष्ठानाद् भिन्नतारोपितस्येति ब्रह्माधिष्ठानकं तत्रारेपितं तद्व्यतिरेकेण नास्तीति मिथ्येत्येव व्यचीकथत् अवोचदित्यर्थः ॥२३५॥

जगन्मिथ्यात्वे युक्तिमाह। यदिति।

यदि सत्यं भवेद्विश्वं सुषुप्तावुपलभ्यताम्।
यन्नोपलभ्यते किंचिदतोऽसत् स्वप्नवन्मृषा ॥२३६॥

सत्यस्य सदा भानमावश्यकं यथात्मनः। यदि विश्वंजगत् सत्यं भवेत् सुषुत्य्यवस्थायां उपलभ्यतां। यत् यस्मात् किंचिदपि नोपलभ्यते "न किंचिद्वेदिषम्" इति स्मृतेः अतः स्वप्नवत् जागरे अनुपलभ्यमानः स्वप्नः यथा असन् तथा। असदित्यस्यार्थः मृषेति। ननु शशविषाणवदसत्वं किंतु दृष्टनष्टस्वरूपत्वात् मिथ्या इति भावः॥ २३६॥

इदानीं ब्रह्मव्यतिरेकेण जगतः अभावं निगमयति। अत इति।

अतःपृथङ्नास्ति जगत्परात्मनः
पृथक्प्रतीतिस्तु मृषा गुणाहिवत्।
आरोपितस्यास्ति किमर्थवत्ताऽ
धिष्ठानमाभाति तथा भ्रमेण ॥२३७॥

अतः स्वप्नवत् सदा उपलंभाभावात् जगत् परात्मनः ब्रह्मणः पृथक् नास्ति व्यवहारदशायां पृथग्घटादिरूपेण प्रतीतिः गुणाहिवत् गुणः रज्जुः, अहिः सर्पः, रज्वामारोपितःयथा मृषा तथा जगदपि मृषा तु मृषैवेत्यर्थः। अर्थक्रियाकारित्वाभावादपि मृषात्मत्वमाह आरोपितस्येति। आरोपितस्य कल्पितस्य अर्थवत्ता प्रयोजनवत्ता अर्थाक्रियाकारित्वमिति यावत् अस्ति किं? नास्त्येवेति भावः। तर्हि कुतः प्रतीतिरत आह अधीति,

अधिष्ठानमाभाति तथा भ्रमेण, नहि भ्रमस्थले प्रयोजनगवेषणा विफल-प्रवृत्तेः सिद्धत्वात् ॥२३७॥

दृष्टान्तांतरेण जगतः ब्रह्माव्यतिरेकं द्रढयति। भ्रान्तस्येति।

भ्रान्तस्य यद्यद्भ्रमतः प्रतीतं
ब्रह्मैव तत्तद्रजतं हि शुक्तिः।
इदंतया ब्रह्म सदेव रूप्यते
त्वारोपितं ब्रह्मणि नाममात्रम् ॥२३८॥

भ्रान्तस्य भ्रमतः यद्यत्प्रतीतं तत्तत् अधिष्ठानभूतं ब्रह्मैव हि यस्मात् शुक्त्यज्ञानात् शुक्तौ भातं रजतं शुक्तिरेव तथा ब्रह्मण्यारोपितं वस्तुतः विचार्यमाणे ब्रह्म सदेव इदंतया रूप्यते तत्तु नाममात्रं "वाचारंभणश्रुतेः" इत्यर्थः ॥२३८॥

प्रपंचस्य मिथ्यात्वेन तत्कारणत्वमपि तत्पदप्रवृत्तिनिमित्तं तादृश-मेवेति शोधितं तत्पदार्थमुपसंहरति अत इति चतुर्भिः।

अतःपरं ब्रह्म सदद्वितीयं
विशुद्धविज्ञानघनं निरंजनम्।
प्रशान्तमाद्यंतविहीनमक्रियं
निरंतरानन्द-रसस्वरूपम् ॥२३९॥

निरस्तमायाकृत-सर्वभेदं
नित्यं ध्रुवं निष्कलमप्रमेयम्।
अरूपमव्यक्त-मनाख्यमव्ययम्
ज्योतिः स्वयं किंचिदिदं चकास्ति ॥२४०॥

ज्ञातृज्ञानज्ञेयशून्यमनन्तं निर्विकल्पकम्।
केवलाखण्डचिन्मात्रं परं तत्वं विदुर्बुधाः ॥२४१॥

अहेयमनुपादेयं मनोवाचामगोचरम्।
अप्रमेयमनाद्यंतं ब्रह्म पूर्णं महन्महः ॥२४२॥

अतः जगतः पृथक्सत्ताशून्यत्वात् आरोपिततया नाममात्रत्वात् परं ब्रह्म अबाध्यं विजातीयरहितं निर्विषय-विज्ञानशरीरं अज्ञानास्पृष्टं अपरिणामि जन्मनाशरहितं अमूर्तं अखण्डानन्दविग्रहं निरस्ताः माया-कृताः सर्वभेदाः यस्मात् यस्मिन्निति वा निर्भेदं सजातीय-स्वगतभेदशून्यं आद्यन्तविहीनत्वान्नित्यं अक्रियत्वात् ध्रुवं कूटस्थं निष्कलं निरवयं अप्रमेयं, फलव्याप्तिरहितं अरूपं "अशब्दमस्पर्शरूपमव्ययं" इति श्रुतेः न चक्षुषा गृह्यते इत्यादेश्च। अत एवाव्यक्तं। वागगोचरतामाह अनाख्यमिति नामशून्यं प्रवृत्तिनिमित्तानां जातिगुणक्रियासंबंधाना-मभावात्। अव्ययं नव्येति इत्यव्ययं अपक्षयरहितं। ज्योतिः स्वयं पराप्रकाश्यं। किंचिदिदं अपरोक्षं चकास्ति प्रकाशते। निश्चलतया तत्र बुद्धेः स्थापनार्थं तत्र तत्र श्रुत्युक्तानि तावन्ति विशेषणानि पुनराह ज्ञातृ-ज्ञानज्ञेयशून्यं त्रिपुटीरहितं। तत्रहेतुः अनन्तं परिच्छेदत्रयशून्यमिति। अत एव निर्विकल्पकं। केवलाखण्डचिन्मात्रं सर्वोपाधि-संवन्ध-विधुरा-परिच्छिन्न-ज्ञानैकरूपं परं तत्वं बुधाः विदुः। स्वात्मत्वेन अहेयमनुपादेयं मनोवाचामगोचरं "यतो वाच" इति श्रुतेः अप्रमेयं श्रवणमनन-निदि-ध्यासन-संस्कृत-मनोवृत्तिव्याप्यं अनाद्यन्तं कालदेशपरिच्छेदशून्यं अतः पूर्णं महत् सूर्यादिभासकं महः ज्योतिः ब्रह्म इति तत्पदार्थशोधनं॥

पदार्थौ शोधयित्वा वाक्यार्थं वक्तुमारभते। तत्त्वमित्यादिना।

तत्त्वंपदाभ्यामभिधीयमानयोः
ब्रह्मात्मनोः शोधितयो-र्यदित्थम्।
श्रुत्या तयोस्तत्त्वमसीति सम्य-
गेकत्वमेव प्रतिपाद्यते मुहुः ॥२४३॥

तत्वमसीत्यत्र तत्पदेन त्वंपदेन च जगत्कर्तृत्वादिविशिष्टत्वेन जाग्रदाद्यवस्थाविशिष्टत्वेन च अभिधीयमानयोः शक्त्या बोध्यमानयोः ब्रह्मात्मनोः ब्रह्म च आत्मा च ब्रह्मात्मानौ तयोरीश्वरजीवयोः। इत्थं पूर्वोक्तप्रकारेण शोधितयोः। तत्वमसीति श्रुत्या तयोः केवलचिन्मात्रयोः एकत्वमेव मुहुः नवकृत्वः छान्दोग्ये एतादृशयोः भेदे मानाभावात् सम्यक्प्रतिपाद्यते, तदैक्यमिति उत्तरेण संबंधः॥२४३॥

ऐक्यं तयोर्लक्षितयो-र्न वाच्ययोः
निगद्यतेऽन्योन्यविरुद्धधर्मिणोः ।
खद्योतभान्वोरिव राजभृत्ययोः
कूपांबुराश्योः परमाणुमेर्वोः ॥२४४॥

किंचिज्ज्ञत्व-सर्वज्ञत्वविषये दृष्टान्तः खद्योतभान्वोरिति अतिपरिच्छिन्नापरिच्छिन्नप्रकाशवत्वात् । नियम्यनियामकभावविषये राजभृत्ययोरिति दृष्टान्तः भीषास्मादित्यादिश्रुतेः । आनन्दलेशापारानन्दविषये कूपांबुराश्योरिति । एकदेशगतत्व-सर्वगतत्वविषये परमाणुमेर्वोरिति । एवं अन्योन्यविरुद्धौ ऐक्यायोग्यौ यौ धर्मिणौ तयोः अन्योन्यविरुद्धधर्मिणोः वाच्ययोः तयोः जीवेश्वरयोः ऐक्यं न निगद्यते बाधितत्वात् । किंतु लक्षितयोः लक्षणावृत्या बोधितयोः निगद्यते उपक्रमादिलिंगावगततात्पर्यानुसारेण कथ्यत इत्यर्थः ॥२४४॥

अन्योन्यविरोधे कारणमाह । तयोरिति ।

तयोर्विरोधोय-मुपाधिकल्पितो
न वास्तवः कश्चिदुपाधिरेषः ।
ईशस्य माया महदादिकारणं
जीवस्य कार्यं शृणु पंच कोशाः ॥२४५॥

तयोर्वाच्ययोः अयं विरोधः ऐक्यायोग्यत्वरूपः उपाधिना कल्पितः । न वास्तवः स्वाभाविकः कश्चित् । क उपाधिरिति चेदाह उपाधिरेष इति । तत्र तत्पदार्थस्य उपाधिमाह ईशस्य माया । तत्स्वरूपमाह महदादिकारणं महतत्वाहंकार-पंचतन्मात्रादिसकलजगत्कारणं माया ईश्वरस्य उपाधिः । जीवस्य त्वंपदार्थस्य कार्यमुपाधिः । किं तदिति चेत् शृणु पंच कोशाः । "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतेः ॥२४५॥

एतावुपाधी परजीवयोस्तयोः
सम्यङ्निरासे न परो न जीवः ।
राज्यं नरेन्द्रस्य भटस्य खेटकः
तयोरपोहे न भटो न राजा ॥२४६॥

जीवपरयोः एतावुपाधी माया पंचकोशाश्च । "नात्र काचन भिदास्ति" "नेह नानास्ति किंचन" "असंगोह्ययं पुरुषः" "असंगो नहि

सज्जते" इत्यादिश्रुतिभिः तत्वंपदार्थशोधिकाभिः तयोरुपाध्योः सम्यङ्-निरासे, न परो न जीवः केवलचिन्मात्ररूपत्वात् भेदकाभावात्। तत्र दृष्टान्तमाह नरेन्द्रस्य राज्यमुपाधिः खेटकः आयुध-विशेषः भटस्य उपाधिः भेदकधर्मः। तयोरपोहे अभावे न भटो न राजा, स्पष्टम् ॥२४६॥

उपाधिनिरासः कथं करणीय इति चेदाह। अथेति।

अथात आदेश इतिश्रुति-स्स्वयं
निषेधति ब्रह्मणि कल्पितं द्वयम्।
श्रुतिप्रमाणानुगृहीत-युक्त्या
तयोर्निरासः करणीय इत्थम् ॥२४७॥

"अथात आदेशो नेति नेति" इतिश्रुतिः स्वयं ब्रह्मणि कल्पितं द्वयं द्वैतं वस्तु निषेधति। इति शब्दस्य इदमित्यर्थः। वीप्सा सकल-दृश्यवर्गनिषेधार्था। इदमिदमिति यद्यत्प्रतीयते तत्सर्वमपि अधिष्ठान-व्यतिरेकेण नास्ति स्वतः सत्तास्फूर्तिशून्यम्। एवं श्रुत्यैव साक्षान्निषिध्य-मानत्वात् सकलप्रमाणमूर्धन्य-श्रुत्यनुगृहीतयुक्त्या तयोः मायाकोशपंचक-रूपोपाध्योः। इत्थं वक्ष्यमाणरीत्या निरासः करणीयः॥२४७॥

नेदं नेदं कल्पितत्वान्न सत्यं
रज्जौ दृष्टव्यालवत्स्वप्नवच्च।
इत्थं दृश्यं साधुयुक्त्या व्यपोह्य
ज्ञेयः पश्चादेकभावस्तयोर्यः॥२४८॥

नेदमिति। प्रथमेदंशब्देन ईशोपाधिर्माया, द्वितीयेदंपदेन कोशपंचकं जीवोपाधिः ग्राह्यः प्रत्येकं निषेध्दुं नञ्द्वययोगः। कारणं वा माया, कार्यं वा कोशपंचकं कल्पितत्वात् न सत्यं "भूयश्चान्ते विश्वमायानिवृत्तिः" इतिमायानाशश्रवणात्। कोशपंचकस्य दृष्टनष्टस्वरूपत्वमुपपादितमेव अवस्थात्रयेनुवृत्यभावात्। "मामेव ये प्रपंद्यन्ते मायामेतां तरंति ते" इति गीतावचनाच्च। "तेध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढां" इति तस्या अपि दृश्यत्वश्रुतेः। अतः इदं कारणं माया-रूपोपाधिः न वस्तुतोऽस्ति, सत्वे निवृत्ययोगात् "नाभावो विद्यते सतः"

इति गीतावचनात्। एवं कोशपंचकमपि निपुणं विचारयतो नैवास्ति धीमता शिष्येण "सर्वाभावं विना किंचिन्न पश्यामि" इत्युक्तत्वात्। अतः पूर्वोक्तोपाधिद्वयमपि रज्जौ दृष्टव्यालवत् सर्पवत् स्वप्नवच्च न सत्यम्। इत्थं दृश्यं साधुयुक्त्या श्रुत्यनुसारिण्या युक्त्या साधु व्यपोह्य निरस्य पश्चात् तयोः अनुपहितयोः केवलयोः चिन्मात्रयोः यः एकभावः भेदाभावः सः ज्ञेयः ॥२४८॥

**ततस्तु तौ लक्षणया सुलक्ष्यौ तयोरखण्डैकरसत्वसिद्धये।**
**नालं जहत्या न तथाऽजहत्या किंतूभयार्थैकतयैव भाव्यम् ॥२४९॥**

तत इति। ततः यतः दृश्यव्यपोहानन्तरं शब्दादेव तयोः एकत्वं ज्ञेयं ततः तस्मात्कारणात् तौ शुद्धौ, लक्षणया शक्यसंवन्धो लक्षणा तया अर्थ-स्मृत्यनुकूलपदपदार्थसम्बन्धरूपया वृत्या सुलक्ष्यौ सम्यगुपस्थापनीयौ। अत्र स्वात्मनिरूपणे "मानान्तरोपरोधात् मुख्यार्थस्यापरिग्रहे जाते। मुख्याविना-कृतेर्थे या वृत्तिस्सैव लक्षणा प्रोक्ता" इत्युक्तम्। प्रमाणान्तरविरोधवशात् मुख्यार्थस्य वाच्यार्थस्य अपरिग्रहे जाते वाच्यार्थविषयकान्वयबोधानुपपत्तौ सत्यामिति यावत् मुख्याविनाकृते वाच्यसंबद्धेर्थे या वृत्तिः सा लक्षणा इत्यर्थः। प्रकृते विशिष्टयोरैक्यं बाधितं इति तत्त्वंपदाभ्यां शुद्धौ आत्मानौ लक्षणीयौ तत्र विशिष्टतादात्म्यसंबन्धस्य सत्वात् लक्षणा शक्यसंबन्धरूपा निर्वहति। तदपि तत्र स्पष्टमुक्तं "देहेन्द्रियादिधर्मानात्मन्यारोपयन्न-भेदेन। कर्तृत्वाद्यभिमानी बोधस्स्यात् त्वंपदस्य वाच्योर्थः। देहस्य चेन्द्रियाणां साक्षी तेभ्यो विलक्षणत्वेन। प्रतिभाति योवबोधः प्रोक्तोसौ त्वंपदस्य लक्ष्योर्थः। वेदावसानवाचा संवेद्यं सकलजगदुपादानं। सर्वज्ञताद्युपेतं चैतन्यं तत्पदस्य वाच्योर्थः। विविधोपाधिविमुक्तं विश्वा-तीतं विशुद्धमद्वैतं। अक्षरमनुभववेद्यं चैतन्यं तत्पदस्य लक्ष्योर्थः" इति॥ "प्रत्यक्त्वपरोक्षत्वे परिपूर्णत्वं च सद्वितीयत्वं। इतरेतरं विरुद्धं ततइह भवितव्यमेव लक्षणया" इति च॥ त्वंपदार्थे प्रत्यक्त्वं तत्पदवाच्ये परोक्षत्वं अहमिति प्रतीत्यभावात्, एवमीश्वरस्य परिपूर्णत्वं जीवस्य सद्वितीयत्वं अल्पत्वमिति यावत्। इतरेतरंविरुद्धं, कथं तयोरैक्यान्वयः इतिमानान्तरोप-रोधे प्राप्ते उपक्रमादिलिंगावधृत-तात्पर्यानुपपत्या शुद्धौ लक्षणया बोधनीयौ। तत्र लक्षणा त्रिविधा, जहल्लक्षणा अजहल्लक्षणा जहजदहं-

ल्लक्षणा चेति। प्रकृते तु तृतीया ग्राह्या इत्याह। तयोरखण्डैकरसत्व-सिद्धये संसर्गाविषयक-प्रमाविषयत्वसिद्धये इत्यर्थः। उक्तं हि वाक्यवृत्तौ "संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः। अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः" इति। तत्र जहल्लक्षणा नाम स्वात्मनिरूपणे लक्षिता "निखिलमपि वाच्यमर्थं त्यक्त्वा वृत्तिस्तदन्वितेऽन्यार्थे। जहतीति लक्षणा स्यात् गंगायां घोषवदिह न ग्राह्या" इति। वाच्यार्थाविषयिणी लक्ष्यार्थविषयिणी या उपस्थितिः तादृशोपस्थितिजनिका शक्यसंबन्धरूपा या वृत्तिः पदपदार्थसंबन्धः सा जहल्लक्षणा। यथा "गंगायां घोष" इत्यत्र घोषपदवाच्याभीरपल्याः गंगापदवाच्यप्रवाहवृत्तित्वं न संभवतीति गंगापदस्य प्रवाहसंयुक्त-तीरबोधकत्वं। तत्रापि यदि गंगातीरे घोषइति बोधोभिप्रेतः तदा अजहल्लक्षणैव। तीरेघोष इति चेत्, बोधे तज्जनकोप-स्थितौ च वाच्यार्थस्याप्रवेशात् जहल्लक्षणा। प्रकृते नालं जहत्या इत्युक्तं वाच्यैकदेशस्य विशेष्यस्य संग्रहात् "निखिलमपि वाच्यमर्थं त्यक्त्वा" इत्युक्तलक्षणाभावात्। एवं न तथा अजहत्या अखण्डैकरसत्वसिद्धये अजहत्या लक्षणयापि नालं न पर्याप्तं। तथाहि अजहल्लक्षणा नाम वाच्यार्थविषयिणी लक्ष्यार्थविषयिणी च या उपस्थितिः तज्जनक-शक्यसंबन्धरूपा वृत्तिः। तदुक्तं "वाच्यार्थमत्यजन्त्या यस्यावृत्तेः प्रवृत्तिरन्यार्थे। इयमजहतीति कथिता शोणो धावतिवदत्र न ग्राह्या" इति शोणशब्दस्य वाच्यस्य रक्त-गुणस्य धावनकर्तृत्वान्वयासंभवात् तद्‌गुणविशिष्टे अश्वे लक्षणा। तत्र शोणगुणविशिष्टाश्वविषयकोपस्थितौ वाच्यार्थस्य शोणगुणस्यापि भानात् इयं लक्षणा अजहती वाच्यार्थं न त्यजतीति। प्रकृते विशेषणांशस्य वाच्यार्थस्य परित्यज्यमानत्वात् नाजहल्लक्षणा किंतु उभयार्थैकतयैव भाव्यं उभयोरर्थयोः एकता यया लक्षणया तया जहदजहल्लक्षणया भाव्यं तयोरखण्डैकरसत्वसिद्धये। तल्लक्षणमुक्तम्। "जहदजहतीति सा स्यात् या वाच्यार्थैकदेशमपहाय। बोधयति चैकदेशं सोयं द्विज इति वदाश्रयेदेनाम्"। सोयं द्विज इति वाक्यं त्यक्त्वा प्रत्यक्परोक्षदेशाद्यं। द्विजमात्रलक्षकत्वात् कथयत्यैक्यं पदार्थयोरुभयोः। तद्वत्तत्वमसीति त्यक्त्वा प्रत्यक्परोक्षतादीनि। "चिद्वस्तु लक्षयित्वा बोधयतिस्पष्टमसिपदेनैक्यम्" इति तथाच किंचि-द्वाच्यार्थाविषयिणी किंचिद्वाच्यार्थविषयिणी च या उपस्थितिः तादृशोप-स्थिति-जनक-शक्यसंबंधरूपा वृत्तिः जहदजहल्लक्षणा। प्रकृते तया

लक्षणया तत्त्वंपदार्थयोः संसर्गाविषयक-यथार्थ-ज्ञानविषयत्वसिद्धये भाव्यम् ॥२४९॥

तद्दृष्टान्तपुरस्सरमाह। स इति।

स देवदत्तोयमितीह चैकता विरुद्धधर्मांशमपास्य कथ्यते।
यथा तथा तत्त्वमसीति वाक्ये विरुद्धधर्मानुभयत्र हित्वा ॥२५०॥

संलक्ष्य चिन्मात्रतया सदात्मनोः अखण्डभावः परिचीयते बुधैः।
एवं महावाक्यशतेन कथ्यते ब्रह्मात्मनोरैक्य-मखण्डभावः ॥२५१॥

सोयं देवदत्त इतीह तच्छब्दस्य तद्देशतत्कालवृत्तित्वविशिष्टोर्थः। अयमिति इदंपदस्य एतद्देशैतत्काल-वृत्तित्वविशिष्टः अर्थः। तत्र विशेषणयोः अत्यन्तभिन्नत्वात् विशिष्टैक्यमनुपपन्नम्। कालांतरे देशान्तरे-स्थितः देवदत्तः इदानीमत्रागतः इत्यप्यर्थस्य ज्ञातत्वात् व्यक्तिमात्र-विषयक-बोधतात्पर्येणोच्चरितादस्माद् वाक्यात् स्वघटकतदिदंपदाभ्यां उभयत्र विरुद्धांशं तद्देश-तत्काले-तद्देशै-तत्कालरूपं अपास्य हित्वा देवदत्तरूपविशेष्यांशमात्रमुपस्थाप्यते। तत्र भेदो नास्तीति एकता यथा कथ्यते तथा तत्त्वमसिवाक्ये कारणोपाधि-कार्योपाधि-प्रत्यक्त्व-परोक्षत्व-परिपूर्णत्व-सद्वितीयत्वादिरूपान् विरुद्धधर्मान् उभयत्र हित्वा चिन्मात्रतया ईशजीवौ संलक्ष्य तयोः अखण्डभावः वस्तुपरिच्छेदशून्यत्वं बुधैः विद्वद्भिः परिचीयते अनुभूयत इत्यर्थः। एकत्र ऐक्यबोधप्रकारं उपदिश्य अन्यत्रातिदिशति, एवं महावाक्यशतेन ब्रह्मात्मनोरैक्यं तदर्थः अखण्डभावः कथ्यत इति ॥२५१॥

विधिमुखेन जीवब्रह्मैक्यबोधकं वाक्यं उदाहृत्य निषेधमुखेन तद्बोधकं वाक्यमुदाहरति। अस्थूलमिति।

अस्थूलमित्येतदसन्निरस्य सिद्धं स्वतो व्योमवदप्रतर्क्यम्।
अतो मृषामात्रमिदं प्रतीतं जहीहि यत्स्वात्मतया गृहीतम्।
ब्रह्माहमित्येव विशुद्धबुध्या विद्धि स्वमात्मानमखण्डबोधम्॥२५२॥

"अस्थूलमनण्वह्रस्व-मदीर्घम्" इत्यादिवाक्यानि स्थूलशरीरादि-तादात्म्याभिमानेन तथा स्वात्मानं जानानं जीवं तद्रूपत्वं परिहाप्य ब्रह्म-

स्वरूपं बोधयन्ति। तदाह एतत् दृश्यमानं असत् स्थूलं शरीरादि, अस्थूलमिति निरस्य निषिध्य, सकलनिषेधसाक्षित्वेन स्वतः सिद्धं, व्योमवत् आकाशवदप्रतर्क्यं नह्याकाशस्य आयामः एतावानिति तर्कयितुं शक्यते, तथा शास्त्रमन्तरेण तर्कानधिगम्यमित्यर्थः। तादृशं ब्रह्म अहमित्येव विशुद्धबुध्या मनननिदिध्यासन-संस्कृतबुध्या, स्वं आत्मानं अखण्डबोधं विद्धि। अतः यत् स्वात्मतया गृहीतं स्थूलशरीरादिकं इदं प्रतीतमज्ञानात् ज्ञातं मृषामात्रं मिथ्याभूतं जहीहि परित्यज इत्यन्वयः ॥२५२॥

छान्दोग्यषष्ठाध्याये श्वेतकेतुं प्रति उद्दालकेन कृतमुपदेशं शिष्यसुखबोधाय संगृह्योपदिशति। मृत्कार्यमिति।

मृत्कार्यं सकलं घटादि सततं मृन्मात्रमेवाभितः
तद्वत्सज्जनितं सदात्मकमिदं सन्मात्रमेवाखिलम्।
यस्मान्नास्ति सतः परं किमपि तत्सत्यं स आत्मा स्वयं
तस्मात् तत्त्वमसि प्रशान्तममलं ब्रह्माद्वयं यत्परम् ॥२५३॥

मृत्कार्यं मृदुपादानकं, घटादि घटशरावोदंचनादि सकलं, सततं कालत्रयेपि उत्पत्तेः प्राक् उत्पत्यनन्तरं नाशानन्तरं च, अभितः सर्वशः प्रागूर्ध्वं पश्चादधः पार्श्वयोः, मृन्मात्रमेव मृद्व्यतिरेकेण नास्ति विस्तरेणेदमुपपादितमधस्तात् "मृत्कार्यभूत" इत्यादिश्लोकाभ्यां। तद्वत् "सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयं, तदैक्षत, तत्तेजोऽसृजत, तदपोसृजत, तदन्नमसृजत" इत्यादिना "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्यन्तं श्रुत्या बोधितप्रकारेण सज्जनितं घटःसन् पटःसन् इति सामानाधिकरण्यविषयकप्रतीत्याच सदात्मकमिदमखिलं सन्मात्रमेव। यस्मात् सतः परब्रह्मणः परं भिन्नं किमपि नास्ति तत् सर्वोपादानभूतं, सत्यं कालत्रयाबाध्यं, सः आत्मा तव मुख्यं स्वरूपं स्वयं सत्तास्फूर्त्योः परनिरपेक्षं, तस्माद्धेतोः अद्वयं स्वसत्ताव्यतिरिक्त-सत्ताक-पदार्थशून्यं, प्रशान्तं निर्विकारं, अमलं अज्ञानाद्यस्पृष्टं, यत्परं ब्रह्म तदेव त्वमसि इत्यर्थः ॥२५३॥

निद्रा-कल्पित-देशकाल-विषयज्ञात्रादि सर्वं यथा
मिथ्या तद्वदिहापि जाग्रति जगत्स्वाज्ञान-कार्यत्वतः।

यस्मादेवमिदं शरीरकरण-प्राणाहमाद्यप्यसत्
तस्मात् तत्वमसि प्रशान्तममलं ब्रह्माद्वयं यत्परम् ।।२५४।।

"न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथ-योगान् पथः सृजते" इतिश्रुत्या निद्रावशात् कल्पितः देशश्च कालश्च विषयाश्च ज्ञाता च देशकालविषयज्ञातारः ते आदयः यस्य सर्वस्य स्वप्ने भासमानवस्तुजातस्य शरीरकरणादेः तत्सर्वं, प्रबोधे अप्रतीयमानत्वात् निद्रारूपदोषजन्यत्वात् दृष्टनष्टस्वरूपत्वाच्च यथा मिथ्या बाध्यं, तद्वदिह जाग्रत्यपि जगत् मिथ्या। तत्र हेतुः स्वाज्ञानकार्यत्वतः, स्वस्य अज्ञानं स्वाज्ञानं निष्प्रपंचस्वरूपावरकं मूलाज्ञानं तत्कार्यत्वात् । उक्तं हि "यदबोधादिदं भाति यद्बोधाद्विनिवर्तते" इति। "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इतिश्रुतेः "यदज्ञानप्रभावेन दृश्यते सकलं जगत्। यज्ज्ञाना-ल्लयमाप्नोति तस्मै ज्ञानात्मने नमः" इति, "ज्ञाते द्वैतं न विद्यते" इति माण्डूक्यकारिकायाश्च। यस्मादेवं जगत् मिथ्या, इदं शरीर-करण-प्राणाहमाद्यपि त्वया पूर्वमात्मत्वेनाभिमतं शरीरेन्द्रियप्राणाहंकारादिकमपि असत् बाध्यं मिथ्याभूतं। तस्मात् प्रशान्तममलं अद्वयं यत्परं ब्रह्म तदेवा-सित्वम् इति पूर्ववत् ।।२५४।।

शब्दानुविद्धतया ब्रह्मानुसंधानधारायै दशभिः श्लोकैः ब्रह्मतत्वं स्फुटयन् जीवब्रह्मैक्यं आविष्करोति। जातिनीतीति।

जातिनीतिकुल-गोत्रदूरगं नामरूपगुणदोषवर्जितम् ।
देशकालविषयातिवर्ति यत् ब्रह्म तत्वमसि भावयात्मनि।।२५५।।

ब्राह्मण्यादिजातेः, औचित्येन स्थितिरूपनीतेः, कुलस्य वंशस्य, गोत्रस्य च स्थूलसूक्ष्मशरीराश्रितत्वात् तेभ्यः दूरं गच्छतीति जातिनीति-कुलगोत्र-दूरगं "यत्तदद्रेश्यमग्राह्य-मगोत्र-मवर्णं" इतिमुण्डकश्रुतेः। नाम-रूपगुणदोषवर्जितं "आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म" "केवलो निर्गुणश्च" इतिश्रुतेः चकारान्निर्दोषश्च। देशकाल-विषयान् अतीत्य वर्तत इति देशकालविषयातिवर्ति आनन्त्यश्रुतेः परिच्छेद-त्रयशून्यमित्यर्थः। ईदृशं यद् ब्रह्म तत्त्वमसि आत्मनि बुद्धौ ऐक्येन भावय अनुसंधेहि ।।२५५।।

यत्परं सकलवागगोचरं, गोचरं विमलबोध-चक्षुषः।
शुद्धचिद्घन-मनादि वस्तु यद् ब्रह्म तत्वमसि भावयात्मनि॥२५६॥

यदिति। यत्परं सर्वोत्कृष्टं, सकलवागगोचरं "यतो वाचो निवर्तन्ते" इतिश्रुतेः उपनिषद्भिरपि लक्षणावृत्या प्रतिपाद्यमानत्वात्। विमलबोधरूपं यच्चक्षुः तस्य गोचरं "ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यते निष्कलं ध्यायमानः" इतिश्रुतेः। शुद्धा निर्विषया या चित् सैव घनः मूर्तिः यस्य, यद्वा शुद्धं च तत् चिद्घनं निरुपहितज्ञानस्वरूपं, अनादि वस्तु नित्यं यथार्थ यद् ब्रह्म तत्त्वमसि भावयात्मनि॥२५६॥

षड्भिरूर्मिभिरयोगि योगिहृद्भावितं न करणैर्विभावितम्।
बुध्यवेद्यमनवद्य-भूति यद् ब्रह्म तत्वमसि भावयात्मनि॥२५७॥

षड्भिरिति। क्षुत्पिपासे शोकमोहौ जरामृत्यू ऊर्मिवत् तरंगवत् उपर्युपरि संभवन्तीति एते षडूर्मय इति कथ्यन्ते। तैः षडभिः ऊर्मिभिः अयोगि योगरहितं संबन्धशून्यं, क्रमेण प्राणमनश्शरीराश्रितत्वात् तेषां। योगिहृद्भावितं विषयेभ्यो निरुद्धचित्ताः योगिनः तेषां हृदा मनसा भावितं आदरेण ध्यातमित्यर्थः। न करणैर्विभावितं "न चक्षुषा गृह्यते नापि वाचा, नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा, न तत्र चक्षुर्गच्छति न वाग्गच्छति" इत्यादिश्रुतिभ्यः। शब्दस्पर्शरूपादिरहितत्वात् बुध्यवेद्यं सौक्ष्म्याग्र्यत्वहीनबुध्या वेत्तुमशक्यं, अनवद्य भूति अनवद्या भूतिः महिमा यस्य निर्दोषैश्वर्यमित्यर्थः "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इति सूत्रात् "निरवद्यम्" इतिश्रुतेश्च। तादृशं यद् ब्रह्म तत्त्वमसि भावयात्मनि॥२५७॥

भ्रान्तिकल्पित-जगत्कलाश्रयं स्वाश्रयं च सदसद्विलक्षणम्।
निष्कलं निरुपमान-मृद्धिमत् ब्रह्म तत्वमसि भावयात्मनि॥२५८॥

पादोस्य सर्वा भूतानीतिश्रुतेः भ्रान्त्या कल्पिता या जगद्रूपा कला अंशः तदाश्रयं अधिष्ठानं, "स भगवः कस्मिन् प्रतिष्ठित इति, स्वे महिम्नि" इति श्रुतेः स्वमाश्रयः यस्य अनाधारं सत्यमित्यर्थः। सदसद्विलक्षणं प्रत्यक्षपरोक्ष-पंचभूतविलक्षणं, निष्कलं निरवयवं, निरुपमानं

असदृशं "न तत्समश्चाभ्यधिकश्च दृश्यते" इतिश्रुतेः। ऋद्धिमत् "एष सर्वेश्वर" इत्यादिश्रुतेः "सत्यकामः सत्यसंकल्प" इत्यादिश्रुतेश्च। एतादृशं यद् ब्रह्म तत्त्वमसि भावयात्मनि ॥२५८॥

जन्मवृद्धि-परिणत्यपक्षय-व्याधिनाशनविहीन-मव्ययम्।
विश्वसृष्ट्यवनघातकारणं ब्रह्म तत्वमसि भावयात्मनि ॥२५९॥

जन्म उत्पत्तिः, तदनन्तरकालिकस्थितंरुपलक्षणं, वृद्धिः अंवयोपचयः, परिणतिः विपरिणामः पाकादिना रूपान्तरोत्पत्तिः आम्रादिफलादिषु, अपक्षयः अवयवापचयः, व्याधिः रोगः, नाशनं अन्त्यविकारः तैर्विहीनं षड्भावविकारशून्यं इत्यर्थः। अत एव अव्ययं न व्येतीत्यव्ययं स्वतो वा परतो वा नाशरहितं नित्यं, विश्वसृष्ट्यवनघातकारणं "यतो वा इमानि भूतानि जायंते, येन जातानि जीवंति, यत्प्रयन्त्यभिसंविशंति" "इदं सर्वमसृजत" "आकाशः परायणं" "आकाशं प्रत्यस्तं यन्ति" इत्यादिश्रुतिभ्यः सकलप्रपंच-सृष्टिस्थिति-संहारकारणं यद् ब्रह्म तत्वमसि भावयात्मनि ॥ २५९ ॥

अस्तभेद-मनपास्त-लक्षणं निस्तरंगजलराशि-निश्चलम्।
नित्यमुक्त-मविभक्तमूर्ति यद् ब्रह्म तत्वमसि भावयात्मनि ॥२६०॥

अस्तभेदं अस्तः गतः भेदः यस्मात् "एकमेवाद्वितीयं" "इदं सर्वं यदयमात्मा" इतिश्रुतेः, अनपास्तलक्षणं अनपास्तमत्यक्तं अनपायि सार्वदिकमित्यर्थः लक्षणं सच्चिदानन्दस्वरूपं यस्य तत्। निर्गताः तरंगाः यस्मात् सचासौ जलराशिश्च समुद्रः तद्वन्निश्चलं, नित्यमुक्तं कदापि बन्धरहितं, अविभक्तमूर्ति सच्चिदानन्दस्वरूपत्वेपि तत्पदलक्ष्याखण्डस्वरूपभेदाभावात् अविभक्ता भेदरहिता मूर्तिः स्वरूपं शरीरं यस्य तत् अविभक्तमूर्ति निरवयमिति वा यद् ब्रह्म तत्वमसि भावयात्मनि ॥२६०॥

एकमेव सदनेककारणं कारणान्तरनिरासकारणम्।
कार्यकारणविलक्षणं स्वयं ब्रह्म तत्वमसि भावयात्मनि ॥२६१॥

एकमेव सत् कल्पितानां अनेकेषां अधिष्ठानत्वेन कारणं, कारणांतरनिरासकारणं "परास्य शक्तिर्विविधैव श्रूयते" इतिश्रुतेः स्वभिन्नकारण-

निरपेक्षमित्यर्थः। सकल-दृश्यनिषेधसाक्षित्वेन कारणान्तरस्य आकाशादेः निरासे नेति नेतीति निषेधे कारणमिति वा, कार्यकारणविलक्षणं "तदेतद् ब्रह्मापूर्व-मनपरं" इतिश्रुतेः कार्यं जगत् कारणं माया तद्विलक्षणं "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इतिगीतोक्तेश्च। यद्यप्येककारणं इत्यस्मिन्नेव श्लोके कारणत्वमुक्तं तथापि तस्य मिथ्याकार्यनिरूपितत्वेन मिथ्यात्वात् वस्तुतः कारणत्वं नास्तीत्यपि मन्तव्यम् जगज्जन्मादि-कारणत्वस्य तटस्थलक्षणत्वात्। यावल्लक्ष्यकाल-मनवस्थितं यद्व्यावर्तकं तदेव तटस्थलक्षणं। स्वयं स्वतः सिद्धं, ब्रह्म यत् तत्त्वमसि भावयात्मनि ॥२६१॥

निर्विकल्पक-मनल्पमक्षरं यत्क्षराक्षर-विलक्षणं परम्।
नित्य-मव्ययसुखं निरंजनं ब्रह्म तत्वमसि भावयात्मनि ॥२६२॥

निर्विकल्पकं मायिकत्वात् विकल्पानां वस्तुतः विकल्पशून्यं, अनल्प "यो वै भूमा" "ज्यायानाकाशात्" इत्यादिश्रुतेः। अक्षरं न क्षरति अश्नुते व्याप्नोतीति वा अक्षरं। यत्क्षराक्षरविलक्षणं "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरस्सर्वाणि भूतानि कूटस्थोक्षर उच्यते" इतिस्मृतेः। पूर्वं कार्यकारणविलक्षणं इत्युक्तं विवृतं पदान्तरेण, जगन्माया विलक्षणं सत्यमित्यर्थः। अत एव परं सर्वोत्कृष्टं, नित्यं अक्षरत्वान्नित्य "नित्यो नित्यानां" इतिश्रुतेः। परं नित्यमिति वा अन्वयः। अव्ययसुख "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" इति श्रुतेः अखण्डसुखरूपं, निरंजन तमश्शून्यं यद् ब्रह्म तत्वमसि भावयात्मनि ॥२६२॥

यद्विभाति सदनेकधा भ्रमान्नामरूप-गुणविक्रियात्मना।
हेमवत्स्वय-मविक्रियं सदा ब्रह्म तत्वमसि भावयात्मनि ॥२६३॥

यथा एकं हेम सुवर्णं कटक-कुण्डलाद्यनेकात्मना विभाति स्वयमेक रूपं कारकव्यापारमात्रेण एवं यत् सद् ब्रह्म स्वयं सदा अविक्रियं भ्रमात् नामरूपगुणविक्रियात्मना अनेकधा विभाति तद् ब्रह्म तत्वमसि भावयात्मनि ॥२६३॥

यच्चकास्त्यनपरं परात्परं प्रत्यगेकरसमात्मलक्षणम् ।
सत्यचित्सुखमनन्त-मव्ययं ब्रह्म तत्वमसि भावयात्मनि ॥२६४॥

"तदेतद् ब्रह्मापूर्व-मनपरं" इतिश्रुतेः अनपरं न विद्यते परं कार्यं यस्य वस्तुभूतकार्यशून्यं, परात् हिरण्यगर्भादपि परं, यद्वा सर्वकार्यकारणात् अज्ञानात् परं "अक्षरात्परतः परः" इतिश्रुतेः "स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इतिश्रुतेः, परशब्देन हिरण्यगर्भोऽपि ग्रहीतुं शक्यते। प्रत्यगेकरसं जीवाभिन्नं सर्वान्तरं, "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य संततो भावः तस्मादात्मा प्रकीर्तितः" इत्युक्तात्मलक्षणोपेतं सत्यचित्सुखं अनन्तं अपरिच्छिन्नं अव्ययं नित्यं ब्रह्म तत्वमसि भावयात्मनि ॥२६४॥

उक्तमर्थमिम-मात्मनि स्वयं भावय प्रथितयुक्तिभिर्धिया ।
संशयादिरहितं करांबुवत् तेन तत्त्वनिगमो भविष्यति ॥२६५॥

उक्तमिति। इमं ऐक्यरूपं उक्तमर्थं प्रथितयुक्तिभिः युक्तिषु प्रथितत्वं श्रुत्यनुसारित्वं, धिया निर्मलान्तःकरणेन आत्मनि बुद्धौ स्वयं भावय। तेन भावनेन करांबुवत् हस्तगतजलं यथा निस्संशयं स्पष्टं गृह्यते एवं तत्वनिगमः तत्वनिर्णयः, संशयादिरहितं यथा तथा भविष्यति। रहितपदस्य राहित्यमर्थः। संशयादीति विपर्ययः आदिपदेन गृह्यते असंभावना च। असंभावना-संशय-विपर्ययभावनानां राहित्यं यस्मिन् कर्मणि तद्यथा भवति तथा इति भविष्यतीत्यत्र भवनक्रियाविशेषणम् ॥२६५॥

स्वं बोधमात्रं परिशुद्धतत्वं
विज्ञाय संघे नृपवच्च सैन्ये ।
तदात्मनैवात्मनि सर्वदा स्थितो
विलापय ब्रह्मणि दृश्यजातम् ॥२६६॥

स्वमिति। सैन्ये बहुयोधघटिते सैन्ये छत्रादिचिह्नेन नृपमिव संघे शरीरेन्द्रियप्राणाहंकार-रूपकार्यकरणसंघाते, परिशुद्धतत्वं परिशुद्धं तत्वं याथात्म्यं यस्य सः परिशुद्धतत्वः तं स्वं आत्मानं बोधमात्रं सर्वाव-

भासकज्ञानमात्रं दृश्यसंबंधरहितं विज्ञाय विवेकेनानुभूय, तदात्मनैव ज्ञानात्मनैव सर्वदात्मनि स्थितः स्वरूपनिष्ठः, ब्रह्मणि दृश्यजातं विलापय "पृथिव्यप्सु पयो वह्नौ वह्निर्वायौ नभस्यसौ। नभोप्यव्याकृते तच्च शुद्धे शुद्धोस्म्यहं हरिः" इतिरीत्या तत्तदुपादेयानां स्वोपादानव्यतिरेकेण असद्भावं विनिश्चित्य सर्वस्य सर्वोपादानभूत-ब्रह्मव्यतिरेकेणाभावं निश्चिनुहि इत्यर्थः ॥२६६॥

बुद्धौ गुहायां सदसद्विलक्षणं
ब्रह्मास्ति सत्यं परमद्वितीयम्।
तदात्मना योत्र वसेद्गुहायां
पुनर्न तस्यांगगुहा-प्रवेशः ॥२६७॥

सदसद्विलक्षणं सत्यं अद्वितीयं परं ब्रह्म गुहायां बुद्धौ अस्ति "योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इतिश्रुतेः "स वा एष आत्मा हृदि" इति च, "प्रतिबोधविदितं" "दृश्यतेत्वग्र्यया बुध्या सूक्ष्मया" इति श्रुतेः बुद्धिं विना वेत्तुमशक्यत्वात् दर्पणमिव मुखस्य बुद्धिवृत्तिरेव आवरणं भंक्त्वा ब्रह्म गृह्णातीति सर्वगतमपि बुद्धावस्तीति कथ्यते, सुषुप्तौ बुध्य-भावेन दुर्ग्रहत्वात् स्वरूपस्य। सामीप्यसप्तमी पाषाणे वृक्ष इतिवत्। यद्यपि पंचापि कोशाः गुहापदेन कथ्यन्ते तथापि तत्र मनोमयादीनां बुद्धिद्वारक-संबन्धात् आनन्दमयकोशे बुद्धिं विना विवेक्तुमशक्यत्वात् प्राधान्येन सत्वप्रधानबुद्धावेव स्थितिरित्युक्तमिति बोध्यम्। तदात्मना ब्रह्मात्मना यः पुरुषः अत्र गुहायां स्थूलसूक्ष्मदेहात्मकगुहायां, वसेत् पुनः तस्य अंगगुहाप्रवेशः अंगमेव गुहा, अंगेति शिष्यसंबोधनं वा, अत्र प्रवेशः तादात्म्याभिमानः न विद्यते। "न स पुनरावर्तते" इतिश्रुतेः "आत्मानं चेद्विजानीयात् अयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीर-मनुसंज्वरेत्" इति च ॥२६७॥

एतावता ग्रंथेन आत्मानात्मविवेचनं स्वनुभवः इत्येतत्प्रदर्शितं ग्रन्थ-द्वितीयश्लोकोक्तं, ब्रह्मात्मना संस्थितिर्मुक्तिरितीममर्थं सूत्रितं विशदयितुं उपक्रमते। ज्ञात इति।

ज्ञाते वस्तुन्यपि बलवती वासनानादिरेषा
कर्ता भोक्ताप्यहमिति दृढा यास्य संसारहेतुः।
प्रत्यग्दृष्ट्याऽऽत्मनि निवसता सापनेया प्रयत्नात्
मुक्तिं प्राहुस्तदिह मुनयो वासनातानवं यत् ॥२६८॥

वस्तुनि आत्मनि ज्ञातेपि पंचकोशविलक्षणतया ब्रह्माभिन्नतया च शास्त्रतः युक्तितश्च ज्ञातेपि, या वासना अस्य संसारहेतुः कर्तृत्व-भोक्तृत्वादिरूप-संसारकारणं अहं कर्ता भोक्तापीति दृढा दुरुच्छेद्या, अनादिः बहुकालादनुवृत्ता, एषा वासना बलवती, सम्यक्प्रबुद्धोपि स्वप्नेत्यन्तं भीतः कंचित्कालं निराकुलितान्तःकरणो न भवतीति दृश्यते हि। अतः आत्मनि ब्रह्मणि प्रत्यग्दृष्ट्या बहिर्मुखत्वं नितरां दूरीकृत्य अंतर्मुखतया निर्विकल्पक-समाधिनेत्येतत्। अभेदज्ञानेन निवसता नितरां स्थितिमता सा प्रयत्ना-दपनेया नाशनीया। यतः वासनातानवं स्वकार्यानाधायकत्वं अनुत्कटत्वं यत् तदेव लोके शास्त्रे वा मुनयः शास्त्रार्थमननशीलाः मुक्तिं प्राहुः। अतः ब्रह्मात्मना संस्थितिः अप्रमादेन संस्थितिः मुक्तिरिति दृढतम-साधनचतुष्टय-संपत्तिं विना जन्मांतरसुकृतवशात् ब्रह्मविदोपि वासनाक्षय-मनोनाशार्थं प्रयत्नः निरंतर-समाधिरूपः आवश्यक एवेत्युक्तं भवति ॥२६८॥

प्रतिबंधे सति प्रत्यग्दृष्ट्या आत्मनि निवासः न संभवतीति तत्प्रति-बंधं तन्निरासोपायं च करुणानिधि-र्भगवान् विस्तरेणोपदिशति। अहं ममेत्यादिना।

अहंममेति यो भावो देहाक्षादावनात्मनि।
अध्यासोयं निरस्तव्यो विदुषा स्वात्मनिष्ठया ॥२६९॥

अनात्मनि देहाक्षादौ अक्षाणि इन्द्रियाणि, आदिपदेन प्राणमनो-बुध्यादि, तत्र अहं मम इति यो भावः अहंता ममता इत्यर्थः। अयमध्यासः विदुषा श्रवणमननवता पुरुषश्रेष्ठेन स्वात्मनिष्ठया स्वात्मनि ब्रह्मणि नितरां स्थितिरूप-निदिध्यासनेन निरस्तव्यः समूलघातं हन्तव्य इत्यर्थः ॥२६९॥

तत्प्रकारमुपदिशति। ज्ञात्वेति।

ज्ञात्वा स्वं प्रत्यगात्मानं बुद्धितद्वृत्तिसाक्षिणम्।
सोहमित्येव सद्वृत्याऽनात्मन्यात्ममतिं जहि॥२७०॥

स्वं बुद्धितद्वृत्तिसाक्षिणं प्रत्यगात्मानं ज्ञात्वा सोहमित्येव सद्वृत्या कालत्रयेपि बाधायोग्यवस्त्वभेदज्ञानेन अनात्मनि बुध्यादौ आत्ममतिं अहंतां जहि नाशय॥२७०॥

भ्रान्तिपरंपराहेतुत्याजनेन भ्रान्तिं त्याजयति। लोकेति।

लोकानुवर्तनं त्यक्त्वा त्यक्त्वा देहानुवर्तनम्।
शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु॥२७१॥

उक्तं हि साधनपंचके "जनकृपानैष्ठुर्यमुत्सृज्यताम्" इति "देहेहंमतिरुज्झ्यताम्" इति च। शास्त्रानुवर्तनं नाम मोक्षप्रयोजक-ग्रन्थपरिशीलनं विना इतरग्रन्थाध्ययनादिकं, दृढतरं कर्माशु संत्यज्यता-मित्युपदेशानुसारेण शास्त्रपदं कर्मशास्त्रपरं वा। तत्त्रयं त्यक्त्वा स्वाध्यासापनयं कुरु अहंतां ममतां च नाशय॥२७१॥

तत्कुत इत्यत आह। लोकवासनयेति।

लोकवासनया जन्तोः शास्त्रवासनयापि च।
देहवासनया ज्ञानं यथावन्नैव जायते॥२७२॥

सर्वे जनाः यथा मां न निंदन्ति यथा स्तुवन्ति तथैव सर्वदा चरिष्यामि इत्यभिनिवेशः लोकवासना, इयं वासना अत्यन्तं प्रतिबंधिका तथा केनापि स्थातुं अशक्यत्वात्। इदंतु जीवन्मुक्तिविवेके वासनाक्षयप्रकरणे विद्यारण्य-गुरुचरणैः विस्तरेणोपपादितं "को लोकमाराधयितुं समर्थः" "विद्यते न खलु कश्चिदुपायः सर्वलोकपरितोषकरो यः। सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः" इति। अत एव तुल्यनिंदास्तुतिः भगवद्-भक्त इत्युक्तं गीतायां। शास्त्रवासना त्रिविधा पाठव्यसनं शास्त्रव्यसनं अनुष्ठानव्यसनं चेति भरद्वाज-दुर्वासो-दाशूरदृष्टान्तैः जीवन्मुक्ति-विवेके सूपपादिता। एवं देहवासनापि आत्मत्वगुणाधान-दोषापनयन-

भ्रान्तिभिः त्रिविधा इत्यादिना विवृता। तत एव विज्ञेया। तिसृभि-रेताभिः वासनाभिः ज्ञानं यथावन्नैव जायते ॥२७२॥

एतत्त्रयमेव सम्यज्ज्ञानप्रतिबंधकं इत्याह प्रामाणिकोक्ति मूलीकृत्य संसारेति।

संसारकारागृह-मोक्षमिच्छोः
अयोमयं पादनिबद्ध-शृंखलम्।
वदंति तज्ज्ञाः पटुवासनात्रयं
योस्माद्विमुक्तः समुपैति मुक्तिम् ॥२७३॥

तज्ज्ञाः ब्रह्मविदः, पटुवासनात्रयं तानवमयातं लोकशास्त्रदेह-वासनात्रयं संसार एव कारागृहं तस्मान्मोक्षं इच्छोः पुरुषस्य, अयोमयं वहुदृढं पादनिवद्धशृंखलं पादयोः निवद्धं शृंखलमितिरूपकं, यथा आयसशृंखलावद्धपादयुग्मः गन्तुं न शक्नोति एवं लोकादिवासनात्रययुतः विष्णोः परमं पदं नैव प्राप्तुं शक्नोतीत्यभिप्रायः। यो नरः अस्मात् पूर्वोक्तवासनात्रयात् विमुक्तः तनूकृतवासनः स मुक्ति समुपैति यथा-वज्ज्ञानेनेति शेषः ॥२७३॥

तत्र प्रतिबंधकवासनापनयने सदृष्टान्तं आत्मवासना-समेधनं कारण-माह। जलादीत्यादिना।

जलादिसंपर्क-वशात् प्रभूतदुर्गन्ध-धूतागरु-दिव्यवासना।
संघर्षणेनैव विभाति सम्यक् विधूयमाने सति बाह्यगंधे ॥२७४॥

अगरोः जलादिसंपर्कवशात् प्रभूतः बहुलः यः दुर्गन्धः तेन धूतागरु-दिव्यवासना सौरभ्यं, संघर्षणेन वाह्यगंधे विधूयमाने अपनीयमाने तिरस्क्रियमाण एव सम्यग्विभाति इतिदृष्टान्तः ॥२७४॥

अंतश्श्रितानन्त-दुरंतवासनाधूलीविलिप्ता परमात्मवासना।
प्रज्ञातिसंघर्षणतो विशुद्धा प्रतीयते चन्दनगंधवत्स्फुटा ॥२७५॥

अंतश्श्रिता या अनन्ता वहुविधा दुरन्ता दुष्फलदा वासना अनात्म-वासना सैव धूली तया विशेषेण लिप्ता अभिभूता परमात्मवासना, प्रज्ञया

"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" इतिश्रुत्या "ब्रह्मात्मनोः शोधितयोः एकभावावगाहिनी। निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते" इति वक्ष्यमाणया, यदतिसंघर्षणं मनसः कोशासंपर्केण स्थापनं ततः विशुद्धा अनात्मवासनाऽसंपृक्ता चंदनगंधवत् स्फुटा प्रतीयते इति दार्ष्टान्तिकम् ॥२७५॥

उक्तमर्थं संगृण्हाति। अनात्मेति।

अनात्मवासनाजालैः तिरोभूतात्मवासना।
नित्यात्मनिष्ठया तेषां नाशे भाति स्वयंस्फुटा ॥२७६॥

अनात्मविषयिण्यः या वासनाः लोकदेहशास्त्रवासनाः "दंभो दर्पोभिमानश्च क्रोधः पारुष्यमेव च" इत्यादिना आसुरसंपत्त्वेन दर्श्यमान-मानसवासनाश्च, तासां जालैः समूहैः आत्मवासना तिरोभूता न्यक्कृता। तेषां अनात्मवासनाजालानां नित्या या आत्मनिष्ठा ब्रह्मणि परिसमाप्तिः तया नाशे स्वयं स्फुटा विविक्ता भाति ॥२७६॥

"अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसंक्रामति" इत्यादिश्रुत्या "शनैः शनैरुपरमेद् बुध्या धृतिगृहीतया। आत्मसंस्थं मनः कृत्वा न किंचदपि चिन्तयेत्" इतिस्मृत्या च कथितमर्थं वासनाक्षयोपायं आह। यथायथेति।

यथा यथा प्रत्यगवस्थितं मनः
तथा तथा मुंचति बाह्यवासनाः।
निश्शेषमोक्षे सति वासनानां
आत्मानुभूतिः प्रतिबन्धशून्या ॥२७७॥

यथा यथा प्रत्यक् अंतः मनः अवस्थितं अभ्यासवैराग्याभ्यां तथा तथा बाह्यवासनाः पुत्रादिषु ममतां अन्नमयादौ अहंतां च मुंचति। वासनानां निश्शेषमोक्षे निर्विकल्पकसमाधिनैरंतर्येण वेदान्तार्थ-विचार-पुरस्सरं क्रियमाणेन "रसोप्यस्य परं दृष्ट्वा निवर्तते" इतिस्मृत्या निश्शेषं यथा सूक्ष्मात्मनापि न स्यात् तथा मूलाज्ञानेन आश्रयेण सह मोक्षे अत्यन्तं निवृत्तौ आत्मानुभूतिः प्रतिबन्धशून्या निरर्गला ॥२७७॥

कार्यनाशनद्वारा कारणं क्षपणीयं इति वासनाकार्य-भ्रान्तिनाशं वासनाक्षये कारणमाह नवभिः श्लोकैः। स्वात्मन्येवेत्यादिभिः।

स्वात्मन्येव सदा स्थित्या मनो नश्यति योगिनः।
वासनानां क्षयश्चातः स्वाध्यासापनयं कुरु ॥२७८॥

योगिनः चित्तस्य राजसीः तामसीश्च वृत्तीः निरुन्धतः सत्वोत्कर्षेण स्वात्मन्येव ब्रह्मण्येव सदा स्थित्या निदिध्यासनेनेत्यर्थः। मनो नश्यति प्रदीपज्वाला-संतानवत् वृत्तिसंतानरूपेण परिणाममानं अन्तःकरणं स्ववेगं त्यक्त्वा निरुद्धं भवति। ततः ब्रह्मसामीप्यबलेन शान्तिदान्तिरूप-शुद्ध-वासनायां दृढायां भवन्त्यां बाह्यनिमित्ते सत्यपि क्रोधाद्यनुत्पत्तिः वासनानां क्षयः, पूर्वापरपरामर्शमन्तरेण सहसा उत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतोः चित्तगतसंस्कार-विशेषस्यैव वासनाशब्दार्थत्वात्। अतः स्वाध्यासापनयं कुरु विपरीतभावनाः निवर्तय। पंचसु कोशेषु सम्यग्विचार्य आत्मबुद्धिं परित्यज ॥२७८॥

राजसतामस-वृत्तिनिरोधरूप-योग एव कथमिति चेदाह। तम इति।

तमो द्वाभ्यां रजः सत्वात् सत्वं शुद्धेन नश्यति।
तस्मात्सत्वमवष्टभ्य स्वाध्यासापनयं कुरु ॥२७९॥

द्वाभ्यां रजस्सत्वाभ्यां तमः नश्यति। प्रसिद्धं हि व्यायामादिना काव्यशास्त्र-विनोदादिना वा आलस्यनिद्रादि-तामसधर्मान् नाशयंतीति। रजः सत्वात् चित्तैकाग्र्यरूपसत्वकार्येण क्रर्मणि प्रवृत्तीश्च त्यजन्तीति रजः सत्वान्नश्यति। तदपि सत्वं शुद्धेन निर्गुणेन नश्यति। निर्गुणप्राप्तौ सत्ववृत्तेः ज्ञानस्यापि नाशात्। तस्मात्सत्वमवष्टम्य अवलंब्य तमः-कृतावरणकालिक-रजःकृतविक्षेप-रूपाणां स्वाध्यासानां भ्रमाणां अपनयं नाशं कुरु ॥२७९॥

ज्ञानसाधनत्वात् शरीरस्य तद्रक्षार्थं तदभिमान आवश्यकः इति चेदाह। प्रारब्धमिति।

प्रारब्धं पुष्यति वपुरिति निश्चित्य निश्चलः।
धैर्यमालंब्य यत्नेन स्वाध्यासापनयं कुरु ॥२८०॥

प्रारब्धं कर्म वपुः शरीरं पुष्यति रक्षतीति निश्चित्य निश्चलः निर्विकारचित्तः धैर्यं विकारहेतावपि अविकृतचित्तत्वं अवलंब्य यत्नेन स्वाध्यासापनयं कुरु ॥२८०॥

तत्प्रकारं विशदयति। नाहमिति।

नाहं जीवः परंब्रह्मेत्यतद्व्यावृत्ति-पूर्वकम्।
वासनावेगतः प्राप्त-स्वाध्यासापनयं कुरु ॥२८१॥

नाहं जीवः किंतु परं ब्रह्म इति न तत् अतत् ब्रह्मभिन्नं तस्य सर्वस्य बुद्धिमनःप्राणशरीरादेः व्यावृत्तिपूर्वकं "नाहं देहो नेन्द्रियाण्यंतरंगं नाहंकारः प्राणवर्गो न बुद्धिः। दारापत्यक्षेत्र-वित्तादिदूरः साक्षी नित्यः प्रत्यगात्मा शिवोहं" इति निषेधपुरस्सरं वासनावेगतः पूर्वं प्राप्ताः ये स्वाध्यासाः तेषां अपनयं कुरु। यद्वा वासनापदेन अनादिकालप्रवृत्तानात्मवासनाः ग्राह्याः तासां वेगतः प्राप्तस्वाध्यासानां अपनयं अतद्व्यावृत्तिपूर्वकं अहं परं ब्रह्मेति निरंतरानुसंधानेन कुरु इति योजनीयम् ॥२८१॥

श्रुत्या युक्त्या स्वानुभूत्या ज्ञात्वा सार्वात्म्यमात्मनः।
क्वचिदाभासतः प्राप्त-स्वाध्यासापनयं कुरु ॥२८२॥

"आत्मैवेदं सर्वं" इत्यादिश्रुत्या, यस्य स्फुरणं विना यन्न स्फुरति तत्ततो नातिरिच्यते यथा मृदो घटः दुंदुभि-शंख-वीणाशब्द-सामान्यविशेषा वा इति श्रुत्यनुसारिण्या युक्त्या "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः, सर्वस्य आत्मभानभास्यत्वात् न तदतिरिक्तत्वं सकलकल्पनाधिष्ठानत्वाच्च "नाधिष्ठानाद् भिन्नतारोपितस्य" इत्यादियुक्त्या, तदनुसारिण्या स्वानुभूत्या आत्मनः सार्वात्म्यं ज्ञात्वा कल्पितानां सर्वेषां वास्तवस्वरूपतां विदित्वा क्वचित्कोशादौ आभासतः चैतन्यप्रतिफलनमात्रात् प्राप्त-स्वाध्यासापनयं कुरु अहंतां नाशय ॥२८२॥

अन्नादानविसर्गाभ्यां ईषन्नास्ति क्रिया मुनेः।
तदेकनिष्ठया नित्यं स्वाध्यासापनयं कुरु ॥२८३॥

अन्नादानेति। मुनेः सततं परमात्ममननशीलस्य अन्नादान विसर्गाभ्यां अन्या क्रिया ईषदपि नास्ति, अतः नित्यं तदेकनिष्ठया तस्मिन्

परमात्मनि एका अनन्यतया या निष्ठा नितरां स्थितिः तस्मिन् एकस्मिन् निष्ठा वा तया स्वाध्यासापनयं कुरु॥२८३॥

तत्वमस्यादिवाक्योत्थ-ब्रह्मात्मैकत्वबोधतः।
ब्रह्मण्यात्मत्वदार्ढ्याय स्वाध्यासापनयं कुरु॥२८४॥

तत्वमसीति। तत्वमस्यादिवाक्येभ्यः उत्थः जातः, यः ब्रह्मात्मनोः एकत्वस्यबोधः ततः तद्बलेन, ब्रह्मण्यात्मत्वदार्ढ्याय दार्ढ्यं च देहात्मज्ञानवत् ब्रह्मात्मत्वज्ञानं तस्मै स्वाध्यासापनयं कुरु अनात्मभ्रान्तौ महावाक्येभ्यः बोधस्यैवाजननात् ॥२८४॥

कियत्कालं भ्रान्तिनिरासप्रयत्नः करणीय इति चेदाह। अहमिति।

अहंभावस्य देहेऽस्मिन् निश्शेषविलयावधि।
सावधानेन युक्तात्मा स्वाध्यासापनयं कुरु॥२८५॥

अस्मिन् स्थूलदेहे अहंभावस्य निश्शेषविलयावधि वासनया सह नाशपर्यन्तं, सावधानेन युक्तात्मा अप्रमत्तान्तःकरणः सन् स्वाध्यासापनयं कुरु॥२८५॥ एवं

प्रतीतिर्जीवजगतोः स्वप्नवद्भाति यावता।
तावन्निरंतरं विद्वन् स्वाध्यासापनयं कुरु॥२८६॥

यावतेति। यावता कालेन जीवस्य जगतश्च प्रतीतिः प्रवुद्धस्य स्वप्नवत् निश्चितमिथ्यात्वकं भाति, तावत्कालपर्यन्तं निरंतरं विद्वन् स्वाध्यासापनयं कुरु॥२८६॥

एवं नवभिः श्लोकैः अनात्मभ्रान्त्यपनयमुपदिश्य आत्मनाशहेतोः विस्मृतेः किंचिदप्यवकाशो न देय इति विस्मृतिहेतु-विशदनेन उपदिशति। निद्राया इति।

निद्राया लोकवार्तायाश्शब्दादेरपि विस्मृतेः।
क्वचिन्नावसरं दत्वा चिन्तयात्मानमात्मनि॥२८७॥

निद्रायाः पंचमी, एवं लोकवार्तायाः शब्दादेरपि विषयात् प्रसज्यमाना या विस्मृतिः आत्मविस्मरणं तस्याः, क्वचित् कदाचिदपि अवसरमवकाशं

अदत्वा आत्मानं परं स्वरूपं, आत्मनि बुद्धौ चिंतय। उक्तं हि "दद्यान्नावसरं किंचित्कामादीनामनागपि" इति। यद्वा सर्वत्र षष्ठी निद्रायाः लोकवार्तायाः शब्दादेः विस्मृतेरपि क्वचिदप्यवसरमदत्वा चिन्तयात्मानमात्मनीत्यर्थः। उक्तं हि मोक्षधर्मेषु "अप्राशन-मसंस्पर्श-मसंदर्शनमेव च। पुरुषस्यैष नियमो मन्ये निश्रेयसं वरम्" इति ॥२८७॥

यदभिमाननिबंधनाः सर्वे दोषाः तं स्थूलदेहं मा कदाचिदप्यात्मत्वेन मंस्था इत्याह। मातापित्रोरिति।

माता-पित्रोर्मलोद्भूतं मलमांसमयं वपुः।
त्यक्त्वा चण्डालवद्दूरं ब्रह्मीभूय कृतीभव ॥२८८॥

मातापित्रोः मलोद्भूतं शुक्लशोणितजन्यं, मलमांसमयं हेतुतः स्वभावतश्च बीभत्समित्यर्थः। वपुः शरीरं चण्डालमिव दूरं त्यक्त्वा तत्रात्मत्वाभिमानमकृत्वा, ब्रह्मीभूय आज्ञानिकं अब्रह्मत्वं विधूय स्वयं ब्रह्मेति विज्ञाय, कृती कृतकृत्यो भव। कृती धीमान्वा ॥२८८॥

त्यक्त्वा स्थूलाभिमानं तत्परिच्छेदात्परिच्छिन्नमिव भासमानं जीवमपि उपाधिप्रविलापनेन विलापयेत्याह। घटेति।

घटाकाशं महाकाश इवात्मानं परात्मनि।
विलाप्याखण्डभावेन तूष्णीं भव सदा मुने ॥२८९॥

महाकाश एव घटेनावच्छिद्यमानः घटाकाश उच्यते। एवं बुध्याद्युपाधिना परात्मा जीव उच्यते। धिया घटस्य पृथक्करणे घटाकाशो महाकाश एव। एवं उपाधीनां सर्वोपादान-सर्वकल्पनाधिष्ठान-ब्रह्माव्यतिरिक्तत्व-ज्ञानेन स्वरूपतः निषेधे कृते अखण्डभावेन परिच्छेदापादकस्याभावात् अपरिच्छिन्नाकारतया सदा मुने तूष्णीं भव कर्तव्यान्तराभावात्। उक्तं हि गीतासु "एतद् बुध्वा बुद्धिमान्स्यात् कृतकृत्यश्च भारत" इति ॥२८९॥

स्वप्रकाशमधिष्ठानं स्वयंभूय सदात्मना।
ब्रह्माण्डमपि पिण्डाण्डं त्यज्यतां मलभाण्डवत् ॥२९०॥

स्वप्राकाशमिति। स्वप्रकाशं चिद्रूपतया स्वतः सिद्धं, अधिष्ठानं सर्वकल्पनानां मायाविद्ययोश्च कल्पनाधिष्ठानं, स्वयंभूत्वा सदात्मना. ब्रह्माण्डं चतुर्दशभुवनात्मकं पिण्डाण्डमपि स्वशरीरमपि, मलभाण्डवत् मलपूर्णघटवत् त्यज्यतां नैव स्मर्यतामित्यर्थः "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इति प्रमाणात्। सदात्मना त्यागो नाम नास्तित्वापादानमेव ॥२९०॥

चिदात्मनि सदानन्दे देहारूढामहंधियम्।
निवेश्य लिंगमुत्सृज्य केवलो भव सर्वदा॥२९१॥

चिदात्मनीति। देहारूढामहंधियं अहमितिमतिं सदानन्दे चिदात्मनि स्वयंप्रकाशनित्यानन्दस्वरूपे परमात्मनि निवेश्य आधाय, लिंगं सूक्ष्मशरीरं उत्सृज्य तादात्म्येनानभिमत्य सर्वदा केवलो भव असंगो भव सजातीय-विजातीय-स्वगतभेदरहितो वा भव। भेदस्याज्ञानिकत्वात् परमात्माहमिति ज्ञाने तस्य नाशात् कैवल्यं सहजमभिव्यज्यत इति भावः॥२९१॥

यत्रैषजगदाभासः दर्पणान्तः पुरं यथा।
तद् ब्रह्माहमिति ज्ञात्वा कृतकृत्यो भविष्यसि॥२९२॥

यत्रेति। स्वच्छे अच्छिद्रे दर्पणे अन्तः यथा पुरं जनगिरिनदी प्रासादादिरूपं पुरं प्रतिफलति अन्तरवर्तमानमपि दृश्यते तथा यत्र ब्रह्मणि एष जगदाभासः मिथ्याभूतं जगत् भाति तद् ब्रह्माहमिति ज्ञात्वा कृतकृत्यो भविष्यसि॥२९२॥

यत्सत्यभूतं निजरूपमाद्यं चिदद्वयानन्द-मरूपमक्रियम्।
तदेत्य मिथ्यावपुरुत्सृजैत-च्छैलूषवद्वेषमुपात्तमात्मनः॥२९३॥

यदिति। चित् अद्वयं च तत् आनन्दं च अद्वयानन्दं अरूपमक्रियं यदाद्यं सत्यभूतं निजरूपं वास्तविकं तव स्वरूपं तदेत्यप्राप्य ज्ञानमेवात्र प्राप्तिः कण्ठचामीकरवत्, एतत् मिथ्याभूतं वपुरुत्सृज त्यक्ताहंभावं कुरु। यथा शैलूषः नटः आत्मनः उपात्तं वेषं उत्सृजति तद्वत्॥२९३॥

पुनरात्मानं अहंपदार्थं शरीरादिभ्यो विवेचयति ज्ञानदार्ढ्याय। सर्वात्मनेति।

सर्वात्मना दृश्यमिदं मृषैव
नैवाहमर्थः क्षणिकत्वदर्शनात्।
जानाम्यहं सर्वमितिप्रतीतिः
कुतोहमादेः क्षणिकस्य सिध्येत् ॥२९४॥

अहंपदार्थः सत्यः नित्यश्च, इदं दृश्यं मृषैव क्षणिकत्वदर्शनात् क्षणे अहं पश्यामीति क्षणे अहं शृणोमीति एवं अहं जिघ्रामि रसयामि गच्छामीत्यादिना यत्र यत्र अहंवृत्तिसंवन्धः ससः अहमहमित्यभिलप्यते नहि वहूनां अहंत्वं संभवति आत्मनः एकत्वात्। यदा अहंवृत्तिसम्वन्धः तदैषां भानं वृत्तेः क्षणिकत्वात् सम्बद्धानां च तथात्वमेव अभासमानस्य सत्वे प्रमाणाभावात् अतः जडत्वेन क्षणिकत्वेन सर्वात्मना सर्वप्रकारैश्च इदं दृश्यं मृषैव नैवाहमर्थः। तदुपपादयति अहं सर्व जानामीति प्रतीतिः क्षणिकस्य अहमादेः कथं सिध्येत् इति। नहि चक्षुः रसं जानाति श्रोत्रं वा रूपं अतः "गन्धाय घ्राणं" इत्यादिश्रुत्या तेषां रूपाद्याकार-वृत्तिकरणत्वेपि नाहमर्थत्वम्। नहि मनो वा स्वकीयवृत्तीः ज्ञातुमीष्टे जडत्वात् कर्तृ-कर्मविरोधाच्च ॥२९४॥

अतः आत्मा अन्यः। तत्स्फुटयति। अहमिति।

अहंपदार्थ-स्त्वहमादिसाक्षी
नित्यं सुषुप्तावपि भावदर्शनात्।
ब्रूते ह्यजो नित्य इतिश्रुतिस्स्वयं
तत्प्रत्यगात्मा सदसद्विलक्षणः ॥२९५॥

अहमादेः दृश्यस्य अहंपदार्थत्वाभावे कस्य तथात्वमिति चेत् आह अहंपदार्थस्तु तुशब्दः दृश्यनाम् अहंपदार्थत्वव्यावर्तकः। अहमादिसाक्षी अहमादीनां सर्वेषां अज्ञानादिदृश्यानां साक्षी नित्यं वस्तु सुषुप्तावपि यदा अहंवृत्तेरभावः लयः तस्यां सुषुप्तावपि भावदर्शनात् "सुखमह-मस्वाप्सम्" इति। अनुभवे विवदमानं आह ब्रूत इति। "अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यात्मा नित्य इति ब्रूते श्रुतिः स्वयं, तत् तस्मात् कारणात् प्रत्यगात्मा सच्चिदानन्दरूपः आत्मा सदसद्विलक्षणः व्यक्ताव्यक्तभिन्न इत्यर्थः ॥२९५॥

विकारिणां सर्वविकारवेत्ता
नित्योऽविकारो भवितुं समर्हति ।
मनोरथस्वप्न-सुषुप्तिषु स्फुटं
पुनःपुनः दृष्टमसत्वमेतयोः ॥२९६॥

विकारिणां देहादीनां जन्मादिनाशान्ताः ये विकाराः तेषां सर्वेषां वेत्ता यः नित्यः अविकारश्च स भवितुं समर्हति युज्यते अनित्यत्वे सर्वविकारवेत्तृत्वासंभवात्। स्वस्य विकारवत्वे कर्तृ-कर्मविरोधेन तज्ज्ञानासंभवात् अनित्यत्वाच्च स्वविकारज्ञाने व्यापृतस्य इतरविकारि-विकारज्ञानासंभवाच्च। अतः नित्यत्वं अविकारत्वं च वक्तव्यम्। एतेन बुद्धि-सुखदुःखादिमत्वेन स्वीक्रियमाणस्य तार्किकात्मनः नित्यत्वं दुर्घटमिति सूचितम्। पिण्डतदभिमानिनोः आत्मत्वं न संभवतीत्याह मनोरथेति। मनोरथे मनोराज्ये स्वप्ने सुषुप्तौ च एतयोः पिण्डतदभिमानिनोः पुनः पुनरसत्वं स्फुटं दृष्टं प्रसिद्धं धारावाहिक्यां कल्पनायां व्यासक्तमनसा वर्षवातातपादि-वाधा न ज्ञायते तदा शरीरभानाभावात्। तत्सत्वेपि तत्राभिमानाभावात् अभिमानिनश्च विशिष्टस्याभावो ज्ञेयः। एवं स्वप्ने शरीरान्तरस्यैव सृष्टेः तदभिमान्यपि अन्य एव। सर्वदा साक्षी एकः अत एवोक्तं "स्वप्नेर्थशून्ये सृजति स्वशक्त्या भोक्त्रादिविश्वं मन एव सर्वं" इति। सुषुप्तौ पिण्डाहंकारयोः अभावः सिद्ध एव इति स्फुटं दृष्टमित्युक्तम्। एतेन सर्वभावाभावसाक्षी नित्यः एकरूपः इत्युक्तं भवति ॥२९६॥

अतोभिमानं त्यज मांसपिण्डे
पिण्डाभिमानिन्यपि बुद्धिकल्पिते ।
कालत्रयाबाध्यमखण्डबोधं
ज्ञात्वा स्वमात्मानमुपैहि शान्तिम् ॥२९७॥

अतः अनित्यत्वात् विकारित्वाच्च मांसपिण्डे बुद्धिकल्पिते पिण्डाभिमानिन्यपि चित्प्रतिबिंबे अभिमानं आत्मबुद्धिं त्यज। तर्ह्यहं क इति चेत् कालत्रयावाध्यं नित्यबोधं स्वं आत्मानं ज्ञात्वा शान्तिं आत्यन्तिक-दुःखनिवृत्तिं उपैहि मुक्तिं लभस्व ॥२९७॥

त्यजाभिमानं कुलगोत्रनाम-
रूपाश्रमेष्वार्द्र-शवाश्रितेषु ।
लिंगस्य धर्मानपि कर्तृतादीं-
स्त्यक्त्वा भवाखण्ड-सुखस्वरूपः ॥२९८॥

स्वाध्यासापनयं कुरु इत्यत्रोक्तं अर्थ स्फुटयति । त्यजेति । आर्द्रशवाश्रितेषु स्थूलदेहाश्रितेषु कुलगोत्रनाम-रूपाश्रमेषु अभिमानं ममतां त्यज । एवं लिंगस्य सूक्ष्मदेहस्य धर्मान् कर्तृतादीनपि त्यक्त्वा अनित्यत्वात् विकारित्वाच्च स्थूलसूक्ष्मयोः अखण्डसुखस्वरूपः भव इत्युपदेशः आशीश्च ॥२९८॥

सर्वानर्थहेतुं आत्मानुभूतौ मुख्यं प्रतिबंधकं आह यस्मिन्ननुन्मूलिते इतरन्नैव जायते "सन्त्यन्य" इत्यादिभिः त्रयोदशभिः ॥

सन्त्यन्ये प्रतिबन्धाः पुंसः ससांरहेतवो दृष्टाः ।
तेषामेषां मूलं प्रथमविकारो भवत्यहंकारः ॥२९९॥

पुंसः पुरुषस्य संसारहेतवः रागद्वेषादयः अन्ये अहंकारादन्ये प्रतिबन्धाः आत्मज्ञानानुत्पत्तिप्रयोजकाः दृष्टाः । तेषामेषां अज्ञानप्रथमविकारः अहंकारः मूलं भवति ॥२९९॥

यावत्स्यात्स्वस्य संबंधोऽहंकारेण दुरात्मना ।
तावन्नलेशमात्रापि मुक्तिवार्ता विलक्षणा ॥३००॥

दुरात्मना सकलबन्धहेतुतया दुष्टस्वभाववता अहंकारेण, यावत्स्वस्य पुंसः संबन्धः स्यात् तावत्पर्यन्तं, विलक्षणा बंधविरुद्ध-नित्यनिरतिशय-सुखस्वरूपा या मुक्तिः तद्वार्ता लेशमात्रापि न संभवति । सर्वबन्धमूलभूताऽहंकारवान् न सुतरां मुक्तशब्दार्ह इति भावः ॥३००॥

तदभावे मुक्तिमाह । अहंकारेति ।

अहंकारग्रहान्मुक्तः स्वरूपमुपपद्यते ।
चन्द्रवद्विमलः पूर्णः सदानन्दः स्वयं-प्रभः ॥३०१॥

अहंकार एव ग्रहः गृण्हातीति राहुः तस्मात्स्वरूपतिरोधायकान्मुक्तः चन्द्रवत् स्वरूपमुपपद्यते प्रत्यक्त्वेन प्राप्नोति। स्वस्वरूपं कीदृगित्यत आह विमलः शुद्धः पूर्णः अपरिच्छिन्नः सदानन्दः नित्यसुखरूपः स्वयंप्रभः चिद्रूपतया स्वयंप्रकाशः इत्यर्थः। एतद्धर्मचतुष्टयं राहुमुक्ते चन्द्रेपि समानं। तत्र सदानन्दो येन इत्यर्थो वाच्यः। स्वरूपप्राप्तेरेव मुक्तित्वात् अहंकारमोक्षे मुक्तिः सिध्यतीत्युक्तम् ॥३०१॥

तस्य कल्पिततया नाशं संभावयति। य इति।

यो वा पुरैषोहमिति प्रतीतः बुध्याऽविविक्तस्तमसातिमूढया।
तस्यैव निश्शेषतया विनाशे ब्रह्मात्मभावः प्रतिबन्धशून्यः ॥३०२॥

तमसा अज्ञानेन अतिमूढया आत्मस्वरूपं विविच्य ज्ञातुमसमर्थया बुध्या अविविक्तः पुरा एषोहमिति यो वा, वेति प्रसिद्धौ प्रतीतः परिच्छिन्नतया ज्ञातः तस्य निश्शेषतया विनाश एव इत्येवकारः भिन्नक्रमः. ब्रह्मात्मभावः प्रतिवन्धशून्यः। नोचेत् विपरीतभावना यावत्पर्यन्तं न तावदपरिच्छिन्न-ब्रह्मात्मत्वज्ञानं सुलभम् ॥३०२॥

तस्याहंकारस्य नाशः कथमिति चेदाह। ब्रह्मेति।

ब्रह्मानन्दनिधि-र्महाबलवताऽहंकारघोराहिना
संवेष्ट्यात्मनि रक्ष्यते गुणमयैश्चण्डैस्त्रिभि-र्मस्तकैः।
विज्ञानाख्यमहासिना द्युतिमता विच्छिद्य शीर्षत्रयम्
निर्मूल्याहिमिमं निधिं सुखकरं धीरोनुभोक्तुं क्षमः ॥३०३॥

सुखबोधार्थं रूपकं कल्पयति। ब्रह्मानन्द एव निधिः हिरण्यनिधिवत् सः महाबलवता विषयक्षीरपानेन रूढमूलतया महाबलवता, अहंकार एव घोराहिः भयानकसर्पः तेन गुणमयैः सत्वरजस्तमोरूपैः त्रिभिः चण्डैः भीकरैः मस्तकैः आत्मनि स्वस्मिन् स्थितैः संवेष्ट्य आवृत्य रक्ष्यते अनुभोक्तुमनर्हः क्रियते। विज्ञानाख्यमहासिना निदिध्यासनजन्यानुभवनाम्ना महता खड्गेन द्युतिमता निशितेन स्वयंप्रकाशात्मविषयकतया द्युतिमत्वं, शीर्षत्रयं सत्व-रजस्तमोगुणात्मकं विच्छिद्य अहिं अहंकारसर्पं निर्मूल्य निरवशेषं कृत्वा,

सुखकरं इमं निधिं ब्रह्मानन्दाभिधं, धीरः वश्यात्मा अनुभोक्तुं क्षमः समर्थः। एतेन सम्यग्विवेकजनित-विज्ञाननाश्यत्वं अहंकारस्योक्तम् ॥३०३॥

यावद्वा यत्किंचिद्विषदोषस्फूर्ति-रस्ति चेद्देहे।
कथमारोग्याय भवेत् तद्वदहंतापि योगिनो मुक्त्यै ॥३०४॥

वासनात्मनापि साहंता नावशेषणीयेत्याह। पूर्वश्लोके निर्मूल्येत्युक्तं विव्रियते। यावदिति। देहे यावद्वा यत्किंचित् ईषदपि इति-पदद्वयस्यार्थः। विषदोषस्फूर्तिरस्ति चेत् कथमारोग्याय भवेत्। तद्वदहंतापि वासनात्मना वा यावदस्ति तावद्योगिनो मुक्त्यै प्रतिबंधिका इति भावः। अतः निरवशेषमुन्मूलनं कार्यं तस्याः ॥३०४॥

तदा तु

अहमोत्यंतनिवृत्या तत्कृतनानाविकल्प-संहृत्या।
प्रत्यक्तत्वविवेकादयमह-मस्मीति विन्दते तत्वम् ॥३०५॥

अहमः अहंकारस्य अत्यन्तनिवृत्या अपुनरुत्पादं नाशेन, तत्कृत-नानाविकल्प-संहृत्या निमित्तापायान्नैमित्तिकानां अपाय इति द्योतयति तत्कृतेति। प्रथमविकारभूताहंकारमूलकानां नानाविधानां कुलगोत्र-नाम-रूपा-श्रमाद्याश्रितानां अभिमानानां विविधकल्पनारूपाणां संहृत्या, अनेन सर्वभ्रान्तिनिरास उक्तः। तदा प्रत्यक्तत्वविवेकात् आत्मयाथात्म्यस्य विविच्य अनात्मासंकीर्णतया ज्ञानात् अयमहमस्मीति तत्वं विन्दते अपरोक्षतया जानाति ॥३०५॥

अहंकर्तर्यस्मिन् अहमिति-मतिं मुंच सहसा
विकारात्मन्यात्मप्रतिफलजुषि स्वस्थितिमुषि।
यदध्यासात्प्राप्ता जनिमृतिजरा-दुःखबहुला
प्रतीचश्चिन्मूर्तेः तव सुखतनोः संसृतिरियम् ॥३०६॥

अहमिति। प्रतीचः आन्तरस्य चिन्मूर्तेः ज्ञानशरीरस्य, सुखतनोः आनन्दघनस्य, तव आत्मनः यदध्यासात् यस्मिन्नहमिति तादात्म्यभ्रान्त्या, जनिमृतिजरादुःखबहुला स्पष्टं, इयमनुभवसिद्धा संसृतिः, प्राप्ता प्राप्तेव भाति, अस्मिन् विकारात्मनि सूक्ष्मभूतकार्ये, आत्मप्रतिफलजुषि आत्म-

प्रतिबिंबग्राहिणि, स्वस्थितिमुपि स्वस्य या सहजा स्थितिः चिदानन्दरूपता तां मुष्णातीति स्वस्थितिमुट् तस्मिन् पराक्त्वापादकत्वेन स्वस्वरूपच्यावके अहंकर्तरि अहंकारे, अनात्मनि अहमितिमतिं, सहसा मुंच इति परमोपदेशः ॥३०६॥

उक्तमर्थं बुद्धौ सम्यगारोहाय कृपया पुनराह। सदेति।

सदैकरूपस्य चिदात्मनो विभो-
रानन्दमूर्तेरनवद्यकीर्तेः।
नैवान्यथा क्वाप्यविकारिणस्ते
विनाहमध्यास-ममुष्य संसृतिः ॥३०७॥

सर्वाणि विशेषणानि हेतुगर्भाणि अहंकाराध्यासेन नानारूपता जडता परिच्छिन्नता दुःखं दुर्यशस्त्वं च प्राप्तं इति द्योतयितुम्। सदा नित्यं एकरूपस्य, सदेकरूपस्य इति वा पाठः कालत्रयाबाध्यैकस्वरूपस्येत्यर्थः। चिदात्मनो विभोः अपरिच्छिन्नस्य आनन्दमूर्तेः अनवद्यकीर्तेः श्रुतिशिखरेषु परब्रह्मस्वरूपतया बोध्यमानतया नित्यशुद्धबुद्धमुक्तस्वरूपस्य अविकारिणः ते तव, अमुष्य पराचः अहंकारस्य, अहमध्यासं विना तादात्म्यभ्रान्तिमन्तरा अहंकारे अहमिति या बुद्धिः तां विनेति यावत्, अमुष्येति षष्ठी संबन्धार्थिका संसृतिः जनिमृतिजरादुःखजटिला अन्यथा प्रकारान्तरेण वस्तुत इति यावत् नैव संभवति ॥३०७॥

यस्मादेवं

तस्मादहंकारमिमं स्वशत्रुं
भोक्तुर्गले कण्टकवत्प्रतीतम्।
विच्छिद्य विज्ञानमहासिना स्फुटं
भुंक्ष्वात्म-साम्राज्यसुखं यथेष्टम् ॥३०८॥

भुंजानस्य कण्ठे कण्टकमिव प्रतिपन्नं स्वरूपानन्दानुभव-प्रतिबन्धकतया स्वशत्रुं इमं प्रत्यक्षसिद्धं अहंकारं, तस्मादसंसारिणोपि संसारापादकत्वात्, विज्ञानमहासिना पंचकोशविवेकजनित-विज्ञाननिशितखड्गेन

विच्छिद्य अपुनर्भवं विनाश्य आत्मसाम्राज्यसुखं अनन्याधीननिरंतराखण्डानंदं यथेष्टं निरर्गलं स्फुटं करतलामलकवत् भुंक्ष्व अनुभव ॥३०८॥

अनन्तरकर्तव्यमुपदिशति। तत इति।

ततोहमादे-र्विनिवर्त्य वृत्तिं
संत्यक्तरागः परमार्थलाभात्।
तूष्णीं समास्वात्मसुखानुभूत्या
पूर्णात्मना ब्रह्मणि निर्विकल्पः॥३०९॥

ततः अहंकारादौ तादात्म्यभ्रान्तिनाशानन्तरं, अहमादेः पंचमी, अहंकारादेः सकाशात् वृत्तिं विनिवर्त्य मनः पराङ्मुखीकृत्य, परमार्थलाभात् नित्यस्वप्रकाशानन्दरूपोत्कृष्टप्रयोजनलाभात्, वहिः संत्यक्तरागः विषयविमुख इति यावत्, आत्मसुखानुभूत्या निर्विकल्पः पूर्णात्मना ब्रह्मणि तूष्णीं समास्व॥३०९॥

पुनःपुनः उपदिष्टस्योपदेशे कारणमाह। समूलकृत्तोपीति।

समूलकृत्तोपि महानहं पुन-
र्व्युल्लेखित-स्स्याद्यदि चेतसा क्षणम्।
संजीव्य विक्षेपशतं करोति
नभस्वता प्रावृषि वारिदो यथा॥३१०॥

महान् अनादिकालात् शाखोपशाखतया वृद्धः अहं अहंकारः, समूलकृत्तोपि विवेकविज्ञानेन स्वमूलभूतेन अज्ञानेन सह छिन्नोपि पुनःचेतसा यदि क्षणं व्युल्लेखितः प्रबुद्धेन पुरुषेण भीकरस्वप्न इव स्मृतः स्यात्, संजीव्य पुनरुत्पद्य विक्षेपशतं करोति। तत्र दृष्टान्तः शरदादौ नष्टोपि नामावशेषतां नीतोपि वारिदः मेघः, प्रावृषि वर्षतौ नभस्वता वायुना नीतः संभृतसलिलः यथा वर्षति तथा॥३१०॥

नष्टस्य कथं जीवनमिति चेत् मृतस्यामृतसेक इव विषयानुचिन्तनमेव तत्र हेतुरिति सदृष्टान्तमाह। निगृह्येति।

निगृह्य शत्रोरहमोवकाशः क्वचिन्नदेयो विषयानुचिन्तया।
स एव संजीवनहेतुरस्य प्रक्षीणजंबीरतरोरिवांबु ॥३११॥

निगृह्य निग्रहं कृत्वा शत्रोरहमः सर्वनाशहेतोः अहंकारस्य, विषयानुचिन्तया क्वचिदप्यवकाशो न देयः, स एव विषयानुचिन्तैव अस्य अहंकारस्य संजीवनहेतुः। वक्ष्यति हि "न प्रमादादनर्थोन्यो ज्ञानिनः स्वस्वरूपतः। ततो मोहस्ततोहंधीस्ततो बन्धस्ततो व्यथा" इति, संजीवनहेतुरिति विधेयप्राधान्यात् विषयानुचिन्तायाः स एवेति पुंलिगव्यपदेशः। क्षीणस्य पुनर्वृद्धौ दृष्टान्तमाह प्रक्षीणेति। प्रक्षीणजंबीरतरोः शुष्कस्यापि जंबीरवृक्षस्य अंबु जलं वृद्धिहेतुभूतं भवति। एवं विवेकविज्ञानेन नाशितोप्यहंकारः प्रमादाद्विषयानुचिन्ता यदि क्रियेत पुनः प्राप्तजीवनः संसारयतीति भावः। विषयानुचिन्तायामपि नष्टस्याहंकारस्य कथमुज्जीवनं इतिशंकायां "विषयेष्वाविशच्चेतः संकल्पयति तद्गुणान्। सम्यक्संकल्पनात्कामः कामात्पुंसः प्रवर्तनं। ततः स्वरूपविभ्रंशः विभ्रष्टस्तु पतत्यधः। पतितस्य विना नाशं पुनर्नारोह इष्यते" इति प्रणालिकया विषयेषु कामः संकल्पजन्यः संकल्पश्च सम्यक्त्वबुद्धिः आनन्दजनकत्वज्ञानं, सचानन्दः वैषयिकः मनस एव। यदि संततं स्वस्वरूपनिष्ठः तदा कुतः विषयचिन्ता कुतस्तरां तेषु संकल्पः कुतस्तमां कामः। ततः स्वरूपविस्मृतिः विषयचिन्तया भवति। यदा विस्मृतं स्वरूपं तदा अहंकारमेव आत्मत्वेन मन्यते तत्राहंधियं विना देहानुकूलतया प्रतीयमानेषु विषयेषु कामानुत्पत्तेः। ततः अहंकारद्वारा मनःप्राणस्थूलदेहादिकं आत्मत्वेन मत्वा पूर्ववत् विषयान्कामयमानः संसरति, तदिदमुक्तं पूर्वं "ज्ञाते वस्तुन्यपि बलवती वासनानादिरेषा, कर्ता भोक्ताप्यहमिति दृढा याऽस्य संसारहेतुः। प्रत्यग्दृष्ट्यात्मनि निवसता सापनेया प्रयत्नात्, मुक्तिं प्राहुस्तदिह मुनयो वासनातानवं यत्" इति सूत्रेण श्लोकेन। अनन्तरग्रन्थः तद्विवरणरूपः ज्ञातवस्तुनः पुरुषस्य निरंतर ब्रह्मनिष्ठाम् द्रढयति॥३११॥ तत्र यास्य संसारहेतुरित्यस्यार्थमाह। देहात्मनेति।

देहात्मना संस्थित एव कामी विलक्षणः कामयिता कथं स्यात्।
अतोर्थ-संधानपरत्वमेव भेदप्रसक्त्या भवबन्धहेतुः॥३१२॥

देहात्मना संस्थित एव कामी, निरंतरानन्दस्वरूपेण स्थितौ कुतः क्षणिकानन्दहेतुषु कामः ? तेन स्वरूपभ्रंशः कथितः। तदिदमुक्तं विलक्षणः कामयिता कथं स्यादिति। "आत्मानं चेद्विजानीयात् अयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनु संज्वरेत्" इतिश्रुतेः, "आप्त-कामं आत्मकामं अकामं शोकान्तरम्" इति च। अतोर्थसंधानपरत्वमेव विषयानुचिन्तनसक्तत्वमेव स्वरूपविभ्रंशनद्वारा देहादौ अहंतामाबध्य भेद-प्रसक्त्या भेदप्रसंजनेन भवबन्धहेतुः, नो चेत् सदा स्वरूपनिष्ठस्य काम्य-कामयितृ-कामनादिभेदः कुतस्त्य इति भावः ॥३१२॥

तावतापि नष्टस्याहंकारस्य संजीवनं कथमिति चेदाह। कार्येति।

कार्यप्रवर्धनाद्बीज-प्रवृद्धिः परिदृश्यते।
कार्यनाशाद्बीजनाशस्तस्मात्कार्यं निरोधयेत् ॥३१३॥

लोके कार्यप्रवर्धनात् कार्यस्यांकुरादेः प्रकर्षेण स्कंधशाखोपशाखादि-रूपेण वर्धनात् उपचयात् बीजप्रवृद्धिः परिदृश्यते बीजाभावे तथा वृद्धेः असंभवात् कीटादिभक्षिते बीजे अंकुरादीनामनुत्पत्तेः। अत एकमपि बीजं धरणि-सलिल-संयोग-दोहदादिना सम्यक्प्रवृद्धं अंकुरपत्र-स्कंधशाखा-पुष्पफलरूपेण वृद्धिं प्राप्य सहस्रशः बीजानि जनयतीति परिदृश्यते। कार्य-नाशात् बीजनाशोपि, अंकुरादिनिमित्तस्य बीजस्यैव नाशे पुनः फलानुत्पत्त्या बीजानि कुतस्त्यानि। अतः कार्यं विषयानुचिन्तनं भवति चेत् विकारेषु प्रथमो योहंकारः तं विना नैव भवति, विषयानुचिन्तनवृध्या बीजभूताहंकारो वृद्धो ज्ञेयः। एवं विवेकविज्ञाननाशितोप्यहंकारः अनादिकालप्रवृत्ततया वासनात्मना शिष्यमाणः सदा प्रत्यग्दृष्ट्या आत्मनिनिष्ठाभावे वृद्धिं प्राप्य पुनः संसारमापादयेत्। अतः निरंतरब्रह्मनिष्ठया अप्रमादेन स्थितौ विषयानुचिन्तनादे-रनवकाशात् वासनात्मनापि न शिष्यते। तस्मात्कार्यं निरोधयेत् विषयानुचिन्तनं न कुर्यात् ॥३१३॥

तस्य संसारसंपादकत्वमुपपादयति। वासनेति।

वासनावृद्धितः कार्यं कार्यवृध्या च वासना।
वर्धते सर्वथा पुंसः संसारो न निवर्तते ॥३१४॥

यथा एकोपि स्फुलिंगः सूक्ष्मोपि शुष्कतृणसंयोगाद्वृद्धिं प्राप्य महानग्निर्भूत्वा सर्वं वनमेव दहेत्, एवं वासनात्मना स्थितोप्यहंकारः विषयानुचिन्तनेन आत्मानं स्वरूपतः प्रच्याव्य स्वयं तत्प्रतिफलनवलेन अनेकाकारेण परिणममानः जातं विवेकमपि न्यक्कुर्वन् विवेकात्प्रागिव भ्रान्तिपरंपरां कामकर्मादीनि च वितन्वन् स्वयं प्रवर्धमानः निवृत्तप्रायमपि संसारं पुनः प्रवर्तयेत्। अतः अप्रमादेन भवितव्यम् इत्यह वासनावृद्धित इति। कार्यं विषयचिन्ता। स्वरूपानन्दविस्मृत्या विषयलाभार्थं प्रयत्नः अलाभे दुःखं, लाभे हर्षः, हर्षे दर्पः, दर्पे धर्मातिक्रमणं, तेन धियो मालिन्यं, तेन पुनरात्मग्रहणसामर्थ्याभावः, ततश्च सर्वदा देहाद्यात्मत्वं, तेन जरामरणजन्मादिरूप-संसाराविच्छेदः इति पुंसः संसारो न निवर्तत इत्युक्तम् ॥३१४॥

तस्मात्

संसारबन्धविच्छित्त्यै तद्द्वयं प्रदहेद्यतिः।
वासना प्रेर्यते ह्यन्तः चितया क्रियया बहिः ॥३१५॥

यतिः प्रयत्नशीलः पुमान् संसारबन्धविच्छित्त्यै संसारहेतुभूतदेहात्मत्वादि-सकल-बंधविनाशाय तद्द्वयं वासनातत्कार्यरूपं द्वयं प्रदहेत् प्रकर्षेण भस्मीकुर्यात्। यथा भस्मीभूतं बीजं न रोहति तथा कुर्यात्। करुणया तद्वृत्तिनिमित्तं तन्नाशोपायं च कथयति वासनेति। वासना चितया बहिः क्रियया च हि यस्मात् अन्तःप्रेर्यते अतः प्रदहेत्। पूर्वं कार्यशब्देन कथितं स्फुटयति चिन्तया मानस्या बहिःक्रियया च इति। अन्तश्चिन्ता बहिश्शरीरादिना क्रिया। चित्प्रतिबिंब-बलाभावे जडस्य मनसः क्रियाजनक-चितासामर्थ्यं नास्ति। तत्र चित्प्रतिफलनं च अहंकारद्वारैव। जडस्य शरीरस्य कर्म-करणसामर्थ्यमपि मनआदिद्वारा चिदनुप्रवेशादेव। तस्मात् चिन्तया बहिःक्रियया च सूक्ष्मात्मना स्थितः अहंकारः वृद्धिं प्राप्त इति विज्ञेयम् ॥३१५॥

ताभ्यां प्रवर्धमाना सा सूते संसृतिमात्मनः।
त्रयाणां च क्षयोपायस्सर्वावस्थासु सर्वदा ॥३१६॥

सर्वत्र सर्वतः सर्वब्रह्ममात्रावलोकनम् ।
सद्भाव-वासनादार्ढ्यात् तत्त्रयं लयमश्नुते ॥३१७॥

ताभ्यां चिन्ताक्रियाभ्यां प्रवर्धमाना सा वासना, आत्मनः संसृति सूते जनयति। पूर्वोक्तरीत्या त्रयाणां च वासना-चिन्ता-क्रियारूपाणामपि क्षयोपायः सर्वावस्थासु सर्वदा सर्वत्र सर्वतः कालतः देशतः वस्तुतश्च, जाग्रदाद्यवस्थासु ब्रह्मव्यतिरेकेण किमपि नास्ति "इदं सर्वं यदयमात्मा" "ब्रह्मैवेदं विश्वं" इत्यादिश्रुतिभिः "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" "तदनन्यत्वमारम्भण-शब्दादिभ्यः" इत्यादिसूत्रैः मृल्लोहदुंदुभ्यादिदृष्टान्तैश्च यश्चोरः स स्थाणुः यद्रजतं सा शुक्तिः इतिवत् सर्वत्र सर्वत्वं बाधित्वा केवलाधिष्ठानभूतब्रह्मव्यतिरेकेण किमपि नास्तीति सर्वब्रह्ममात्रावलोकनं। एवं यदि ज्ञानं तदा "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इतिश्रुत्यनुसारेण "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इति स्मृत्या च क्व विषयाः क्वतरां तच्चिन्ता क्वतमां बहिःक्रिया। सर्वब्रह्ममात्रावलोकनेन सद्भाव-वासनादार्ढ्ये तत्त्रयं वासना-चिन्ता-क्रियारूपं त्रयं लयं नाशमश्नुते प्राप्नोति॥३१७॥

तथा सर्वं ब्रह्मेत्यवलोकनासामर्थ्ये प्रत्युपायमाह कार्यनिरोधेन कारणं निरोद्धव्यमिति । क्रियानाश इति।

क्रियानाशे भवेच्चिन्तानाशोऽस्माद्वासनाक्षयः।
वासनाप्रक्षयो मोक्षस्सजीवन्मुक्तिरिष्यते ॥३१८॥

पूर्वपूर्वस्य उत्तरोत्तरज्ञापकत्वं वा। वासनां विना चिन्तायाः तां विना क्रियायाः अभावात् कार्यनाशात् कारणनाशोनुमेय इति भावः। तथाच नैष्कर्म्येणावस्थानपर्यन्तं प्रयत्नः पुरुषेण कर्तव्यः। तदा वासनानां प्रकर्षेण क्षयः सिध्यत्येव सएव मोक्षः स एव जीवन्मुक्तिरिष्यते अभिप्रेयते ब्रह्मविद्भिरिति शेषः। उक्तं हि "मुक्ति प्राहुस्तदिह मुनयो वासनातानवं यत्" इति। वस्तुनः सूक्ष्मावस्थैव वासना तस्याः तानवं नाश एव ॥३१८॥

सद्भाव-वासनादार्ढ्ये तत्त्रयं लयमश्नुते इत्युक्तमर्थं सदृष्टान्तमाह। सद्वासनेति।

सद्वासनास्फूर्ति-विजृम्भणे सति ह्यसौ विलीना त्वहमादिवासना।
अतिप्रकृष्टाप्यरुण-प्रभायां विलीयते साधु यथा तमिस्रा ॥३१९॥

सद्वासनास्फूर्तिविजृम्भणे सति श्रवणमनननिदिध्यासन-संस्कृतस्य मनसः सदा सर्वत्र सद्भावनया सत्संस्कारस्फुरणवृद्धौ सत्यां तु असौ विप्रकृष्टा अहमादिवासना आदिपदेन देहेन्द्रियविषयपरिग्रहः। हि विलीना विशेषेण नष्टा भवतीति शेषः। तत्र दृष्टान्तः अति-प्रकृष्टापि तमिस्रा रात्रिः तमोमयी दर्शादिदिनेषु, अरुणप्रभायां अरुणः सूर्यसारथिः तस्य प्रभायां साधु विलीयते नश्यति यथा तथा इति पूर्वेणान्वयः ॥३१९॥

ततः

तमस्तमःकार्यमनर्थजालं न दृश्यते सत्युदिते दिनेशे।
तथाऽद्वयानन्दरसानुभूतौ नैवास्ति बन्धो न च दुःखगंधः ॥३२०॥

अरुणोदयानन्तरं दिनेशे भास्करे उदिते सति उदयाचलमारूढे सति तमः शार्वरं तमः अन्धकारः तत्कार्यं अनर्थजालं चक्षुःपीडा-चोरबाधा-मार्गस्खलनादिजात-दुःखकदंबं न दृश्यते यथा तथा अद्वयानन्दरसानुभूतौ सद्वासनास्फुरणवृद्धिवशात् सच्चिदानन्दैकरसप्रत्यग्ब्रह्मानुभवे सति नैवास्ति बंधः अनात्मन्यात्मबुद्धिः नच दुःखगन्धः हेतोरध्यासस्य नाशात्। "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इतिश्रुतेः ॥३२०॥

यदि प्रारब्धवशात् जगद् भासेत, तदापि

दृश्यं प्रतीतं प्रविलापयन्स्वयं
सन्मात्र-मानन्दघनं विभावयन्।
समाहितस्सन् बहिरन्तरं वा
कालं नयेथा-स्सति कर्मबन्धे ॥३२१॥

"विपरीतार्थधीर्यावत् निश्शेषं विनिवर्तते। स्वरूपस्फुरणं यावन्न-प्रसिध्यत्यनर्गलं। तावत्समाधिषट्केन नयेत्कालं निरंतरं" इत्युक्तत्वात् प्रतीतं दृश्यं नामरूपप्रविलापनेन केवलाधिष्ठानभूतं ब्रह्म भावयन् स्वयं च सन्मात्रमानन्दघनं विभावयन् बहिरन्तरं वा समाहितः सन् कालं नयेथाः।

"इयं भूर्न सन्नापि तोयं न तेजो न वायुर्नखं नापि तत्कार्यजातम्। यदेषामधिष्ठानभूतं विशुद्धं सदेकं परं यत्तदेवाहमस्मि" इत्यादिरीत्या वहिः, "न देहो नचाक्षाणि न प्राणवायुर्मनो नापि बुद्धिर्न चित्तं ह्यहंधीः। यदेषामधिष्ठानभूतं विशुद्धं सदेकं परं यत्तदेवाहमस्मि" इत्यन्तः शब्दानुविद्ध-दृश्यानुविद्ध-सविकल्पक-निर्विकल्पकभेदेन वहिरन्तर्वा समाहितमनसा त्वया कर्मवन्धे प्रारब्धाद्विक्षेपे प्रसक्ते कालो नेयः इत्यर्थः ॥३२१॥

कदापि कथंचिदपि शिष्यो दुःखभाक् माभू-दित्यनुक्रोशेन जातविवेकस्यापि दुःखप्रसक्तिमार्ग पुनराह प्रमाद इत्यादिना विस्तरेण।

प्रमादो ब्रह्मनिष्ठायां न कर्तव्यः कदाचन।
प्रमादो मृत्युरित्याह भगवान् ब्रह्मणस्सुतः॥३२२॥

कदाचन कदापि, ब्रह्मनिष्ठायां प्रमादः अनवधानता च्युतिः न कर्तव्या नाश्रयणीया। यतः भगवान् सर्वज्ञः आजानसिद्धः ब्रह्मणः सुतः सनत्सुजातः धृतराष्ट्रंप्रति "प्रमादं वै मृत्युमहं ब्रवीमि" इति प्रमादो मृत्युरित्याह॥३२२॥

तदुपपादयति न प्रमादादित्यादिना।

न प्रमादादनर्थोन्यो ज्ञानिनः स्वस्वरूपतः।
ततो मोहस्ततोहंधीः ततो बन्धस्ततो व्यथा॥३२३॥

ज्ञानिनः स्वस्वरूपतः प्रमादात् प्रच्युतेः अन्यः अनर्थः हानिः न विद्यते यस्मात् ततः स्वरूपप्रच्युतौ सत्यां मोहः विस्मरणं ततोनात्मनि अहंकारे अहंधीः ततः बन्धःदेहादावध्यासः ततो व्यथा जरामरणादिजन्या ॥३२३॥

अज्ञानिनः एवमस्तु ज्ञानिनोप्येवं किं स्यात् इतिशंकायामाह। विषयेति।

विषयाभिमुखं दृष्ट्वा विद्वांसमपि विस्मृतिः।
विक्षेपयति धीदोषैः योषा जारमिव प्रियम्॥३२४॥

योषा प्रियं जारमिव जारं अन्यासक्तं प्रियमिव स्वपतिमिव वा विस्मृतिः ब्रह्मविस्मृतिः विद्वांसमपि विवेकिनमपि विषयाभिमुखं बहिर्मुखं

दृष्ट्वा धीदोषैः "पराञ्चि खानि" इति श्रुतेः। "विषयेष्वाविशच्चेतः" इत्यादिना वक्ष्यमाणदोषैः विक्षेपयति नष्टात्मबोधं करोति विशेषेण चालयति दूरं नयति भ्रामयति॥३२४॥

उक्तमर्थं दृष्टान्तान्तरेण आहसुष्ठुप्रतिपत्तये। यथेति।

यथापकृष्टं शैवालं क्षणमात्रं न तिष्ठति।
आवृणोति तथा माया प्राज्ञं वापि पराङ्मुखम्॥३२५॥

पूर्वं कोशपंचकस्य शैवालदृष्टान्तेनैव आवरकत्वमुक्तं "तच्छैवालापनये सम्यक्सलिलं प्रतीयते शुद्धम्" इति क्षणमात्रं शैवालमपकृष्टं यथा न तिष्ठति पुनरावृणोति सलिलं तथा माया प्राज्ञं वापि कृतकोशपंचकनिषेधमपि पराङ्मुखं आवृणोति तिरोहितस्वरूपं करोति॥३२५॥

"न प्रमादादनर्थोन्य" इत्युक्तं दृष्टान्तान्तरेण स्फुटयति। लक्ष्यच्युतमिति।

लक्ष्यच्युतं चेद्यदि चित्तमीषद्
बहिर्मुखं सन्निपतेत्ततस्ततः।
प्रमादतः प्रच्युतकेलि-कंदुकः
सोपान-पङ्क्तौ पतितो यथा तथा॥३२६॥

चित्तं यदीषत् लक्ष्यं ब्रह्म ततः च्युतं चेत् बहिर्मुखं सत् अनात्मप्रवणं सत् ततस्ततः अहंकारबुद्धि-मनःप्राणेन्द्रिय-देहविषयेषुनिपतेत् यथा प्रमादतः क्रीडतः पुरुषस्य इच्छाभावेपि प्रमादतः अनवधानवशात् प्रच्युतकेलिकंदुकः सोपानपङ्क्तौ पतितः अधोधो गच्छति न ग्रहीतुं शक्यते तथा॥३२६॥

प्रमादस्य मृत्युत्वं सष्ठूपपादयति सार्धद्वयेन,

विषयेष्वाविशच्चेतः संकल्पयति तद्गुणान्।
सम्यक्संकल्पनात्कामः कामात्पुंसः प्रवर्तनम्॥३२७॥
ततःस्वरूपविभ्रंशो विभ्रष्टस्तु पतत्यधः।
पतितस्य विना नाशं पुनर्नारोह ईक्ष्यते।
संकल्पं वर्जयेत्तस्मात् सर्वानर्थस्य कारणम्॥३२८॥
अपथ्यानि हि वस्तूनि व्याधिग्रस्तो यथोत्सृजेत्॥

विषयेषु शब्दादिषु चेतः मनः आविशत् सत् सज्जमानं सत् तद्-गुणान् तेषु भोगहेतुतया आनन्दजनकत्वादिगुणान् संकल्पयति चिन्तयति। सम्यक्संकल्पनात् कामः तेषु इच्छा जायते कामात् पुंसः प्रवर्तनं तत्संपादने यत्नः। "यद्यद्धि कुरुते जन्तुः तत्तत्कामस्य चेष्टितम्" इतिस्मृतेः। ततस्स्वरूपविभ्रंशः स्वरूपात्प्रच्युतिः विस्मरणमित्यर्थः। विभ्रष्टस्तु अधः अनात्मसु कोशेषु तद्वारा दूरदूरेषु विषयेषु पतति गच्छति। पतितस्य अतिदूरं नीतस्य नाशं विना, स्वरूपादर्शनमेव नाशः स्वरूपादर्शने सर्वदा देहादिकं आत्मत्वेन मन्यमानस्य तस्य मरणादिसत्वात्। अस्यापि सर्वमस्तीति भ्रान्त्या संततसंसारलग्नत्वमेव। पुनर्नारोहःब्रह्मलाभः ईक्ष्यते, सर्वानर्थस्य कारणं संकल्पं तस्माद्वर्जयेत् न कुर्यात् यथा रोगग्रस्तः वस्तून्य-पथ्यानि उत्सृजेत् तथा। स्वरूपच्युतौ महाननर्थः नाशपर्यन्तः॥३२८॥

अतः प्रमादान्नपरोऽस्ति मृत्युः विवेकिनो ब्रह्मविदः समाधौ।
समाहितः सिद्धिमुपैति सम्यक्समाहितात्मा भव सावधानः॥३२९॥

अतः विवेकिनः ब्रह्मविदः समाधौ प्रमादात्परः मृत्युर्नास्ति। सम्यक्समाहितः ब्रह्मसंस्थः सिद्धं मुक्तिमुपैति। त्वमपि सावधानः प्रमाद-रहितः समाहितात्मा निरंतरं ब्रह्मनिवेशितान्तःकरणो भव॥३२९॥

जीवतो यस्य कैवल्यं विदेहे च स केवलः।
यत्किंचित्पश्यतो भेदं भयं ब्रूते यजुश्श्रुतिः॥३३०॥

यस्य पुंसः जीवतः प्राणान्धरतः कैवल्यं सर्वोपाधि-संबन्ध-विनिर्मुक्तत्वं, स पुरुषधौरेयः विदेहे च देहपातानन्तरमपि केवलः। यत्किंचिद्भेदं पश्यतः यजुश्श्रुतिः "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" इति भयं ब्रूते उत् अपि, अरं स्वल्पं अन्तरं भेदं स्वल्पमपि भेदं कुरुते पश्यति अथ तदा तस्य भयं भवति इति। कैवल्ये हेतुश्च निर्विकल्पकसमाधिनिष्ठैव। वक्ष्यति "उपाधिभेदात्स्वयमेव भिद्यते चोपाध्यपोहे स्वयमेव केवलः। तस्मादुपाधेः विलयाय विद्वान् वसेत्सदाऽऽकल्पसमाधिनिष्ठया" इति॥३३०॥

"तत्वेव भयं विदुषोऽमन्वानस्य" इत्यन्तयजुश्श्रुत्यर्थमाह। यदा कदावेति।

यदाकदा वापि विपश्चिदेषः ब्रह्मण्यनन्तेप्यणुमात्रभेदम् ।
पश्यत्यथामुष्य भयं तदेव यदीक्षितं भिन्नतया प्रमादात् ॥३३१॥

एषः विपश्चित् विवेकी ब्रह्मवित् अनन्ते त्रिविधपरिच्छेदशून्ये ब्रह्मणि अणुमात्रभेदमपि ईषदपि भेदं, यदा यदीत्यर्थः, कदा वापि कदाचिदपि यदि पश्यति अथ तर्हि, प्रमादात् अनवधानात् भिन्नतया यदीक्षितं तदेवामुष्य विदुषः अमन्वानस्य भयं भयानकं "द्वितीयाद्वै भयं भवति" इति श्रुतेः सर्वं तं परादात् योन्यत्रात्मनः सर्वं वेद, येन्यथातो विदुः अन्यराजानः ते क्षय्यलोका भवन्तीति च ॥३३१॥

श्रुतिस्मृतिन्याय-शतैर्निषिद्धे
दृश्येत्र यस्स्वात्ममतिं करोति ।
उपैति दुःखोपरि दुःखजातं
निषिद्धकर्ता स मलिम्लुचो यथा ॥३३२॥

"नेति नेति, नेह नानास्ति किंचन, नात्र काचन भिदास्ति" इत्यादिश्रुतिभिः, तदनुसारिणीभिः स्मृतिभिः "अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते" इत्याद्याभिः, पंचकोशविवेचनसमये दर्शितैः न्यायैश्च परश्शतैः दृश्यं देहादिकं अहंकारान्तं नात्मा इति निषिद्धे अत्र दृश्ये देहादौ यस्स्वात्ममतिं अहमिति धियं करोति सः निषिद्धकर्ता पापी अत एव मलिम्लुचः मलिनान्तःकरणः यथा इतिकर्तव्यतामूढः दुःखोपरि दुःखजातं उपैति तथा असज्जड-दुःखात्मकानात्मात्मत्वबुध्या दुःखोपरि दुःखजातं उपैति ॥३३२॥

तत्स्फुटयति । सत्येति ।

सत्याभिसंधानरतो विमुक्तो महत्वमात्मीय-मुपैति नित्यम् ।
मिथ्याभिसंधानरतस्तु नश्येद्दृष्टं तदेतद्यदचोर-चोरयोः ॥३३३॥

सत्याभिसंधानरतः ऐदंपर्येण सत्यनिष्ठायां रतः व्यग्रः, पुरुषः नित्यमात्मीयं महत्वं निर्विकारमनस्त्वं सर्वपूज्यत्वं च, उपैति। मिथ्या-पदार्थाभिसंधानरतस्तु नश्येत् यस्यावलंबनं मिथ्याभूतमेव तस्य कथं सत्वं, स नश्यत्येव। दृष्टं तदेतत् यदचोरचोरयोः उक्तमिदं छान्द षष्ठाध्याय

तप्तपरशुग्रह्मणदृष्टान्तेन सत्यवादी आरोपितचोरत्वकः तप्तपरशुं गृण्हाति न्यायस्थाने, तथापि सत्यावलंबनेन न दह्यते अथ मुच्यते। वस्तुतः चोरस्तु नाहं चोर इति अनृतमपि वदन् तदपरित्यजन् हस्तनिक्षिप्ततप्तपरशुः दह्यते अथ बध्यते इति एतादृशः मलिम्लुचशब्दार्थः। चौर्यमेव निषिद्धं ततः अनृतवदनादि-निषिद्धपरंपरा, एवंकुर्वतः मिथ्याभिसंधानरतस्य कथं सत्यप्रतिपत्तिः स्यात्। अतः दुःखोपरि दुःखजातं उपैतीत्युक्तम् लोकद्वयादपि भ्रंशात् ॥३३३॥

तस्मात्

यतिरसदनुसंधिं बन्धहेतुं विहाय
स्वयमय-महमस्मीत्यात्मदृष्ट्यैव तिष्ठेत्।
सुखयति ननु निष्ठा ब्रह्मणि स्वानुभूत्या
हरति परमविद्याकार्यदुःखं प्रतीतम् ॥३३४॥

ब्रह्मसंस्थत्वस्य सन्यासिन एव संभवात् यतिः सन्यासी बंधहेतुं असदनुसंधिं अब्रह्मचिन्तां स्वयं विहाय अयं परमात्मा अहमस्मीति आत्मदृष्ट्यैव तिष्ठेत्। तत्र परमपुरुषार्थं फलमाह ननु यतः ब्रह्मणि निष्ठा अनन्यसक्ततया स्थितिः स्वानुभूत्या स्वस्वरूप-स्वयं-प्रकाश-सदानन्दानुभवेन सुखयति आनन्दयति। प्रतीतं पूर्वमनुभूतं अविद्याकार्यदुःखं अज्ञानतत्कार्यप्रयोज्यदुःखं यद्वा अविद्यायाः कार्यं यद्दुःखं तत् परं अत्यन्तं, हरति तरति शोकमात्मविदिति श्रुतेः "यत्र नान्यत्पश्यति............स भूमा" "यो वै भूमा तत्सुखम्" इति च। तादृग्ब्रह्मणि सर्वदानिष्ठस्य कुतोऽविद्या कुतः तत्कार्यदुःखं वा ॥३३४॥

समूलघातं दुःखमपहन्तुं ब्रह्मणि समाधानाय पराङ्मुखत्वं ज्ञातयति। बाह्येति।

बाह्याभिसंधिः परिवर्धयेत्फलं
दुर्वासनामेक ततस्ततोधिकाम्।
ज्ञात्वा विवेकैः परिहृत्य बाह्यं
स्वात्मानुसंधिं विदधीत नित्यम् ॥३३५॥

बाह्याभिसंधिः विषयसंगः, ततस्ततोधिकां दुर्वासनां पुनर्जन्मकरीं मलिनवासनामेव फलं परिवर्धयेत्। उक्तं हि पूर्वं "वासनावृद्धितः कार्यं कार्यवृध्या च वासना" इति। तज्ज्ञात्वा विवेकैः प्रमादस्य मृत्युताकथनावसरे कथितैः विषयसंगस्य महानर्थहेतुत्वबोधकैः हेतुभिः बाह्यमनात्मानं परिहृत्य बाधित्वा स्वात्मानुसंधिं ब्रह्मानुचिन्तनं नित्यं सर्वदा विदधीत कुर्यात्॥३३५॥

बाह्यानुसंधेः बन्धकत्वमुक्त्वा तन्निरोधे क्रमेण परमपुरुषार्थं फलमाह। बाह्य इति।

**बाह्ये निरुद्धे मनसः प्रसन्नता मनःप्रसादे परमात्मदर्शनम्।**
**तस्मिन्सुदृष्टे भवबन्धनाशः बहिर्निरोधः पदवी विमुक्तेः॥३३६॥**

अत्यन्तं व्यवहरतोपि सुप्तोत्थितस्य मनः प्रसन्नं तिष्ठति। अत एव "संप्रसादः" इत्युच्यते सुषुप्तिः सुषुप्तौ बाह्याभावात्। प्रयत्नपुरस्सरमेव बन्धके बाह्ये निरुद्धे आनन्दाविर्भावेन प्रसन्नतायां किमु वक्तव्यम्। मनःप्रसादे "प्रसादे सर्वदा दुःखानां हानिरस्योपजायते। प्रसन्नचेतसो-ह्याशु बुद्धिः पर्यवतिष्ठते" इतिगीतावचनात् दुःखमुक्तं निर्मलं मनः सूक्ष्मं एकाग्रं, परमात्मदर्शन-समर्थं भवति। "मनसैवेदमाप्तव्यं, मनसैवानुद्रष्टव्यं, दृश्यते त्वग्र्यया बुध्या सूक्ष्मया" इत्यादिश्रुतेः। तस्मिन् सुदृष्टे अनन्यतया निरंतरं साक्षात्क्रियमाणे, भवबन्धनाशः संसारहेतूनां सर्वेषामध्यासानां समूलघातः अतः बहिर्निरोधः वृत्तेर्बाह्यानालंबनं विमुक्तेः पदवी प्रापिका॥३३६॥

एवं बहुप्रकारैः विषयचिन्तायां दोषान् दर्शयित्वा ततस्सर्वात्मना निवर्तयितुं तादृशानां लज्जायै कुत्सां करोति। कः पण्डित इति।

**कः पण्डितः सन् सदसद्विवेकी श्रुतिप्रमाणः परमार्थदर्शी।**
**जानन्हि कुर्यादसतोवलंबं स्वपातहेतोः शिशुवन्मुमुक्षुः॥३३७॥**

परमार्थं द्रष्टुं शीलं अस्यास्तीति परमार्थदर्शी अत एव श्रुतिप्रमाणः श्रुतिरेव प्रमाणं यस्य सः, अतीन्द्रियार्थे तस्या एव मानत्वात्, ततः "यो वै भूमा तदमृतं अतोन्यदार्तं" इतिश्रुत्या सदसद्विवेकी ब्रह्म सत्यं

जगन्मिथ्येति ज्ञानवान् तेन पण्डितः पण्डा ज्ञानं अस्य संजातेति पण्डितः वस्तुयाथात्म्य-ज्ञानवान्, मुमुक्षुः वन्धनिवृत्तिं कामयमानः स्वपातहेतोः स्वस्य अधोधः पतनार्थं हि निश्चयेन जानन् असतः अनात्मनः अवलंबं समाश्रयणं कः कुर्यात्। तत्र दृष्टान्तः शिशुवदिति, शिशुर्हि अज्ञानात् उपरिभागादधः पतेत् सर्पदीपादिकं गृह्णीयात्। अयं तु ज्ञानी। अतः विवेकिना अप्रमादेन ब्रह्मसंस्थेन भवितव्यमिति भावः ॥३३७॥

पदार्थानवबोधाववोध-रूपविभिन्नधर्माश्रययोः सुप्तिजागरणयोः यथा एकस्मिन् समानकालिकत्वं नास्ति एवं देहाद्यभिमानमुक्त्योः इत्याह। देहादीति।

देहादि-संसक्तिमतो न मुक्तिः
मुक्तस्य देहाद्यभिमत्यभावः।
सुप्तस्य नो जागरणं न जाग्रतः
स्वप्नस्तयोर्भिन्नगुणाश्रयत्वात् ॥३३८॥

"न स पुनरावर्तते" इतिश्रुत्या मुक्तस्य तु पुनः देहादावभिमानो नैव भवति। यदि भवति न स मुक्तः "विज्ञातब्रह्मतत्वस्य यथापूर्वं न संसृतिः। अस्ति चेन्न स विज्ञातब्रह्मभावो वहिर्मुखः" इति हि वक्ष्यति। अन्वयः स्पष्टः ॥३३८॥

मुक्तस्वरूपमाह। अन्तरिति।

अन्तर्बहिस्स्वं स्थिर-जंगमेषु
ज्ञानात्मनाधारतया विलोक्य।
त्यक्ताखिलोपाधि-रखण्डरूपः
पूर्णात्मना यस्स्थित एष मुक्तः ॥३३९॥

स्थिरजंगमेषु चराचरेषु वस्तुषु, अन्तर्बहिः ज्ञानात्मना आधारतया स्वं स्वात्मानं विलोक्य साक्षात्कृत्य त्यक्ताखिलोपाधिः त्यक्ताः वाधिताः अखिलाः उपाधयः अज्ञानतत्कार्यरूपाः येन सः त्यक्ताखिलोपाधिः। अत एवाखण्डरूपः देशकालवस्तु-परिच्छेदशून्य-सच्चिदानन्द-स्वरूपः पूर्णात्मना

अपरिच्छिन्नात्मना यः स्थितः एषः मुक्तः। तेन परिच्छिन्नदेहाद्यभिमाने पूर्णात्मना स्थितिर्नास्तीति न स मुक्त इति भावः ॥३३९॥

मुक्तौ हेतुं तस्य हेतुं चाह। सर्वात्मनेति।

सर्वात्मना बन्धविमुक्तिहेतुः सर्वात्मभावान्नपरोस्ति कश्चित्।
दृश्याग्रहे सत्युपपद्यतेसौ सर्वात्मभावोस्य सदात्मनिष्ठया ॥३४०॥

"यतो यतो निवर्तते ततस्ततो विमुच्यते, निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि" इत्युक्तरीत्या सर्वात्मना बन्धविमुक्तौ हेतुः सर्वात्मभाव एव। तस्मात् परः अन्यः कश्चिन्नास्ति "अहं ब्रह्मास्मि यो वेद स सर्वं भवति त्विदं। नाभूत्या ईशते देवाः तेषामात्मा भवेद्धि सः" इत्युक्तेः। यद्बन्धकं तदपि स्वभिन्नं बध्नीयात् नात्मानं कर्तृ-कर्मविरोधात् उक्तं हि "नहि नटः सुशिक्षितोपि स्वस्कन्धमधिरोक्ष्यति" इति "नह्यग्निरात्मानं दहति" इति च भाष्ये। ततः सर्वात्मभावे प्राप्ते यद् बन्धकत्वेन मतं तदात्मत्वस्याप्य-वर्जनीयतया कुतो बन्धः "सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। संपश्यन् ब्रह्म परमं याति नान्येन हेतुना" इतिकैवल्यश्रुतेः इति भावः। सर्वभूतेषूपादानतया अधिष्ठानतया अनुस्यूत, सर्व-भूतानि चात्मानि रज्वां सर्प इव कल्पितानि संपश्यन्निति तदर्थः। तेन सर्वोपाधिसंबन्ध-विनिर्मुक्ततया केवलीभाव एव सर्वात्मभावः। नह्युपाधि संबन्धेन परिच्छिन्नस्य सर्वात्मत्वं संभवति। यद्यपि मायायाः व्यापकत्वात् तद्विशिष्टस्य तत्कार्य-सर्वाधिष्ठानत्वं सुवचं, तथापि मायायाः परिशिष्य माणत्वात् तदधिष्ठानत्वं शुद्धस्य निरवच्छिन्नचैतन्यस्यैवेति कैवल्यमेव सर्वात्मभावः। तत्र हेतुः असौ सर्वात्मभावः अस्य ज्ञानिनः सदा निरन्तरं आत्मनिष्ठया दृश्याग्रहे सत्युपपद्यत इति ॥३४०॥

सदात्मनिष्ठायामेव दृश्याग्रहणं नान्यथेत्युपपादयति। दृश्यस्या-ग्रहणमित्यादिना।

दृश्यस्याग्रहणं कथं नु घटते देहात्मना तिष्ठतो
बाह्यार्थानुभवप्रसक्त-मनसः तत्तत्क्रियां कुर्वतः।
संन्यस्ताखिल-धर्मकर्म-विषयैः नित्यात्मनिष्ठापरैः
तत्वज्ञैः करणीयमात्मनि सदानन्देच्छुभि-र्यत्नतः ॥३४१॥

ात्मना तिष्ठतः अत एव वाह्यार्थानुभवप्रसक्तमनसः विषयानुभवे प्रकर्षेण सक्तमनसः, षष्ठीवहुव्रीहिः, तेन विपयचिन्तनं संकल्पः कामश्च कथिताः। ततः तत्तत्क्रियां कुर्वतः विषयलाभाद्यर्थं व्याप्रियमाणस्य दृश्यस्याग्रहणं कथंनु घटते युज्यते। अतः संन्यस्ताखिल-धर्मकर्म-विषयैः धर्मश्च कर्माणि च विषयाश्च धर्म-कर्म-विषयाः अखिलाश्च ते धर्म-कर्म-विषयाश्च संन्यस्ता यैस्तैः संन्यस्ताखिल-धर्म-कर्म-विषयैः धर्मः वैदिकः कर्म लौकिकं विषयाश्च शब्दादयः नित्यात्म-निष्ठापरैः नित्या या आत्म-निष्ठा तस्यां परैः आसक्तैः सा परा प्रधानभूता येषां तैः इतिविग्रहेणवा तदासक्तैः। तत्रहेतुः आत्मनि सदानन्देच्छुभिरिति तैः तत्वज्ञैः, यत्नतः करणीयं दृश्याग्रहणमित्यन्वयः॥३४१॥

नित्यात्मनिष्ठा सार्वात्म्य-सिद्धिहेतुरित्यर्थः श्रुतिप्रमाणकः इत्याह। सर्वेति।

सार्वात्म्यसिद्धये भिक्षोः कृतश्रवणकर्मणः।
समाधिं विदधात्येषा शान्तो दान्त इतिश्रुतिः॥३४२॥

ब्रह्मनिष्ठगुरुमुखात् कृतं श्रवणरूपं वेदान्तवाक्य-तदर्थश्रवणरूपं कर्म येन सः, भिक्षुः संन्यासी कृतश्रवणकर्मा तस्य सार्वात्म्यसिद्धये कैवल्यरूप-सर्वात्मभावनिष्पत्तये एषा "शान्तो दान्त" इतिश्रुतिः "तस्मादेवं-विच्छान्तो दान्त उपरतस्तितिक्षु-स्समाहितश्श्रद्धावित्तो भूत्वाऽत्मन्ये-वात्मानं पश्येत्" इतिश्रुतिः बहिरन्तःकरणनिरोधेन अनालंबितबाह्यवृत्तिः आत्मसाक्षात्कारार्थं निरंतरं समाधिं कुर्यादिति समाहितशब्देन समाधिं विदधाति कर्तव्यत्वेन बोधयतीत्यर्थः॥३४२॥

तत्र युक्तिमाह। आरूढशक्तेरिति।

आरूढशक्तेरहमो विनाशः
कर्तुं न शक्यः सहसापि पण्डितैः।
ये निर्विकल्पाख्य-समाधिनिश्चलाः
तानन्तराऽनन्तभवा हि वासनाः॥३४३॥

ये निर्विकल्पाख्य-समाधिनिश्चलाः, समाधिः द्विविधः सविकल्पकः निर्विकल्पकश्चेति, "ज्ञात्राद्यविलयेनैव ज्ञेये ब्रह्मणि केवले। तदाकारा-

कारितया चित्तवृत्तेरवस्थितिः। सद्भिः स एव विज्ञेयः समाधिः सविकल्पकः। मृद एवावभानेपि मृण्मयद्विपभानवत्। सन्मात्रवस्तुभानेपि त्रिपुटी भाति सन्मयी। समाधिरत एवायं सविकल्प इतीर्यते। ज्ञात्रादि-भावमुत्सृज्य ज्ञेयमात्रस्थितिर्दृढा। मनसो निर्विकल्पस्स्यात् समाधिर्योग-संज्ञितः। जले निक्षिप्तलवणं जलमात्रतया स्थितं। पृथङ्-नभाति किन्त्वंभ एकमेवावभासते। यथा तथैव सा वृत्तिः ब्रह्ममात्रतया स्थिता। पृथङ्-नभाति ब्रह्मैवाद्वितीयमवभासते। ज्ञात्रादिकल्पनाभावान्मतोयं निर्वि-कल्पकः। वृत्तेः सद्भावबाधाभ्यां उभयोर्भेद इष्यते" इति सदृष्टान्तं तत्तल्लक्षणं। निर्विकल्पेत्याख्या यस्य निर्विकल्पाख्यः सचासौ समाधिश्च निर्विकल्पाख्यसमाधिः तस्मिन् निश्चलाः तेन वा निश्चलाः तानंतरा विना, आरूढशक्तेः आरूढा प्रवृद्धा शक्तिः नानाभ्रमजनिका यस्य तस्य अहमः अहंकारस्य विनाशः, पण्डितैरपि कृतवेदान्तश्रवणैरपि सहसा कर्तुं न शक्यः। हि यस्मात् वासनाः अनात्मसंस्काराः अनन्तभवाः अनन्ताः असंख्याकाः भवाः जन्मानि यासां ताः, यद्वा अनन्तैर्बहुभिः पदार्थैः भवाः उत्पन्नाः। अतः सकलविधवासनाक्षयार्थं निर्विकल्पकसमाधिरेव शरणम् ॥३४३॥

समूलमनष्टायाः विक्षेपशक्तेः बन्धकत्वप्रकारमाह। अहमिति।

अहंबुध्यैव मोहिन्या योजयित्वावृतेर्बलात्।
विक्षेपशक्तिः पुरुषं विक्षेपयति तद्गुणैः॥३४४॥

यदानात्मनि आत्मबुद्धिं करोति तदा स्वरूपं तिरोहितं भवति "यथापकृष्टं शैवालं" इति पूर्वोक्तरीत्या मोहिन्या स्वरूपच्याविकया अहंबुध्यैव योजयित्वा तत्प्रयोज्यावृतेः स्वरूपाप्रकाशस्य बलात् पुरुषं पण्डितमपि, विक्षेपशक्तिः भ्रमपरंपराजनिका, संकल्पकामादिवृत्तिजनिका च, तद्गुणैः स्वकीयकार्यैः संकल्पादिरूपैः विक्षेपयति बहुबहु बहिरानयति दूरमात्मन इत्यर्थः॥३४४॥

विक्षेपशक्तिविजयो विषमो विधातुं
निश्शेषमावरण-शक्तिनिवृत्यभावे।
दृग्दृश्ययोः स्फुटपयोजलवद्विभागे
नश्येत्तदावरण-मात्मनि च स्वभावात्॥

निस्संशयेन भवति प्रतिबन्धशून्यो
निक्षेपणं नहि तदा यदि चेन्मृषार्थे ॥३४५॥

विक्षेपेति। निश्शेषमावरणशक्तिनिवृत्यभावे विक्षेपशक्तिविजयः विधातुं कर्तुं विषमः असाध्य इत्यर्थः। दृग्दृश्ययोः आत्मानात्मनोः स्फुटं पयोजलवत् क्षीरनीरवत् भेदेन मनस्त्रोट्या हंसैः परमैः कृते सति आत्मनि तदा स्वभावात् अयत्नत एव आवरणं नश्येत्। तथा-विवेकानन्तरं आवरण-भंगार्थं करणीयांशः कोपि नास्ति। तदामृषार्थे मिथ्याभूते अनात्मनि निक्षेपणं मनसः न चेद्यदि विक्षेपशक्तिविजयः निस्संशयेन प्रतिबन्धशून्यः भवति ॥३४५॥

एतादृशविवेके स्फुटबोधं हेतुमाह। सम्यगिति।

सम्यग्विवेकः स्फुटबोधजन्यः
विभज्य दृग्दृश्यपदार्थतत्वम्।
छिनत्ति मायाकृत-मोहबन्धं
यस्माद्विमुक्तस्य पुनर्न संसृतिः ॥३४६॥

स्फुटः असंदिग्धः, अविपर्यस्तः यो बोधः श्रुत्याचार्यप्रसादजनितः महावाक्यार्थानुभवः तज्जन्यः तदनन्तरकालिकः सम्यग्विवेकः "ब्रह्म सत्यं जगन्मिथ्या" इत्येवंरूपः दृग्दृश्यपदार्थतत्वं आत्मानात्मयथात्म्यं, विभज्य क्षीरनीरवत्पृथक्कृत्य मायाकृतमोहबन्धं मायया अविद्यया कृतः यो मोहः स्वरूपतिरोधानं, तेन यो बन्धः अनात्मस्वात्मबुद्धिः तं छिनत्ति समूलकाषं कषति। तत्र मानमाह यस्माद्विमुक्तस्य पुनर्न संसृतिरिति "न स पुनरा-वर्तते" इतिश्रुतेः, नहि क्षीरादुद्धृतमाज्यं पुनः क्षीरीभवति तथा स्वप्रकाशानन्दाकारतां यातं मनः न पुनरनात्मसु सज्जत इति भावः ॥३४६॥

चतुर्थपादार्थ-मुपपादयति। परावरेति।

परावरैकत्व-विवेकवह्निः दहत्यविद्यागहनं ह्यशेषम्।
किं स्यात् पुनस्संसरणस्य बीजं अद्वैतभावं समुपेयुषोस्य ॥३४७॥

हि यस्मात्कारणात् परावरैकत्वविवेकवन्हिः परः ईश्वरः अवरः जीवः तयोरेकत्वविषयकः विवेकः विचारजनितबोधः स एव वन्हिः अशेषं सकलकार्यैः साकं अविद्यागहनं अविद्यैव गहनमरण्यं दहति भस्मीकरोति "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनि ब्रह्मणो भेदमसन्तं कः करिष्यति" इतिप्रमाणात्। अद्वैतभावं निर्भेदब्रह्मभावं समुपेयुषः निरन्तरं साक्षात्कुर्वतः अस्य महात्मनः पुनः संसरणस्य देहादावात्मभ्रमस्य बीजं किं स्यात् न किमपीत्यर्थः ॥३४७॥

सम्यग्वस्तुज्ञानस्य संसारनाशकत्व-प्रकारमाह। आवरणस्येति।

आवरणस्य निवृत्ति-र्भवति च सम्यक्पदार्थ-दर्शनतः।
मिथ्याज्ञानविनाशः तद्वद्विक्षेप-जनित-दुःखनिवृत्तिः ॥३४८॥

"एताभ्यामेव शक्तिभ्यां बन्धः पुंसः समागतः" इत्युक्तत्वात् आवरणविक्षेपनाशे कुतः संसारवन्ध इति भावः ॥३४८॥

सम्यक्पदार्थदर्शनतः आवरणस्य निवृत्ति-र्भवति, मिथ्याज्ञानस्य अयथाबोधस्य विनाशः भवति, तद्वत् अयथावबोधरूप-विक्षेपेण जनितं यद्दुःखं तस्य निवृत्तिश्च भवति इतीममर्थं दृष्टान्तेनोपपादयति। एतदिति।

एतत्त्रितयं दृष्टं सम्यग्रज्जु-स्वरूपविज्ञानात्।
तस्माद्वस्तुसतत्वं ज्ञातव्यं बन्धमुक्तये विदुषा ॥३४९॥

सम्यग्रज्जु-स्वरूपविज्ञानात् एतत्त्रितयं 'रज्वावरणनिवृत्तिः सर्पभ्रान्तिनाशः रज्जुसर्पविक्षेपजनित-भयकम्पादि-प्रयोज्यदुःखनिवृत्तिश्च इति त्रयं दृष्टं। तस्माद्विदुषा एतज्जानता पुरुषेण बन्धमुक्तये बन्धहेत्वावरणविक्षेपनाशाय वस्तुसतत्वं वस्तुनः याथात्म्यं ज्ञातव्यम् ॥३४९॥

आत्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं सोपपत्तिकं कथयति। अय इति

अयोग्नियोगादिव सत्समन्वयान्मात्रादिरूपेण विजृम्भते धीः।
तत्कार्यमेव त्रितयं यतो मृषा दृष्टं भ्रम-स्वप्नमनोरथेषु ॥३५०॥

अग्नेर्योगात् अयः यथा दग्धृ प्रतीयते मृषा, तथा सत्समन्वयात् सतः परमात्मनः समन्वयात् प्रतिफलनरूप-संबन्धवशात् धीः बुद्धिः मात्रादि-रूपेण माता मितिः मेयमिति त्रिपुटीरूपेण विजृम्भते अनेकाकारा भवति। मातुर्ज्ञातुः जीवस्यापि धीविशिष्टवेषेण कल्पितत्वमेव। "अन्वेष्टव्यात्म-विज्ञानात् प्राक्प्रमातृत्वमात्मनः। अन्विष्टस्स्यात्प्रमातैव पाप्मदोषादि-वर्जितः" इति प्रमातृत्वमपि कल्पितम् ॥३५०॥

भ्रमस्वप्नमनोरथेषु एतत्त्रितयं त्रिपटीरूपं तत्कार्यं सत्समन्वय-युक्तधीकार्यं यतःमृषा दृष्टं

ततो विकाराः प्रकृतेरहंमुखाः
देहावसाना विषयाश्च सर्वे।
क्षणेऽन्यथाभाविन एष आत्मा
नोदेति नाप्येति कदापि नान्यथा ॥३५१॥

ततः धीकार्याणां मृषात्वात् प्रकृतेः अविद्यायाः विकाराः अहंमुखाः देहावसानाः सर्वे विषयाश्च शब्दादयः घटादयश्च, क्षणेऽन्यथाभाविनः सत्वेन प्रतीयमाना एव विमर्शे क्रियमाणे असन्तो भवन्ति। अतः दृष्ट-नष्टस्वरूपतया न सत्यभूताः। एष आत्मातु कदापि नोदेति नोत्पद्यते, नाप्येति न नश्यति वा, अन्यथापि न भवति तस्य धिय इव परिणामोपि नास्ति नियतैकरूप एव सर्वदावतिष्ठते अतः सत्य इति भावः ॥३५१॥

नित्याद्वयाखण्ड-चिदेकरूपो बुध्यादिसाक्षी सदसद्विलक्षणः।
अहंपदप्रत्यय-लक्षितार्थः प्रत्यक्सदानन्दघनः परात्मा ॥३५२॥

नित्या आद्यन्तविधुरा, अद्वया स्वभिन्नवस्तुशून्या, अत एवाखण्डा त्रिविधपरिच्छेदरहिता या चित् सैव एकं रूपं यस्य सः नित्याद्वयाखण्ड-चिदेकरूपः, तत्र मानं बुध्यादिसाक्षी पूर्वमेवोक्तं "विकारिणां सर्वविकार-वेत्ता नित्योऽविकारो भवितुं समर्हति" इति अतः सदसद्विलक्षणः "अनादि-मत्परं ब्रह्म न सत्तन्नासदुच्यते" इति गीतावचनात् अविद्यातत्कार्यभिन्न इत्यर्थः, अहंपदप्रत्यय-लक्षितार्थः लक्षणावृत्या अहंपदजन्योपस्थितिविषय इत्यर्थः, प्रत्यक्सदानन्दघनः प्रातिलोम्येन अंचतीति प्रत्यङ् असज्जड-

दुःखाहंकारादिविलक्षणतया सच्चिदानन्दस्वरूपेण प्रकाशमानः सदानन्दघनः कालत्रयाबाध्यानन्दस्वरूपः परात्मा इत्यात्मयाथात्म्यं कथितम् ॥३५२॥

इत्थं विपश्चित् सदसद्विभज्य
निश्चित्य तत्वं निजबोधदृष्ट्या।
ज्ञात्वा स्वमात्मान-मखण्डबोधं
तेभ्यो विमुक्तः स्वयमेव शाम्यति ॥३५३॥

इत्थं पूर्वोक्तप्रकारेण विपश्चित् श्रुतिप्रमाणः परमार्थदर्शी मुमुक्षुः सत् ब्रह्म असत् अविद्या-तत्कार्यं विभज्य सत्यत्वेन मिथ्यात्वेन च निजबोधदृष्ट्या विचारजनित-स्वानुभवनेत्रेण, तत्वं विनिश्चित्य वस्तुयाथात्म्यं निश्चयेन विज्ञाय, स्वमात्मानं अखण्डबोधं ज्ञात्वा तेभ्यो विमुक्तः, अनात्मभ्यः अविद्यादि-देहान्तेभ्यः शब्दादिभ्यो विषयेभ्यश्च विशेषेण मुक्तः, वासनाया अप्यभावः विशेषः मुक्तौ, स्वयमेव शाम्यति अनावृत-स्वच्छ-प्रकाश-रूपेणावतिष्ठत इत्यर्थः ॥३५३॥

एवं कदा भवतीति ज्ञातव्यमत आह। अज्ञानेति।

अज्ञानहृदयग्रन्थेर्निश्शेष-विलयस्तदा।
समाधिनाऽविकल्पेन यदाद्वैतात्मदर्शनम् ॥३५४॥

अविकल्पेन निर्विकल्पेन समाधिना पूर्वं कथितलक्षणेन, यदा अद्वैतात्मदर्शनं निर्भेदपरमात्मसाक्षात्कारः तदा अज्ञानहृदयग्रन्थेः अज्ञान-प्रयोज्यः यः हृदयग्रन्थिः चिज्जडतादात्म्यं तस्य निश्शेषविलयः वासनया साकं नाशः इत्यर्थः ॥३५४॥

त्वमहमिदमितीयं कल्पना बुद्धिदोषात्
प्रभवति परमात्मन्यद्वये निर्विशेषे।
प्रविलसति समाधा-वस्य सर्वोविकल्पः
विलयनमुपगच्छेद् वस्तुतत्वावधृत्या ॥३५५॥

बुद्धिदोषात् तमोरजोरूपात् त्वं अहं इदं इतीयं कल्पना प्रभवति अद्वये अत एव निर्विशेषे परमात्मनि भासते। अस्य विदुषः समाधौ

प्रविलसति वस्तुतत्त्वावभृत्या वस्तुयाथात्म्यावधारणेन, सर्वः विकल्पः विलयनमत्यन्तनिवृत्तिं उपगच्छेत् प्राप्नुयात् ॥३५५॥

ससामग्रीकं समाधिं तत्फलं च एकश्लोकेन विशदं कथयति। शान्त इति।

शान्तो दान्तः परमुपरतः क्षान्तियुक्तस्समाधिं
कुर्वन्नित्यं कलयति यतिः स्वस्य सर्वात्मभावम्।
तेनाविद्या-तिमिरजनितान् साधु दग्ध्वा विकल्पान्
ब्रह्माकृत्या निवसति सुखं निष्क्रियो निर्विकल्पः ॥३५६॥

शान्तः निगृहीतमनाः दान्तः निरुद्धबाह्येन्द्रियः, परमत्यन्तं उपरतः अनालंबितबाह्यवृत्तिः, क्षान्तियुक्तः द्वन्द्वसहिष्णुः, समाधिं निर्विशेषे ब्रह्मणि चित्तस्य संस्थापनं नित्यं कुर्वन्यतिः स्वस्य सर्वात्मभावं केवलीभावं कलयति अनुभवति, तेन निर्विकल्पसमाधिना, अविद्यैव तिमिरं अन्धकारः तेन जनितान् उत्पादितान् विकल्पान् विविधकल्पनाः साधु दग्ध्वा भस्मीकृत्य अत्यन्तमुच्छिद्य निष्क्रियः निर्विकल्पः ब्रह्माकृत्या ब्रह्माकारेण सुखं निवसति। एतेन "क्रियानाशे भवेच्चिन्तानाशोऽस्माद्वासनाक्षयः। वासना-प्रक्षयो मोक्षः स जीवन्मुक्त इष्यते" इत्युक्तं कथितं भवति। तदर्थं निष्क्रियो निर्विकल्प इति विशेषणद्वयम् ॥३५६॥

एवं मुक्तिसिद्धये समाध्यर्थं अन्तर्बहिःप्रपंच-प्रविलापनं हेतुः, न केवलं वाह्यशब्दैर्मुक्तिरित्याह। समाहिता इति।

समाहिता ये प्रविलाप्य
बाह्यं श्रोत्रादि चेतस्स्वमहं चिदात्मनि।
त एव मुक्ता भवपाशबन्धैः
नान्येतु पारोक्ष्यकथाभिधायिनः ॥३५७॥

ये पुरुषाः बाह्यं श्रोत्रादि, एतेन वियदादीनां चिदात्मनि प्रविलापनं कथितमेव भवति। अहं शृणोमीत्यादि-तादात्म्याध्यासविषयतया श्रोत्रादीत्युक्तं। आन्तरं चेतः मनः स्वं स्वकीयं, अहं अहंकारंच, चिदात्मनि प्रविलाप्य चिदात्मव्यतिरेकेण आन्तरं वा बाह्यं वा किमपि नास्तीति

दृढं निश्चित्य ये समाहिताः चिदात्मनि संस्थापितमनस्काः, त एव भवपाशबन्धैः पाशवद्बन्धक-सांसारिक-भ्रमैः मुक्ताः। नान्येतु पारोक्ष्यकथाभिधायिनः अन्ये अकृतप्रविलापनाः परोक्षशब्दमात्राभिधायकाः नतु नैव मुक्ता इत्यर्थः॥३५७॥

एवं सर्वोपादान-सर्वकल्पनाधिष्ठान-ब्रह्मव्यतिरेकेण किमपि नास्तीति प्रपंचस्य शून्यत्ववासनायां दृढीभूतायां मनोनाशेन कैवल्यं निष्प्रत्यूहमिति निरन्तरं निर्विकल्पकसमाधिः कार्यं इत्याह। उपाधीति।

उपाधियोगात्स्वयमेव भिद्यते
चोपाध्यपोहे स्वयमेव केवलः।
तस्मादुपाधेः विलयाय विद्वान्
वसेत्सदाऽकल्पसमाधिनिष्ठया॥३५८॥

"एकमेवाद्वितीयं, नेह नानास्ति किंचन" "नात्र काचन भिदास्ति" इतिश्रुतिजेगीयमानस्वरूपः परमात्मा उपाधियोगादेव भिद्यते। उपाध्यपोहे मायापंचकोशरूपोपाधिनिरासे च स्वयं केवल एव, तस्मात् उपाधेर्भेदहेतोः अहंकारस्य विलयाय आत्यन्तिकनिवृत्तये सदा निरंतरं अकल्पसमाधिनिष्ठया अकल्पः निर्विकल्पकः यः समाधिः योगः तस्मिन्निष्ठा नितरां स्थितिः तया वसेत्॥३५८॥

एवं समाधिनिष्ठस्य जीवस्य ब्रह्माकारतायां दृष्टान्तमाह। सतीति।

सति सक्तो नरो याति सद्भावं ह्येकनिष्ठया।
कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पते॥३५९॥

एकनिष्ठया ऐदंपर्येण सति ब्रह्मणि सक्तः समाहितमनाः नरः सद्भावं याति हि निश्चयः। तत्र दृष्टान्तः कीटकः अल्पः कीटः एकनिष्ठया भ्रमरं ध्यायन् भ्रमरत्वाय भ्रमरभिन्नोपि कल्पते समर्थो भवति। किंपुनः प्रकृते ब्रह्मैव सन् जीवः अज्ञानादारोपिताब्रह्मभावः सदापि ब्रह्मध्यानात् ब्रह्मैव भवतीति इति भावः॥३५९॥

उक्तमर्थं दृष्टान्ते विशदयन् दार्ष्टान्तिके योजयति। क्रियेति।

क्रियान्तरासक्तिमपास्य कीटको
ध्यायन्यथालिं ह्यलिभावमृच्छति ।
तथैव योगी परमात्मतत्वं
ध्यात्वा समायाति तदेकनिष्ठया ॥३६०॥

कीटकः क्रियान्तरासक्तिं अपास्य त्यक्त्वा यथा अलिं भ्रमरं ध्यात्वा स्वात्मानं हिनस्तीति भयादेव चिन्तयित्वा अलिभावं भ्रमरभावं स्वयमपि भ्रमरत्वं ऋच्छति प्राप्नोति। तत्र पूर्वादारभ्य भेदएव पश्चादपि अयं भ्रमरो भवति नतु ध्यातभ्रमराभेदः। अत्र भेदस्याज्ञानिकत्वात् अभेदध्यान-जनित-साक्षात्कारेण अज्ञाने नष्टे भेदप्रसक्तेरेवाभावात् तथैव कीटक-वत् एकनिष्ठया अनन्यसक्ततया परमात्मतत्वं ध्यात्वा तदेव याथात्म्यं समायाति। नष्टाज्ञानिकभेदः अभिव्यक्त-स्वतात्विकस्वरूपः भवतीति भावः। अतएव समायातीति समुपसर्गः। ध्यानेन अन्यस्याप्यन्यभावे संभवति स्वध्यानेन स्वस्वरूपाप्तौ कः प्रत्यूह इतिमात्रे तत्रतत्र भ्रमर-कीटन्यायोदाहरणमिति मन्तव्यम् ॥३६०॥

अतीव सूक्ष्मं परमात्मतत्वं
न स्थूलदृष्ट्या प्रतिपत्तुमर्हति ।
समाधिनाऽत्यन्त-सुसूक्ष्मवृत्या
ज्ञातव्यमार्यै-रतिशुद्धबुद्धिभिः ॥३६१॥

निर्गुणतया अतीव सूक्ष्मं परं पंचकोशविलक्षणं आत्मतत्वं त्रिविध-परिच्छेदरहितं स्वप्रकाश-सदानन्दरूपं आत्मयाथात्म्यं स्थूलदृष्ट्या शरीरादि-स्थूलवस्तुविषयिण्या दृष्ट्या अन्तःकरणवृत्या प्रतिपत्तुं व्याप्तुं नार्हति। अतिशुद्धबुद्धिभिः "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" "दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः" "ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यते निष्कलं ध्यायमानः" इत्यादिवचनानुसारेण निर्मलान्तःकरणैः आर्यैः श्रुतिस्मृत्युक्तमार्गगैः समाधिना अत्यन्तसुसूक्ष्मा प्रपंचाविषयकतया अखण्डाकारा या वृत्तिः तया ज्ञातव्यं विषयीकर्तव्यम् ॥३६१॥

मनोनैर्मल्ये ध्यानं कारणमाह। यथेति।

यथा सुवर्णं पुटपाकशोधितं
त्यक्त्वा मलं स्वात्मगुणं समृच्छति।
तथा मनस्सत्व-रजस्तमामल
ध्यानेन संत्यज्य समेति तत्वम् ॥३६२॥

सुवर्णं पुटपाकशोधितं, स्वगुणतिरोधायक-मलापनयार्थं क्रियमाण-पाकविशेषः पुटे निक्षिप्य रक्तमृदादिसंयोगेन क्रियमाणाग्निसंयोगः पुटपाकः तेन शोधितं वियोजितमलं, यथा मलं त्यक्त्वा स्वात्मगुणं भास्वरत्वादिकं समृच्छति सम्यगाप्नोति तथा मनः अन्तःकरणं सत्वरजस्तमोमलं, यद्यपि सत्वस्य रजसा तमसा वा अमिश्रितस्य मलत्वं दुर्घटं "तस्मात्सत्वमवष्टभ्य स्वाध्यासापनयं कुरु" इत्युक्तत्वात् निर्द्वन्द्वो नित्यसत्वस्थो भवेति गीतोपदेशाश्च। तथापि सत्वं शुद्धेन नश्यति इत्युक्तत्वात् "स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते, निस्त्रैगुण्यो भवार्जुन" इति भगवद्वचनाच्च निर्गुणं ब्रह्म प्राप्तुं मनोपि रजस्तमोविनाशार्थं सत्वावलंबनं त्यजतीति भावः। "नास्वादयेद्रसं तत्र निस्संगः प्रज्ञया भवेत्" इतिगौडपादोक्तेः सत्वकार्यः रसास्वादः त्यक्तव्य इत्युक्तेः "येन त्यजसि तत्यज" इत्युक्तेः "भूयश्चान्ते विश्वमायानिवृत्तिः" इति शुद्धसत्वप्रधानायाः मायायाश्च निवृत्तिश्रुतेः मिथ्यात्वेन शुद्ध-सत्वस्यापि मलत्वं मन्तव्यम्। ध्यानेन संत्यज्य, तत्त्वं ब्रह्मत्वं ("नेह नानास्ति किंचन" इति गुणगुणिभावस्यानिष्टत्वात्) समेति ब्रह्मणः निर्गुणत्वात् सत्वगुणसत्वे तत्वप्राप्तेरसंभवात्। सात्विक्याः अखण्डाकार-वृत्तेरपि मूलाज्ञानभंजिकायाः विलयेन अधिष्ठानमात्रावशेषत्वं भवतीति भावः ॥३६२॥

निरन्तराभ्यासवशात्तदित्थं
पक्वं मनो ब्रह्मणि लीयते यदा।
तदा समाधिः स विकल्पवर्जितः
स्वतोद्वयानन्द-रसानुभावकः ॥३६३॥

इत्थं निरन्तराभ्यासवशात् पक्वं विपरीतभावनादि-दोषशून्यं मनः यदा ब्रह्मणि लीयते निर्वृत्तिकं ब्रह्ममात्रावशेषं भवति तदा स्वतः अप्रयत्नेन अद्वयानन्दरसानुभावकः अद्वयः यः आनन्दः ब्रह्मस्वरूपभूतः स एव रसः "रसो वै सः" इतिश्रुतेः परमप्रेमास्पदत्वाच्च रसत्वं। तदनुभवजनकः विकल्पवर्जितः सः अहमादि-सकलविश्ववासनाक्षयहेतुः समाधिः निर्विकल्पाख्य इत्यर्थः ॥३६३॥

तत्फलं कार्त्स्न्येनोपपादयति। समाधिनेति।

समाधिनानेन समस्तवासना-
ग्रन्थेर्विनाशोऽखिलकर्मनाशः।
अन्तर्बहिः सर्वत एव सर्वदा
स्वरूपविस्फूर्ति-रयत्नतः स्यात् ॥३६४॥

अनेन निर्विकल्पकाख्येन समाधिना योगेन समस्तवासनाग्रन्थेः ग्रन्थिवद्दुरुच्छेद्यतया स्थितानां समस्तवासनानां मिथ्याज्ञान-जनितानां विनाशः अत्यन्तमुच्छित्तिः, अखिलकर्मनाशः संचितानां सर्वेषां कर्माणां नाशः "भिद्यते हृदयग्रन्थिः, क्षीयन्ते चास्य कर्माणि" इतिश्रुतेः। अन्तर्बहिः सर्वत एव सर्वदा स्वरूपविस्फूर्तिरयत्नतः स्यात् स्पष्टम् ॥३६४॥

अतः

श्रुतेः शतगुणं विद्यान्मननं मननादपि।
निदिध्यासं लक्षगुणं अनन्तन्निर्विकल्पकम् ॥३६५॥

श्रुतेः श्रवणात् स्पष्टम् ॥३६५॥

निर्विकल्पकसमाधिना स्फुटं
ब्रह्मतत्वमवगम्यते ध्रुवम्।
नान्यथा चलतया मनोगतेः
प्रत्ययान्तरविमिश्रितं भवेत् ॥३६६॥

निर्विकल्पक-समाधिना ब्रह्मतत्वं स्फुटं करतलामलकवत् अवगम्यते ध्रुवं निश्चयः। अन्यथा प्रकारान्तरेण नावगम्यते। तत्र हेतुमाह मनोगतेश्चलतया प्रत्ययान्तरविमिश्रितं वृत्यान्तरसंकीर्णं भवेत् ॥३६६॥

अतस्समाधत्स्व यतेन्द्रियस्सन् निरन्तरं शान्तमनाः प्रतीचि।
विध्वंसय ध्वान्तमनाद्यविद्यया कृतं सदेकत्वविलोकनेन ॥३६७॥

अतः ब्रह्मतत्वस्फुटावगमार्थं सदा यतेन्द्रियः सन् यतानिं निगृहीतानि इन्द्रियाणि श्रोत्रादीनि येन सः यतेन्द्रियः निरन्तरं सन्ततं प्रशान्तमनाः शान्तं निर्विकारं मनः यस्य सः शान्तमनाः सन् प्रतीचि प्रत्यगात्मनि समाधत्स्व मनः संस्थापय, तज्जन्येन सदेकत्वविलोकनेन गतसकलभेद-ब्रह्म-साक्षात्कारेण, अनाद्यविद्यया अनादिः या अविद्या सर्वसंसारमूलभूता तया कृतं ध्वान्तं स्वरूपाप्रकाशं विध्वंसय विनाशय ॥३६७॥

निर्विकल्पक-समाधौ क्रमेणोपायानाह। योगस्येति।

योगस्य प्रथमं द्वारं वाङ्निरोधोऽपरिग्रहः।
निराशा च निरीहा च नित्यमेकान्तशीलता ॥३६८॥

योगस्य बाह्यसकलवृत्तिनिरोधस्य वाङ्निरोधः मौनं प्रथमं द्वारं कारणं व्यवहारेण मनोवृत्तीनां वर्धमानत्वात्। अपरिग्रहः शरीर-स्थितिमात्र-साधनातिरिक्त-भोगसाधनास्वीकारः तत्स्वीकारे तद्रक्षणादौ व्याप्रियमाणचित्तस्य वृत्तिनिरोधस्यासंभावितत्वात्। आशायां कर्मणि च चित्तं विक्षिप्यते जनसंघे स्थितौ च अतः निराशा च वैराग्यं, निरीहा च कर्मभ्य उपरतिः, नित्यमेकान्तशीलता एकान्ते विजने देशे शीलं स्थितिः यस्य एकान्तशीलः सः तद्भावः तत्ता च योगस्य हेतवः ॥३६८॥

एकान्तशीलतायाः योगहेतुत्वं उपपादयति। एकान्तेति।

एकान्तस्थिति-रिन्द्रियोपरमणे हेतुर्दमश्चेतसः
संरोधे करणं शमेन विलयं यायादहंवासना।
तेनानन्दरसानुभूतिरचला ब्राह्मी सदा योगिनः
तस्माच्चित्तनिरोध एव सततं कार्यः प्रयत्नान्मुनेः ॥३६९॥

एकान्तस्थितिः विजनदेश-निवासः इन्द्रियोपरमणे बहिरिन्द्रियाणां निर्व्यापारतायां हेतुः। बहिरिन्द्रियोपरम एव दमः सः चेतसः अन्तःकरणस्य संरोधे करणं "इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः" इति गीतोक्तेः।

विजनदेशे शब्दादिविषयाभावात् श्रोत्रादिष्ववहिर्मुखेषु अन्तःकरणं आत्माभिमुख्यं विन्दत इति भावः। स एव शमः। शमेन अहंवासना विलयं यायात् प्राप्नुयात् तेन योगिनः अनात्मभ्यो निरुद्धवृत्तिकस्य सदा सर्वदापि ब्राह्मी आनन्दरसानुभूतिः अनावृतब्रह्मस्वरूपा-नन्दाभिव्यक्तिः, अचला निश्चला च्युतिशून्या। तस्मात् बाह्येभ्यश्चित्ते निरुद्धे अहंवासनाया अपि क्षयेण ब्रह्मानन्दानुभवस्य निरर्गलत्वात् मुनेः मननशीलस्य प्रयत्नात् सततं चित्तनिरोध एव कार्यः। निर्विकल्पक-समाधिः सदानुष्ठेय इत्यर्थः। ॥३६९॥

"योगस्य प्रथमं द्वारं वाङ्निरोध" इत्युक्तं। तत्र प्रमाणं "यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेज्ज्ञानआत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छे-च्छान्त आत्मनि" इति कठश्रुतिः, तामर्थत आह। वाचमिति।

वाचं नियच्छात्मनि तं नियच्छ
बुद्धौ धियं यच्छ च बुद्धिसाक्षिणि।
तं चापि पूर्णात्मनि निर्विकल्पे
विलाप्य शान्तिं परमां भजस्व ॥३७०॥

वाचं वागिन्द्रियं आत्मनि मनसि नियच्छ निरुन्धि, वाग्व्यापारं विहाय आदौ मनोमात्रेणावतिष्ठस्व इत्यर्थः। पश्वादीनामिव यदा मौनं दृढं भवति ततः संकल्पविकल्पात्मकं मनोरूपात्मानं केवलाध्यवसाय-लक्षणायां बुद्धौ नियच्छ। तदा वास्यादिरहितः तक्षेव कर्त्र्यपि बुद्धिः बहिर्व्यापारेभ्यः शान्ता भवति। तां शान्तां धियं बुद्धिसाक्षिणि बुध्युपहिते चैतन्ये बुद्धेरुपाधित्वं भंक्त्वा केवलावबोधमात्रे यच्छ। शोधितत्वंपदार्थं जानीहीत्यर्थः। तंचापि पूर्णात्मनि त्रिविधपरिच्छेदशून्ये निर्विकल्पे निर्गुणे तत्पदलक्ष्ये ब्रह्मणि विलाप्य एकीकृत्य परमां आत्यन्तिकीं शान्तिं मोक्षरूपं भजस्व ॥३७०॥

वृत्तिनिरोधस्य स्वरूपानन्दाभिव्यंजकत्वं सोपपत्तिकमाह। देहेति।

देहप्राणेन्द्रियमनो-बुध्यादिभिरुपाधिभिः।
यैर्यैर्वृत्तेस्समायोगः तत्तद्भावोस्य योगिनः ॥३७१॥

तन्निवृत्या मुनेस्सम्यक्सर्वोपरमणं सुखम् ।
संदृश्यते सदानन्द-रसानुभव-विप्लवः ॥३७२॥

यथा स्वच्छोपि स्फटिकः नीलवस्त्रादियोगेन नीलादिरूपवत्वेन भाति स्वयं स्वच्छः सन्नेव, तथा अस्य आत्मनः देहप्राणेन्द्रिय-मनोबुध्यादिभिः आदिपदेन आनन्दमयकोशः गृह्यते। यैः यैः वृत्तेः समायोगः आकारताख्य-संबन्धः आन्तरैर्वा बाह्यैर्वा कोशैः तत्तद्भावः तत्तत्तादात्म्यं। तेन तदीयधर्मैः धर्मवत्वेन अविद्यास्मितारागद्वेषाभिनिवेशरूपाः पंच क्लेशाः। अस्यैव योगिनः बहिर्वृत्तीः निरुन्धतः। तत्र हेतुः मुनेरिति, कोशपंचकविवेक-प्रकारणोक्त-युक्तिभिःताननात्मत्वेन निषेधतः। तत्र अहंवृत्तीरकुर्वतः तन्निवृत्या देहाद्युपाधिनिवृत्या सर्वोपरमणं सर्वेषां दुःखात्मकानां अनात्मनां उपरमणं अभानं यत्र सुखे तत्सर्वोपरमणं सुखं सम्यग्भवतीति शेषः। तत्र मानं सदानन्दरसानुभवविप्लवः संदृश्यत इति। विप्लवः मग्नता पूर्णता वा, निदाघतप्तस्यजाह्नवी-ह्रदनिमग्नस्य यथा अन्तर्बहिरानन्दस्फूर्तिः तथा सर्वोपाधिविनिर्मुक्तस्य केवलीभूतस्य अखण्डानन्द-स्फूर्तिरिति भावः ॥३७२॥

एतस्मिन् निर्विकल्पकयोगे हेतुभूत-सर्वोपाधिनिवृत्तौ वैराग्यं "योगस्य प्रथमं द्वारं" इति सूत्रस्थानीये श्लोके निराशाशब्देन कथितं "विवेकवैराग्यगुणातिरेकात्" इतिश्लोके मनश्शुद्धिहेतुतया "ताभ्यां दृढाभ्यां भवितव्यमग्रे" इत्युक्तं तीव्रतमं अन्तरंगसाधनमिति निरूपयति। अन्तस्त्याग इति।

अन्तस्त्यागो बहिस्त्यागो विरक्तस्यैव युज्यते ।
त्यजत्यन्तर्बहिस्संगं विरक्तस्तु मुमुक्षया ॥३७३॥
बहिस्तु विषयैस्संगः तथान्तरहमादिभिः ।
विरक्त एव शक्नोति त्यक्तुं ब्रह्मणि निष्ठितः ॥३७४॥

अन्तर्बहिर्भावेन वर्तमानानां सर्वेषां अनात्मनां त्यागः विरक्तस्यैव युज्यते उपपद्यते। तत्र हेतुः विरक्तस्तु विरक्त एव मुमुक्षया कैवल्येच्छया-अन्तर्बहिस्संगं त्यजति। अहंममभावं न करोति। संगं विभज्य दर्शयति बहिरिति, बहिस्तु विषयैः पुत्रादिभिः शब्दादिभिश्च संगः, तथा अन्तः

अहमादिभिः देहप्राणमनोबुद्धयः आदिपदार्थः तैः संगः अवास्तवः तादात्म्य-रूपसम्बन्धः। इममुभयविधमपि संगं विरक्त एव निष्काममनस्क एव त्यक्तुं शक्नोति। त्यागे बीजमाह ब्रह्मणि निष्ठित इति। ब्रह्मण्येव नितरां सर्वदा स्थितः अप्रच्युतमना इत्यर्थः॥३७४॥

ब्रह्मात्मना संस्थितौ वैराग्यवद् बोधं कारणमाह। वैराग्येति।

वैराग्यबोधौ पुरुषस्य पक्षिवत्
पक्षौ विजानीहि विचक्षण त्वम्।
विमुक्ति-सौधाग्रतलाधिरोहणं
ताभ्यां विना नान्यतरेण सिध्यति॥३७५॥

हे विचक्षण त्वं पुरुषस्य मुक्तिं प्रेप्सतः वैराग्यबोधौ वैराग्यं च बोधश्च वैराग्यबोधौ वैराग्यमुक्तं, बोधः आत्मनात्मविवेकजन्यः आत्म-स्वरूप-याथात्म्यानुभवः पक्षिवत् पक्षिण इव पक्षिवत् षष्ठ्यन्ताद्वतिः पक्षौ विजानीहि। तत्र हेतुः विमुक्ति-सौधाग्रतलाधिरोहणं विमुक्तिरूपं सौधाग्र-तलं रम्यरम्यमुच्चस्थानं तस्याधिरोहणं प्राप्तिः, ताभ्यां समुच्चिताभ्यां विना अन्यतरेण वैराग्येण वा बोधेन वा एकेन न सिध्यति। नहि पक्षी एकेन पक्षेण अम्बरतलं गाहितुमीष्टे तद्वत्प्रकृतेपीतिभावः॥३७५॥

तदुपपादयति। अत्यन्तेति।

अत्यन्तवैराग्यवतः समाधिः
समाहितस्यैव दृढप्रबोधः।
प्रबुद्धतत्वस्य हि बन्धमुक्तिः
मुक्तात्मनो नित्यसुखानुभूतिः॥३७६॥

अत्यन्तवैराग्यवतः अत्यन्तं यथा मनः पुनः नैव सज्जते अनात्मसु तथा तीव्रवैराग्यं जुगुप्सा अस्यास्तीति अत्यन्तवैराग्यवान् तस्य समाधिः ब्रह्मनिष्ठा संभवति। समाहितस्यैव ब्रह्मणि संस्थापितमनस्कस्यैव दृढ-प्रबोधः प्रत्ययान्तरामिश्रितब्रह्मप्रत्ययः। प्रबुद्धं तत्वं येन सः प्रबुद्धतत्वः तस्य बन्धमुक्तिः अनात्मनि आत्मबुध्यनुत्पत्तिः। मुक्तात्मनो नित्य-सुखानुभूतिः मुक्तः आत्मा यस्य सः मुक्तात्मा अतस्मिन् तद्बुद्धिरहितान्तः-

करणस्तस्य नित्यं यत् सुखं आत्मस्वरूपं तदनुभूतिः आवरणविक्षेपशून्य-ज्ञानवत्वा-न्निरर्गलात्मानन्दानुभवः इति भावः ॥३७६॥

न सुखं देवराजस्य न सुखं चक्रवर्तिनः। यादृशं वीतरागस्य मुनेरेकान्तशीलिनः। यच्च कामसुखं लोके यच्च दिव्यं महत्सुखं। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलां। यावानर्थ उदपाने सर्वतः संप्लुतोदके। तावान्वेदेषु सर्वेषु ब्राह्मणस्य विजानतः। "श्रोत्रियस्यचाकामहतस्य" "सोश्नुते सर्वान्कामान्त्सह" इत्यादिप्रमाणसिद्धमर्थं वैराग्यस्य बोधस्य च फलं स्वानुभवसिद्धं प्रस्तौति। वैराग्यादिति।

वैराग्यान्नपरं सुखस्य जनकं पश्यामि वश्यात्मनः
तच्चेच्छुद्ध-तरात्मबोधसहितं स्वाराज्य-साम्राज्यधुक्।
एतद् द्वारमजस्रमुक्तियुवतेः यस्मात्त्वमस्मात्परं
सर्वत्रास्पृहया सदात्मनि सदा प्रज्ञां कुरु श्रेयसे ॥३७७॥

वश्यात्मनः वश्यः आत्मा कार्यकरणसंघातः यस्य आसनप्राणायामादिना देहेन्द्रियादिवशीकारेपि वैराग्यं विना सुखं नास्ति, अणिमादिविभूतिषु सक्तानां वन्धस्य अवर्जनीयत्वात्। अवगम्यते हि पुराणादौ हिरण्यकशिप्वादयः महत् तपः समास्थायापि वैराग्याभावात् संसारिणः बभूवुरिति। नहि तादृशं तपः अस्थिष्वपिं पिपीलिकासंचारेपि अच्युतत्वं तपसः वश्यात्मत्वं विना संभवति। अतः वश्यात्मनोपि सुखं वैराग्यं विना न संभवतीत्युच्यते। देहादिकं अवशयतः वैराग्यं नैव संभवति इति वश्यात्मन इत्युक्तम्। तथाच हठयोगादिना वश्यात्मनोपि सुखस्य जनकं वैराग्यात्परं न पश्यामि। तत् वैराग्यं शुद्धतरः य आत्मबोधः पंचकोशविवेकजन्यात्म-स्वरूपावगमः तेन सहितं चेत् स्वाराज्य-साम्राज्यधुक्, स्वयमेव राट् स्वराट्, रागसत्तायां हि विषयगमनेन मनसः तदधीनता, वैराग्ये अनन्याधीनः, तस्य भावः स्वाराज्यं इतरानियम्यत्वं तच्च साम्राज्यं सर्वनियामकत्वं ब्रह्मविदः ईश्वरादप्यधिकत्वात्। ते स्वाराज्य-साम्राज्ये दोग्धीति स्वाराज्य-साम्राज्यधुक्। यस्मात् एतत् वैराग्यं अजस्रमुक्तियुवतेः द्वारं, तत्तु "अत्यन्तवैराग्यवतः समाधिः" इति पूर्वश्लोके कथितं। अस्माद्धेतोः त्वं सर्वत्र विषयेषु परमत्यन्तं अस्पृहया, सदात्मनि सद्रूपे

ब्रह्मणि सदा निरंतरं, श्रेयसे मुक्तये प्रज्ञां तत्त्वप्रवोधहेतुं निर्विकल्पकसमाधिं कुरु इत्यर्थः। ज्ञानस्य वस्तुतन्त्रत्वेन कर्तुमशक्यत्वात् प्रज्ञा समाधिः तद्धेतुः ॥३७७॥

आशां छिन्धि विषोपमेषु विषयेष्वेषैव मृत्योस्सृतिः
त्यक्त्वा जातिकुलाश्रमेष्वभिमतिं मुंचातिदूरात्क्रियाः।
देहादावसति त्यजात्मधिषणां प्रज्ञां कुरुष्वात्मनि
त्वं द्रष्टास्यमलोसि निर्द्वय-परब्रह्मासि यद्वस्तुतः ॥३७८॥

विषोपमेषु विषयेषु आशां छिन्धि, एषैव आशैव मृत्योः स्वरूपात्प्रच्युतिरूपप्रमादस्य सृतिः मार्गः। जातिकुलाश्रमेषु अभिमतिं त्यक्त्वा, क्रियाः जात्यादिनिमित्ताः अतिदूरान्मुंच। असति मिथ्याभूते देहादौ आत्मधिषणां अहंबुद्धिं त्यज मा कार्षीः। यत् यस्मात्कारणात् त्वं द्रष्टासि देहादेर्दृश्यस्य, अमलोसि देहादेः समलत्वात्। वस्तुतः निर्गतं द्वयं यस्मात् निर्द्वयं अद्वैतं तच्च तत् परब्रह्म असि, तस्मात् आत्मनि ब्रह्मणि प्रज्ञां अहंब्रह्मास्मीति ज्ञानं कुरुष्व निर्विकल्पक-समाधिना संपादय ॥३७८॥

लक्ष्ये ब्रह्मणि मानसं दृढतरं संस्थाप्य बाह्येन्द्रियं
स्वस्थाने विनिवेश्य निश्चलतनुश्चोपेक्ष्य देहस्थितिम्।
ब्रह्मात्मैक्यमुपेत्य तन्मयतया चाखण्डवृत्यानिशं
ब्रह्मानन्दरसं पिबात्मनि मुदा शून्यैः किमन्यैर्भ्रमैः ॥३७९॥

"प्रारब्धं पुष्यति वपुः" इति निश्चित्य देहस्थितितत्पोषणादावभिमानं उपेक्ष्य त्यक्त्वा, निश्चलतनुः "स्थिरसुखमासनं" इतियोगसूत्रानुसारेण निश्चलातनुः यस्य, सुखासने उपविश्य बाह्येन्द्रियं ज्ञानकर्मेन्द्रिय ग्रामं स्वस्थाने स्वस्वगोलके विनिवेश्य "विविक्तदेशे च सुखासनस्थः शुचिस्समग्रीवशिरश्शरीरः। अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य। हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्येविशदं विशोकं। अचिन्त्य-मव्यक्त-मनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्। तदादिमध्यान्तविहीनमेकं विभुं चिदानन्द-मरूपमद्भुतं। उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं। ध्यात्वा मुनिर्गच्छति भूतयोनिं

समस्तसाक्षि तमसः परस्तात्" इति कैवल्यश्रुतेः लक्ष्ये ब्रह्मणि मानसं दृढतरं निश्चलं संस्थाप्य ब्रह्मात्मैक्यमुपेत्य साक्षात्कृत्य अनिशं च अखंडवृत्या तन्मयतया ब्रह्मरूपतया आत्मनि, ब्रह्मानन्दरसं मुदा पिब। शून्यैः फलरहितैः अनर्थदैश्च अन्यैः अनात्मविषयकैः भ्रमैः अयथार्थज्ञानैः किम्? ॥३७९॥

करुणातिरेकात् भगवान् आत्मनिष्ठां मुहुरुपदिशति। अनात्मेति।

अनात्मचिंतनं त्यक्त्वा कश्मलं दुःखकारणम्।
चिन्तयात्मानमानन्दरूपं यन्मुक्तिकारणम् ॥३८०॥

कश्मलं अशुचिविषयकतया अशुचि, अत एव दुःखकारणं अनात्मचिन्तनं त्यक्त्वा यत् मुक्तिकारणं आत्यन्तिक-दुःखनिवृत्तिहेतुः तं आनन्दरूपमात्मानं चिन्तय ॥३८०॥

चिन्तनप्रकारमुपदिशति। एष इति। धियं यच्छ च बुद्धिसाक्षिणीत्यस्यार्थमाह।

एषस्वयंज्योति-रशेषसाक्षी विज्ञानकोशे विलसत्यजस्रम्।
लक्ष्यं विधायैनमसद्विलक्षणं अखण्डवृत्यात्मतयानुभावय ॥३८१॥

एष आत्मा स्वयंज्योतिः इतराप्रकाश्यः, अशेषसाक्षी सर्वद्रष्टा, विज्ञानकोशे बुद्धौ विलसति अशेषेण भासते। असद्विलक्षणं सर्वावस्थास्वनुवर्तमानत्वेन स्वयंज्योतिष्ट्वेन सर्वसाक्षितया च जडदृश्यबुध्यादिविलक्षणं एनं अजस्रं, लक्ष्यं विधाय तत्रैव मनः स्थापयित्वा अखण्डवृत्या इतरप्रत्ययामिश्रया धारावाहिक्या आत्मतया स्वस्वरूपतया अनुभवाय साक्षात्कुरु ॥३८१॥

वृत्तावखण्डत्वं स्फुटयति। एतमिति।

एतमच्छिन्नया वृत्या प्रत्ययान्तरशून्यया।
उल्लेखयन् विजानीयात् स्वस्वरूपतया स्फुटम् ॥३८२॥

प्रत्ययान्तरशून्यया विजातीयप्रत्ययातिरस्कृतया अविच्छिन्नया निर्मलवर्तितैलदीपज्वालावत् तैलधारावत् धारया वहन्त्या वृत्या एतं

आत्मानं उल्लेखयन् विषयीकुर्वन् स्वस्वरूपतया स्फुटं विजानीयात् ॥३८२॥

अत्रात्मत्वं दृढीकुर्वन् अहमादिषु संत्यजन्।
उदासीनतया तेषु तिष्ठेद् घटपटादिवत् ॥३८३॥

अत्र परमात्मनि आत्मत्वं स्वस्वरूपत्वं दृढीकुर्वन् निश्चिन्वन् अहमादिषु संत्यजन् तेषु कदाचित्प्रतीतेष्वपि घटपटादिवत् घटपटादिष्विव तेषु उदासीनतया अहंताशून्यतया तिष्ठेत् ॥३८३॥

वाचं नियच्छात्मनीत्यत्रोक्तं तंचापि पूर्णात्मनीति स्फुटं प्रतिपादयति। विशुद्धमिति।

विशुद्धमन्तःकरणं स्वरूपे निवेश्य साक्षिण्यवबोधमात्रे।
शनैश्शनैर्निश्चलतामुपानयम् पूर्णत्वमेवानुविलोकयेत्ततः ॥३८४॥

विशुद्धं तमोरजोहीनं अन्तःकरणं अवबोधमात्रे अनुपहिते साक्षिणि स्वरूपे साक्षित्वोपलिक्षते निवेश्य संस्थाप्य शनैश्शनैः निश्चलतामुपानयन् तत्रैव स्थितौ यत्नं कुर्वन् ततः पूर्णत्वमेवानुविलोकयेत्। दर्पणापनये प्रतिबिंबं मुखमिव सर्वासु वृत्तिषु निरुद्धासु चिदाभासोपि बिंबभूतं ब्रह्मैव भवतीति भावः ॥३८४॥

एवमखण्डाकारवृत्या भंजिते सत्यज्ञानावरणे तत्कृतविक्षेपाः दूरनिरस्ता एव भवन्ति इतिभावेनाह। स्वाज्ञानक्लृप्तैरिति।

देहेन्द्रिय-प्राणमनोहमादिभिस्स्वाज्ञान-क्लृप्तैरखिलैरुपाधिभिः।
विमुक्तमात्मान-मखण्डरूपं पूर्णं महाकाशमिवावलोकयेत् ॥३८५॥

स्पष्टमन्यत् ॥३८५॥

तत्र चतुर्थपदार्थमुपपादयन् दार्ष्टान्तिकमुपपादयति। घटेति।

घटकलश-कुसूल-सूचिमुख्यै-र्गगनमुपाधिशतै-र्विमुक्तमेकम्।
भवति न विविधं तथैव शुद्धं परमहमादिविमुक्तमेकमेव ॥३८६॥

कुसूलः यत्र धान्यराशिः संम्रियते स महापरिमाणः, सूचिः अत्यल्पच्छिद्रा, अल्पैः महद्भिश्च घटकलश-कुसूल-सूचिमुख्यैः मुख्यपदेन पाश-

कूपादिपरिग्रहः उपाधिशतैः सूच्याकाशः पाशाकाशः इत्यादिभिन्नभिन्न-व्यवहार-प्रयोजकैः परस्सहस्रोपाधिभिः विमुक्तं गगनं एकं भवति महाकाश इतिव्यवह्रियते न वस्तुतः विविधं अनेकप्रकारं भवति। तथैव शुद्धं परं ब्रह्म अहमादिविमुक्तं एकमेव ॥३८६॥

दार्ष्टान्तिके मृषात्वाच्चोपाधीनां सुलभमेकत्वज्ञानमित्याह। ब्रह्मेति।

ब्रह्माद्याःस्तंबपर्यन्ता मृषामात्रा उपाधयः।
ततः पूर्णं स्वमात्मानं पश्येदेकात्मना स्थितम् ॥३८७॥

ब्रह्मा समष्टि-लिंगशरीराभिमानी चतुर्दशभुवनाधिपतिः स आद्यः येषामुपाधीनां ते ब्रह्माद्याः, स्तंबः अणुतमो जन्तुः सः पर्यन्तः अवधिः येषां ते स्तंबपर्यन्ताः उपाधयः भेदकदेहाः मृषामात्राः सर्वाधिष्ठाने ब्रह्मणि कल्पिताः न वस्तुभूताः बाधयोग्याः इत्यर्थः। ततः विमृश्यमाने तेषा-मप्रतीयमानत्वात् एकात्मना कल्पार्णववत्स्थितं पूर्णं त्रिविधपरिच्छेदशून्यं स्वमात्मानं स्वमुख्यस्वरूपं ब्रह्म पश्येत् साक्षात्कुर्यात् ॥३८७॥

सोपपत्तिकं ब्रह्मव्यतिरेकेण भेदकत्वेनाभिमतं किमपि नास्तीत्याह। यत्रेति।

यत्र भ्रान्त्या कल्पितं यद्विवेके
तत्तन्मात्रं नैव तस्माद्विभिन्नम्।
भ्रान्तेर्नाशे भ्रान्तिदृष्टाहितत्वं
रज्जुस्तस्माद्विश्वमात्मस्वरूपम् ॥३८८॥

यत्राधिष्ठाने भ्रान्त्या यत्कल्पितं आरोपितं तत् तन्मात्रं अधिष्ठान-मात्रं भवति विवेके। विचारं कृत्वा जातेन नायं सर्प इत्यादिनिषेधेन भ्रान्तेः अयं सर्प इत्याकारिकायाः नाशे सति भ्रान्त्या दृष्टं यदहितत्त्वं सर्पस्वरूपं रज्जुरेव तद्वत्। अथात आदेशो नेति नेति इत्यादिवाक्यैः जनितनिषेधज्ञानेन विश्वं सर्वं जगत् अधिष्ठानभूतात्मस्वरूपं पश्चान्नैव प्रतीयते रज्जुसर्पवदिति भावः ॥३८८॥

स्वयंब्रह्मा स्वयंविष्णुः स्वयमिन्द्रः स्वयंशिवः।
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्नकिंचन ॥३८९॥

"तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च" इत्यादिश्रुतेः, "सयश्चायं पुरुषे यश्चासावादित्ये स एकः" इतिच, एकमेव चैतन्यं उपाधिभेदात् ब्रह्मा विष्णुः शिव इन्द्रः इत्येवं व्यवह्रियते। एकैव रज्जुः सर्पः दण्डः जलधारा भूतलच्छिद्रं इति यथा कल्प्यते तथा इदं सर्वं विश्वं स्वयं ब्रह्मैव स्वस्मादन्यन्न किंचन सामान्ये विशेषाणां कल्पितत्वात् स्वयमहं पश्यामि स्वयं त्वं पश्य स्वयं स अद्राक्षीत् इत्यादिव्यवहारेष्वपि अहंत्व-त्वन्त्व-तत्तादीनां व्यावर्तमानत्वेऽपि स्वयन्त्वस्य सर्वत्रानुवर्तमानत्वेन स्वयंपदार्थे आत्मनि सर्वे विशेषाः कल्पिताः तदतिरेकेण न सन्तीतिभावः ॥३८९॥

"ब्रह्मैवेदममृतं पुरस्तात्ब्रह्म पश्चात् ब्रह्मदक्षिणतश्चोत्तरेण, अहमेवाधस्तात् आत्मैवाधस्तात्" इत्यादिमुण्डकछान्दोग्यादिश्रुत्यर्थं ध्यानदार्ढ्याय वृत्याखण्ड्याय च उपदिशति। अन्तरिति।

अन्तस्स्वयं चापि बहिस्स्वयं
च स्वयं पुरस्तात्स्वयमेव पश्चात्।
स्वयं ह्यवाच्यां स्वयमप्युदीच्यां
तथोपरिष्टात्स्वयमप्यधस्तात् ॥३९०॥

तरंगफेनभ्रमबुद्बुदादि सर्वं स्वरूपेण जलं यथा तथा।
चिदेव देहाद्यहमन्तमेतत् सर्वं चिदेवैकरसं विशुद्धम् ॥३९१॥

भ्रमः आवर्तः, तरंगफेनभ्रमबुद्बुदादि सर्वं स्वरूपेण यथा जलमेव नातिरिक्तमस्ति तथा देहादि अहमन्तं अहंकारान्तं एतत् सर्वं विशुद्धं एकरसं चिदेव। यस्य स्फुरणं विना यन्न स्फुरति न तत्ततोतिरिच्यते यथा रज्जुसर्पादि। "तमेव भान्तमनुभातिसर्वं तस्य भासा सर्वमिदं विभाति" इतिश्रुतेः आत्मभानव्यतिरेकेण भानाभावात् सर्वमात्मैव॥ ३९१ ॥

सदेवेदं सर्वं जगदवगतं वाङ्मनसयोः
सतोन्यन्नास्त्येव प्रकृतिपरसीम्नि स्थितवतः।
पृथक्किं मृत्स्नायाः कलशघटकुम्भाद्यवगतम्
वदत्येष भ्रान्तस्त्वमहमिति मायामदिरया॥३९२॥

सन्घटः सन्पटः सत्कुड्यं इत्यादिवाचा सामानाधिकरण्यवत्या, भिन्नप्रवृत्तिनिमित्तकयोः शब्दयोः एकस्मिन्नर्थे वृत्तित्वं पदनिष्ठं सामानाधिकरण्यम्। "एकत्र वृत्तिरर्थे शब्दानां भिन्नवृत्तिहेतूनां। सामानाधिकरण्यं भवतीत्येवं वदन्ति लाक्षणिकाः" इतिस्वात्मनिरूपणोक्तेः। मनसा च तादृशवाग्जन्यप्रत्ययेनच इदं सर्वं जगत् सदेवेत्यवगतं वाङ्मनसयोरिति निमित्तसप्तमी वाङ्मनसाभ्यामित्यर्थः। यद्वा वाक् "ऐतदात्म्यमिदं सर्वं, वाचारम्भणं विकारो नामधेयं" इत्यादिश्रुतिः मनः प्रपंचप्रविलापनमार्गेण "जनिविपरीतक्रमतो बुध्या प्रविलाप्य पंचभूतानि। परिशिष्टमात्मतत्वं पश्यन्नास्ते मुनिश्शान्तः" इतिरीत्या अधिष्ठानमात्रविषयिणी अखण्डाकारवृत्तिः, तयोः वाङ्मनसयोःतस्यां वाचि तस्यां वृत्तौ च ब्रह्मव्यतिरेकेण जगन्नैवावगम्यत इति यश्चोरः स स्थाणुरितिवत् इदं सर्वं जगत् सदेव सद्व्यतिरेकेण नास्ति यश्चोरत्वेन ज्ञातः स स्थाणुः इति चोरत्वे बाधिते तयोः पदयोः सामानाधिकरण्यं एवं ब्रह्मैवेदं विश्वं ऐतदात्म्यमिदं सर्वं इत्यादिश्रुतिषु सर्वत्वं बाधित्वा यत्सर्वत्वेन ज्ञातं तद्ब्रह्मैवेति बोध्यते। इदमुपपादितमधस्तात्। वाङ्मनसयोरित्युक्तमर्थं विशदयति सत इति। प्रकृतिपरसीम्नि प्रकृतीनां उपादानानां परा या सीमा उपादानत्वविश्रान्तिभूमिः सर्वोपादानं ब्रह्मेत्यर्थः। तत्र स्थितवतः, यद्वा प्रकृतेः मूलप्रकृतेः मायायाः परा या सीमा तस्या अपि कल्पनाधिष्ठानं निर्गुणं ब्रह्म तत्र स्थितवतः सतोन्यन्नास्त्येव "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इतिश्रुतेः। एतेन सर्वेषां बाध उपादानेन अज्ञानेन सह नाशः उक्तो भवति। तमंशं दृष्टान्तेनाह, पृथगिति घटकलश-कुम्भादि पूर्वं पृथक्त्वेनावगतं विचार्यमाणे मृत्स्नायाः मृदः पृथक्किम्? वाचारम्भणश्रुतेः। अयमंशः विस्तरेण मृत्कार्यंभूतोपीत्यादिना स्वयमाचार्यैः उपपादितः। मायामदिरया भ्रान्तः त्वं एषः अविवेकी अहमिति एकमपि वस्तु पृथग्वदति। मायैव मदिरा विपरीतग्राहकत्वात्॥३९२॥

अतः भ्रान्तिनाशार्थं अद्वैतवस्तु चिन्तनीयमित्याह श्रुत्यवष्टंभेन। क्रियासमभिहारेणेति।

क्रियासमभिहारेण यत्र नान्यदितिश्रुतिः।
ब्रवीति द्वैतराहित्यं मिथ्याध्यासनिवृत्तये ॥३९३॥

"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इतिश्रुतिः क्रियासमभिहारेण पौनःपौन्येन द्वैतराहित्यं द्वयोर्भावः द्विता सैव द्वैतं तस्य भेदस्य राहित्यं अभावं ब्रवीति। किमर्थमिति चेत् मिथ्याध्यासनिवृत्तये मिथ्याभूतः यः अध्यासः भेदभ्रमः तन्निवृत्तये। यद्वा अध्यासशब्देन प्रपंचरूपार्थाध्यासः ग्राह्यः तस्य निवृत्तये तस्य अधिष्ठानावशेषत्व-लक्षणनाशाय वाधायेति यावत् "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इत्यभियुक्तोक्तेः रज्जुसर्पादौ दृष्टत्वाच्च। यदि विश्वं सत्यं स्यात् कथं दर्शन-श्रवण-विज्ञानादिविषयो नस्यात्। अतः ब्रह्मणि वर्तमानस्य पुरुषस्य विश्वभानाभावात् मिथ्येति भावः ॥३९३॥

ब्रह्मस्वरूपं सम्यक् चित्ते आरोहयति ध्यातुम्। आकाशेति।

आकाशवन्निर्मल-निर्विकल्प-
निस्सीम-निस्स्पंदननिर्विकारम्।
अन्तर्बहिश्शून्यमनन्य-मद्वयं
स्वयं परं ब्रह्म किमस्ति बोध्यम् ॥३९४॥

अन्तर्बहिश्शून्यमित्यन्तं आकाशब्रह्मणोः साधर्म्यं, अनन्यं अद्वयमिति ब्रह्मविशेषणं, आकाशवत् निर्मलं नह्याकाशं धूल्यादिभिः धूसरितं भवति तथा ब्रह्मापि अज्ञानाद्यस्पृष्टं वस्तुतः निर्विकल्पं एकरूपं इत्यर्थः। निस्सीमं अनवधि, निस्स्पन्दनं निष्क्रियं, निर्विकारं उत्पत्तिनाश-वृद्धिह्रासादिशून्यं, अन्तर्बहिश्शून्यं परिच्छिन्नस्य हि अन्तर्बहिरिति, पूर्णत्वात् अन्तर्बहिश्शून्यं स्वगतभेदरहितं, अनन्यत् प्रत्यगभिन्नं न अन्यत् अनन्यत्, अद्वयं न विद्यते द्वयं यस्य अद्वितीयं इत्यर्थः। विजातीयशून्यं, स्वयं स्वतस्सिद्धं परं ब्रह्म तस्मिन् बुद्धे किं अस्ति बोध्यं। एकस्मिन् विदिते सर्वं विदितं भवति इति सर्वात्मके परमात्मनि विदिते न किमपि बोद्धव्यमवशिष्यत इतिभावः।

यद्वा अनन्यत् सर्वात्मकं अत एवाद्वयं स्वव्यतिरिक्तद्वितीयशून्यं परंब्रह्मैव स्वयं जीवः आत्मा अतः अन्यत् बोध्यं किमस्तीत्यर्थः। आकाशवदिति श्रोतृबुध्यारोहाय दृष्टान्तः इषुरिव सविता धावतीतिवत्। नहि ब्रह्मणः सदृशं वस्तु विद्यते "न तत्सम" इतिश्रुतेः। आकाशस्य "प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः" इत्युत्पत्तिसाधनात्। लोके तदुत्पत्यादेः अदृष्टत्वात् तद्वन्निर्विकारं ब्रह्मेति "आकाशवत्सर्वगतश्च नित्यः" इत्यादिवद्वक्तुं शक्यत्वात्॥३९४॥

वक्तव्यं किमु विद्यतेत्र बहुधा ब्रह्मैव जीवस्स्वयं
ब्रह्मैतज्जगदापराणु सकलं ब्रह्माद्वितीयं श्रुतेः।
ब्रह्मैवाहमिति-प्रबुद्धमतयः सन्त्यक्तबाह्याः स्फुटं
ब्रह्मीभूय वसन्ति संततचिदानन्दात्मनैव ध्रुवम् ॥३९५॥

अत्र ब्रह्मैकत्वविषये बहुधा अनेकप्रकारैः वक्तव्यं किमु विद्यते, सम्यग्बुध्यारोहाय बहुभिः दृष्टान्तैः सर्ववेदान्ततात्पर्य-विषयार्थः प्रतिपादितः तं संग्रहेण कथयति। विस्तरसंग्रहाभ्यां उक्तोर्थः सम्यज्ज्ञातुं शक्यत इति वदन्ति "श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः। ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इति। ब्रह्मैव जीवस्स्वयं जीवत्वमेवौपाधिकं ब्रह्मत्वं तु जीव इतिज्ञातस्य वास्तविकं स्वरूपं रज्जुरिव सर्पस्य। अतः जीवस्स्वयं ब्रह्मैव न व्यतिरिक्तः। आपराणु परमाणुपर्यन्तं सकलमेतत् जगत् वियदादि ब्रह्मैव तज्जत्वात् तल्लत्वात् तदनत्वात् च "सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीत" इतिश्रुतेः तज्जलानमिति भवितव्ये अवयवलोपश्छान्दसः परमे व्योमन् इत्यादिवत्। अनादि अज्ञानादिकमपि तत्राधिष्ठाने कल्पितमिति न ततोतिरिच्यते अतः ब्रह्म अद्वितीयं स्वव्यतिरिक्तवस्तुशून्यं "तत्त्वमसि" "अयमात्मा ब्रह्म" "इदं सर्वं यदयमात्मा" "आत्मैवेदं सर्वं" "ब्रह्मैवेदं सर्वं" "एकमेवाद्वितीयं" इत्यादिश्रुतेः। ब्रह्मैवाहमिति-प्रबुद्धमतयः प्रबुद्धा श्रुत्याचार्योपदेशेन ज्ञातज्ञेया मतिः बुद्धिः येषां ते प्रबुद्धमतयः स्फुटं वासनया सह सन्त्यक्तबाह्याः स्वरूपतस्त्यक्ताहमादयः ब्रह्मीभूय, पूर्वमज्ञानात् अब्रह्मत्वं स्वस्य कल्पितं तदभिप्रायेण च्विप्रत्ययः, साक्षात्कृतब्रह्मभावाः संततचिदानन्दात्मनैव

वसन्तीति विद्वदनुभवः उक्तः। एतत् ध्रुवं निश्चयः। यद्वा ध्रुवं निश्चलतया वसन्तीतियोजना ॥३९५॥

स्फुटं सन्त्यक्तबाह्यत्वात्,

जहि मलमयकोशेऽहंधियोत्थापिताशां,
प्रसभमनिलकल्पे लिंगदेहेपि पश्चात्।
निगमगदितकीर्तिं नित्यमानन्दमूर्तिं,
स्वयमिति परिचीय ब्रह्मरूपेण तिष्ठ ॥३९६॥

मलमयकोशे प्राचुर्यार्थे मयट्, स्थूलदेहे अहंधिया उत्थापिता जनिता या आशा तस्मिन् पोषणार्थेषु च, तां प्रसभं बलात्कारेण जहि नाशय। मलमयेति हेतुगर्भं विशेषणं अहंधियः हानार्थम्। उक्तं हि "पिण्डाण्डं त्यज्यतां मलभाण्डवदिति।" पश्चात् स्थूलदेहसम्बन्ध्याशानाशानन्तरं अनिलकल्पे वायुवददृश्ये लिंगदेहेपि सप्तदशावयवोपेते सूक्ष्मशरीरे अपि अहंधिया उत्थापिता या आशा मनोनुकूल-विषयेषु, तां जहि प्रथमत एव सूक्ष्मत्यागस्य दुष्करत्वात् दूरदूर-स्थूलपदार्थत्यागेन सन्निहितसूक्ष्मत्यागः सुकरः इति स्थूलपदार्थ-विषयाशाः जहीत्यादावुक्तम्। तत्र हेतुः अहंधी-रिति-कथनेन दृष्टभीभत्से अहंधियोभावे आशा नैव जायते निमित्ता-पायात् इति सूचितं। श्रुतिश्च अस्माल्लोकात्प्रेत्य, एतमन्नमयमात्मान-मुपसंक्रामतीत्यादिना पुत्रमित्रादिषु बाह्येषु अहंतां त्यक्त्वा देहमात्र-मात्मत्वेन मन्वीत, ततः ततोन्तरं प्राणमेव इति प्रतिपत्तॄणां सौकर्याय उपदिदेश। तेनैव क्रमेण प्रथमं देहार्थ-पुत्रादिविषयेषु आशापरित्यागः आशैव त्यक्तव्या इति यदा तदा किं वक्तव्यं अहंताया विषये। ततः स्थूल-शरीरे अहंतायाः आशायाश्च त्यागः, ततः प्राणमय-मनोमय-विज्ञानमय-घटिते सूक्ष्मशरीरे पंचकोशविवेकप्रकरणोक्तयुक्तिभिः अहंधियं तत्प्रयो-ज्याशां च जहि नाशय, मानभूवं हि भूयासं इति परप्रेमात्मनि सर्वस्यास्ति। स्थूलादावहंधियि अयं प्रेमा तत्रैव भवतीति आशा दुर्निरसा। अतः क्रमेण-विचारेण जनितदृढ-विवेकज्ञानेन स्थूल-सूक्ष्मशरीरयोः अहंतायां त्यक्तायां प्रियमोदाद्यवयवोपेतानन्दमयकोशे सावयवत्वाद् औपाधिकत्वाच्च अनित्यत्वनिश्चयेन अहंता नैव संभवति। एवं पंचकोशान् अनात्मत्वेन

निश्चित्य, निगमगदितकीर्तिं निगमैः वेदैः गदिता कीर्तिः सर्वज्ञत्व-सर्वशक्तत्व - सर्वप्राणिप्राणयितृत्व - सर्वप्रशास्तृत्व - विशिष्टसगुणाधिष्ठानत्व-सच्चिदानन्दघनत्व-वाङ्मनसागोचरत्व-निराधारत्व-निर्गुणत्व - निष्कलत्व-निर्विकल्पत्व-निरंजनत्व-सूक्ष्मतमत्व-नित्यशुद्ध-मुक्तबुद्ध-सत्यानन्द-स्वभावत्वादिरूपा यस्य तं, नित्यमानन्दमूर्तिं, एतेन आनन्दमयकोशनिरासः तस्य नित्यत्वाभावात् परमात्मानं स्वयमिति स्वस्वरूपमिति, परिचीय निश्चित्य अनुभूय ब्रह्मरूपेण तिष्ठ कोशानां पंचानां अनात्मत्वेन निषिद्धत्वात् ब्रह्मैवात्मेत्यनंगीकारे नैरात्म्यवादप्रसंगात् अत एव श्रुतिः "असन्नेव स भवति" इत्यादिः ॥३९६॥

शवाकारं यावद्भजति मनुजस्तावदशुचिः,
परेभ्यस्स्यात्क्लेशो जननमरण-व्याधिनिरयाः।
यदात्मानं शुद्धं कलयति शिवाकारमचलं,
तदा तेभ्यो मुक्तो भवति हि तदाह श्रुतिरपि ॥३९७॥

मनुजः यावत्कालं, स्थूलदेहतादात्म्येन चैतन्यहीनतया तस्य शवत्वं, पादांगुष्ठ-प्रभृति-शिरःपर्यन्तं यच्छरीरं तदेवाहमिति शवाकारं भजति तावत्कालं तस्य मलमयतया अशुचित्वात् अयमपि स्वतः शुचिरपि अशुचिः। तथा परेभ्यः शत्रुव्याघ्रादिभ्यः क्लेशः स्यात्। जननमरण-व्याधिनिरयाः अस्मिन्लोके जननमरण-व्याधयः, देहमात्मत्वेन मत्वा स्थितस्य पापवत्वात् "योन्यथा सन्तमात्मानं" इतिस्मृतेः देहपाते निरयः। एवं सदा दुःखवत्वमेव "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इतिश्रुतेः "न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे" इति यमवचनरूपश्रुतेश्च। यदा आत्मानं साधनचतुष्टयसंपन्नः विधिवद् गुरुमुपसद्य तन्मुखारविन्द-गलित-श्रुत्यन्त-वाक्यैः तदनुसारियुक्तिभिश्च शुद्धं देहत्रयातीतं शिवाकारं आनन्दस्वरूपं अचलं अप्रमादं यथा तथा कलयति जानाति तदा तेभ्यः परकृतक्लेशेभ्यः जननमरण-व्याधिनिरयेभ्यश्च मुक्तो भवति। हि निश्चयः। तत् श्रुतिरप्याह, तदपि श्रुतिराह इति अपिशब्दः भिन्नक्रमोवा। पूर्वार्धं समुच्चिनोति। यथाश्रुते अपिना अनुभवः समुच्चीयते गुरवश्च।

आहापीति वा अन्वयः,, "अशरीरंवाव सन्तं न प्रियाप्रिये स्पृशतः, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन, तरति शोकमात्मवित्, ज्ञात्वा देवं मुच्यते सर्वपाशैः, तमेवं विद्वानमृत इह भवति, क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः, ज्ञात्वा शिवं शान्तिमत्यन्तमेति" इत्यादिः "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति च। अनेन श्लोकेन पूर्वश्लोकोपदिष्टार्थः फलकथनेन उपपादितः अनात्मज्ञाने दुष्फलं आत्मयाथात्म्यज्ञाने आत्यन्तिकी दुःखनिवृत्तिरिति ॥३९७॥

शुद्धशिवाकारत्वं कथमात्मन इति चेदाह। स्वात्मनीति।

स्वात्मन्यारोपिताशेषाभासवस्तु-निरासतः।
स्वयमेव परं ब्रह्म पूर्णमद्वय-मक्रियम् ॥३९८॥

स्वात्मनि आरोपितानि केवलाज्ञानेन कल्पितानि यानि अशेषाभासवस्तूनि अनात्मतद्धर्म-रूपाणि तेषां निरासतः श्रुतियुक्तिभिः निदिध्यासनेन च विनाशनतः स्वयमेव परं ब्रह्म पूर्णमद्वयमक्रियम्। "अन्वेष्टव्यात्मविज्ञानात् प्राक्प्रमातृत्वमात्मनः। अन्विष्टस्स्यात् प्रमातैव पाप्मदोषादिवर्जितः। गौणमिथ्यात्मनोऽसत्वे पुत्रदेहादिबाधनात्। सद् ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत्" .इत्यभियुक्तोक्तेः "अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज इव" इतिश्रुतेश्च ॥३९८॥

आदौ प्रयत्नेन दृश्यं निरुध्य समाधौ क्रियमाणे तत्र निष्ठस्य पूर्वं प्रतीतमपि दृश्यं शशविषाणवद् भवतीत्याह। समाहितायामिति।

समाहितायां सति चित्तवृत्तौ परात्मनि ब्रह्मणि निर्विकल्पे।
न दृश्यते कश्चिदयं विकल्पः प्रजल्पमात्रः परिशिष्यते ततः ॥३९९॥

सति अबाध्ये परात्मनि निर्विकल्पे ब्रह्मणि चित्तवृत्तौ समाहितायां निश्चलतया स्थापितायां सत्यां अयं विकल्पः कश्चिदपि न दृश्यते। ततः प्रजल्पनमात्रः परिशिष्यते "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति तल्लक्षणात्। अज्ञानस्य समूलकाषं कषितत्वेन कल्पिततादात्म्यमपि नास्तीति केवलमखण्डं सच्चिदानन्दमात्रमस्तीति भावः। यथा असतः अर्थ-

क्रियाकारित्वं नास्ति गगनकुसुमादेः एवं यत्पूर्वं सुखदुःखरागभय-क्रोधादिकं उत्पादयामास तदपि प्रतीतमपि ब्रह्मनिष्ठं प्रति उत्खातदंष्ट्रोरगवत् न स्वकार्यमाधत्त इति भावः ॥३९९॥

अनात्मवासनानां प्रक्षीणत्वात् एवमुपदेशधारया वासिताद्वैतान्तः-करणं शिष्यं प्रति द्वैतस्य अत्यन्तमसत्वं सकलवेदान्त-तात्पर्यविषयं अनुभव-युक्ति-दृष्टान्त-श्रुतिभिः उपदिशति। असत्कल्प इत्यादिना।

असत्कल्पो विकल्पोयं विश्वमित्येक-वस्तुनि।
निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥४००॥

विश्वमिति यत् अयं विधेयप्राधान्यात्पुल्लिंगम्। विकल्पः विविधं कल्प्यत इति विकल्पः अज्ञानेन कल्पित एव न वस्तुभूत इत्यर्थः। असत्कल्पः ईषदसमाप्तौ कल्पप्प्रत्ययः। निरंतरं ब्रह्मसमाहितमनसां सप्तमीं भूमिकां गतानां सर्वथा भानाभावात् शशविषाणवदेव। तदितरेषां तु दृष्ट-नष्टस्वरूपत्वात् शुक्तिरजतादिवत् प्रातिभासिकः इति असन्नेवेत्यनुक्त्वा असत्कल्प इत्युक्तम्। तथाच मिथ्यात्वेन तेन वस्तुनः ब्रह्मणः सद्वितीयत्वा-भावेन एकवस्तुनि विकाराकार-विशेषशून्ये गुणगुणिभावावयवावय-विभाव-जातिव्यक्तिभावादिशून्ये तादात्म्यस्याप्यभावेन भिदा कुतः ॥४००॥

द्रष्टृदर्शन-दृश्यादि-भावशून्यैक-वस्तुनि।
निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥४०१॥

द्रष्टा प्रमाता दर्शनं प्रमितिः, दृश्यं प्रमेयं, आदिपदेन प्रमाण-परिग्रहः। कर्तृकरणकार्याणि वा। एतत्सर्वं अविद्यावस्थायां। वस्तुतः निर्विकल्पे केवलाखण्डचिन्मात्रे "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्यादिश्रुत्या ज्ञानावस्थायां अज्ञाननाशात् तन्मूलकानां द्रष्टृ-दर्शन-दृश्यादिभावानामभावात् द्रष्टृ-दर्शन-दृश्यादिरूपा ये भावाः तैः शून्यं यदेकं वस्तु तस्मिन् निर्विकारे विकारशून्ये निराकारे अवयवसंस्थानशून्ये भिदा भेदः कुतः नैवास्तीत्यर्थः। प्रकृतिविकारभावाद्यभावात् न भेद-प्रसक्तिरपीति भावः ॥ ४०१ ॥

कल्पार्णव-इवात्यन्त-परिपूर्णैकवस्तुनि ।
निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥४०२॥

प्रलयकाले चत्वारोपि समुद्राः मिलिताः द्वीपादिशून्यतया केवलं जलमयं जगत् कुर्वन्तीति पुराणेष्ववगम्यते। तदा सर्वत्र जलमेव न भूभागः कश्चित् विभाजकाभावात् । चतुर्णामपि समुद्राणां भूभागावस्थायां विभक्तानां एकीभूतत्वात् कल्पार्णव इत्येकवचनं। तदापि आकाशादिक-मस्त्येव तथापि सर्वत्र जलं पूर्णं श्रोतृबुध्यारोहाय, इषुरिव सविता धावतीतिवद्दृष्टान्तः। अत एव अत्यन्तपूर्णेत्युक्तम्। ज्यायानाकाशादि-त्यादिश्रुत्या "पादोस्य सर्वा भूतानि, त्रिपादस्यामृतं दिवि" इति श्रुत्या च निरुपमभूमनि परमात्मन्येक-वस्तुनि निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥४०२॥

पूर्वमपि भेदाभावेपि भेदभ्रान्तिकारणं अज्ञानं अवतिष्ट। तस्य समूलघातं हतत्वात् इदानीं भेदभ्रान्तिरपि नेत्याह। तेजसीति।

तेजसीव तमो यत्र विलीनं भ्रान्तिकारणम् ।
अद्वितीये परे तत्वे निर्विशेषे भिदा कुतः ॥४०३॥

तमः अज्ञानं अन्धकारश्च। यत्र परमात्मनि भ्रान्तिकारणं तमः अज्ञानं तेजसि सूर्यादिप्रकाशे तम इव अन्धकार इव विलीनं नष्टं तस्मिन् अद्वितीये परे तत्वे निर्विशेषे भिदा कुतः। "विभेदजनकेऽज्ञाने नाश-मात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदं असंतं कः करिष्यति" इति-प्रमाणात् ॥४०३॥

एकात्मके परे तत्त्वे भेदवार्ता कथं भवेत् ।
सुषुप्तौ सुखमात्रायां भेदः केनावलोकितः ॥४०४॥

"यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति नतु तद्वितीयमस्ति ततोन्य-द्विभक्तं यत्पश्येत्" इतिश्रुतेः। सुषुप्तौ प्रपंचं न पश्यतीति यत् तत् तार्किकमत इव जडत्वान्न पश्यतीति मा वेदीः यतः सुषुप्तावपि नित्य-ज्ञानस्वरूपस्य आत्मनः स्वयंप्रकाशस्य सत्वात्। अतः यदि द्वितीयं स्यात् पश्येदेव नतु तद्द्वितीयमस्ति। अज्ञानसत्वेपि शक्ति-शक्तिमतोरैक्यात्

विभक्तत्वाभावात्। अत एव ततोन्यद्विभक्तं इति पदद्वयं। अज्ञानोपहित-चैतन्यस्यैव सुषुप्तिसाक्षित्वात्। तस्याज्ञानस्य अधिष्ठाने तत्रैव कल्पित-त्वात् कल्पिते अधिष्ठानभेदाभावात्। यद्यपीदं सर्वदा समानं तथापि कार्योपाधीनां लीनत्वात् सुषुप्तौ सुगममिति सुषुप्त्यवस्थामाश्रित्य श्रोतृ-बुध्यारोहाय निष्प्रपंचत्वमात्मनः प्रतिपाद्यते। यदि कश्चित् जाग्रत्पुरुषः सुषुप्ति-स्थितं चिन्तयन् मनसा अज्ञानं विविच्यात् तदा अन्तःकरणवृत्तेरेव अज्ञानभंजकत्वात् तदीयं मनः निष्प्रपंच-ब्रह्माकारं जातमेवेति तस्या एवावस्थायाः ज्ञानावस्थात्वात् तदा केवलं अखण्डब्रह्मैव मनसावाप्तमिति सिद्धम् समीहितमिति श्रुतेरभिप्रायः। विक्षेपाभावस्य उभयत्र समत्वात् आवरणसत्त्वासत्वाभ्यामेव सुषुप्तिसमाध्योर्भेदात्। अत एवह्युक्तं "निद्रा समाधिस्थितिः" इति। इदं वचनं जाग्रता पुरुषेण सुखमयी सुषुप्तिः चिरं चिन्त्यते चेत् तस्य समाधिः भवतीत्यभिप्रायेणैव। तथाच एकात्मके परे तत्वे भेदवार्ता इत्यनेन भेदो नैवास्ति तद्वार्तापि कथं भवेत् विकारा-कारविशेषाभावात् "यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते-ऽनिलयनेऽभयं प्रतिष्ठिां विन्दते। अथसोऽभयं गतो भवति।" "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इतिश्रुतेः। यदि भेदः सत्यः स्यात् सुषुप्ताववलोक्येत। यद्यज्ञानं न किंचिदवेदिषं इति सुषुप्तौ विन्नमित्युच्येत तस्यापि ज्ञानमात्रायां समाध्यवस्थायां दग्धत्वात् न सत्यत्वमिति अज्ञानस्य तत्कार्याणां च अत्यन्तं नष्टत्वात् "आदावन्ते च यन्नास्ति वर्तमानेपि तत्तथा" इत्युक्त्या नास्ति नासीत् न भविष्यतीति त्रैकालिकनिषेधप्रतियोगित्वरूप-मिथ्यात्वं सिद्धमिति भावः॥४०४॥

तदुपपादयति। न ह्यस्तीति।

नह्यस्ति विश्वं परतत्वबोधात्  
सदात्मनि ब्रह्मणि निर्विकल्पे।  
कालत्रये नाप्यहिरीक्षितो गुणे  
नह्यम्बुबिन्दु-र्मृगतृष्णिकायाम्॥४०५॥

सम्यज्ज्ञानं हि वस्तुसिद्धिहेतुः। पूर्वंतु अज्ञानात् भ्रान्तिरास मनसः। विचार्यमाणे दीपकलिकायमाने तम इव अज्ञानं नष्टमिति सदात्मनि

निर्विकल्पे ब्रह्मणि विश्वं नह्यस्ति नैवास्तीत्यर्थः। तत्र मानं परतत्व-बोधादिति। परस्य ब्रह्मणः यत्तत्वं निष्प्रपंचत्वरूपयथात्म्यं श्रुतिबोधितं तस्य बोधात् अनुभवादित्यर्थः। नहि यथाप्रमाणं अनुभवानन्तरं संशय-विपर्ययादिकं। अतः विश्वं नैवास्ति। तत्र दृष्टान्तः, हि यतः, कालत्रयेपि गुणे रज्वां अहिः सर्पः नेक्षितः, मृगतृष्णिकायां मरुमरीचिकासु अंबुबिन्दुरपि न। तद्वत् पूर्वमज्ञानात् भ्रान्त्या प्रतिपन्नमपि वस्तु न सदिति भावः। "नाभावो विद्यते सतः" इतिगीतोक्तेः विद्वदनुभवाच्च। शुक्तिका हि रजतवदवभासते एकश्चन्द्रः सद्वितीयवत् इत्यादिलौकिकानुभवात् आरोपित-मिथ्यात्वे न विसंवादः। अतः श्रुतिरपि "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" इति इवकारानुबन्धेन द्वैतस्य मिथ्यात्वं सूचयति ॥४०५॥

तद्विषये स्फुटार्थां श्रुतिमाह। मायेति।

मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः।<br>
इति ब्रूते श्रुतिस्साक्षात्सुषुप्तावनुभूयते ॥४०६॥

मायया मीयते प्रतीयत इति मायामात्रं इदं दृश्यं द्वैतं भेद इत्यर्थः। परमार्थतः सत्यभूतं अद्वैतं निर्भेदं ब्रह्म इत्यर्थः। इति साक्षात् वाच्यवृत्या श्रुतिर्ब्रूते। सर्वैरपि साक्षात्सुषुप्तावनुभूयते अतः नात्र विवादावसर इति भावः। अनुभवस्य अपौरुषेयतया निर्दोषश्रुत्यनुसारित्वात् ॥४०६॥

अनन्यत्वमधिष्ठानादारोप्यस्य निरीक्षितम्।<br>
पण्डितैरज्जु-सर्पादौ विकल्पो भ्रान्तिजीवनः ॥४०७॥

"सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति" इति-कैवल्योपनिषदि तमोभिभूतइतिशब्देन तमसः स्थितिं ब्रूते श्रुतिरिति चेत् तस्य तत्र कल्पितत्वात् समाधावसत्वाच्च अवस्तुत्वमित्याह आरोप्यस्य अधिष्ठानादनन्यत्वं व्यतिरेकेणाभावः रज्जुसर्पादौ पण्डितैः निरीक्षितं विकल्पः भेदग्रहस्तु भ्रान्तिजीवनः भ्रान्त्या जीवतीति भ्रान्तिजीवनः भ्रान्ति-मूलक इत्यर्थः। भ्रान्त्यभावे भेदः नैव प्रतीयते भेदविषयकसम्यग्ज्ञाना-भावात् ॥४०७॥

भ्रान्तिनिरासोपायमाह। चित्तेति।

चित्तमूलो विकल्पोयं चित्ताभावे न कश्चन।
अतश्चित्तं समाधेहि प्रत्यग्रूपे परात्मनि॥ ॥४०८॥

अयं विकल्पः चित्तं बहिर्मुखं मनः मूलं यस्य सः चित्तमूलः। चेत्ताभावे सुषुप्तौ न कश्चन अतः स्वरूपसती अविद्यापि चित्ताभावे १ स्वकार्य-समर्था। सा जाग्रत्स्वप्नयोः चित्तात्मना परिणममाना विश्वं ानयति। अतः चित्तं प्रत्यग्रूपे तव स्वरूपभूते परात्मनि समाधेहि संस्थापय, ान अविद्यया साकं सर्वेषां विकल्पानां बाध एवेति भावः॥४०८॥

परमात्मनि मनः समाधापयितुं शब्दैर्विध्यति। किमपीत्यादिना त्रिभिःश्लोकैः।

किमपि सततबोधं केवलानन्दरूपं
निरुपममतिवेलं नित्यमुक्तं निरीहम्।
निरवधि गगनाभं निष्फलं निर्विकल्पं
हृदि कलयति विद्वान् ब्रह्म पूर्णं समाधौ॥४०९॥

प्रकृति-विकृतिशून्यं भावनातीत-भावं
समरसमसमानं मानसंबन्धदूरम्।
निगमवचन-सिद्धं नित्यमस्मत्प्रसिद्धं
हृदि कलयति विद्वान् ब्रह्म पूर्णं समाधौ॥४१०॥

अजरममर-मस्ताभास-वस्तुस्वरूपम्
स्तिमित-सलिलराशि प्रख्यमाख्या-विहीनम्।
शमितगुण-विकारं शाश्वतं शान्तमेकं
हृदि कलयति विद्वान् ब्रह्म पूर्णं समाधौ॥४११॥

किमपि वागगोचरं, सततः नित्यश्चासौ बोधश्च तं अखण्डज्ञानरूपं, केवलानन्दरूपं दुःखासंभिन्न-निरुपाधिक-सुखरूपं, तेन स्वयंप्रकाश-नित्य-सुखरूपतया परमपुरुषार्थत्वमुक्तम्। निरुपमं "न तस्य प्रतिमास्ति" इति श्रुतेः। वेलामतीत्य वर्तमानं अतिवेलं विश्वातीतमित्यर्थः। नित्यमुक्तं

कदापि बन्धरहितं निरीहं निष्कामं निष्क्रियं वा। निरवधि कालतः देशतः वस्तुतश्च अन्तशून्यं। गगनाभं असंगं निर्मलं। निष्कलं निरवयवं। निर्विकल्पं विविधकल्पनाशून्यं। पूर्णं ब्रह्म विद्वान् समाधौ हृदि कलयति। त्वमप्येयं कलयेति भावः। नित्यत्वान्निरवयवत्वात् च "तदेतद् ब्रह्मापूर्वमनपरं" इत्यादिश्रुत्या प्रकृतिविकृतिशून्यं, भावनां कल्पनां अतीतः भावः स्वभावः यस्य तत् उपनिषदं विना केवलतर्केण अधिगन्तुमशक्यं इत्यर्थः। तत् समरसं एकरूपं असमानं असदृशं। मानसम्वन्धदूरं अप्रमेयं श्रुत्यापि लक्षणया बोध्यमानत्वात्। "प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा। यस्य प्रसादात् सिध्यन्ति तत्सिद्धौ किमपेक्ष्यते।" इतिसुरेश्वराचार्यवचनात्, स्वयं सिद्धे प्रत्यग्रूपे तस्मिन् वेद्यवेदितृ-वेदनादि-भेदापनायकश्रुतेरपि ताटस्थ्यात्। यद्वा मानं प्रत्यक्षादिप्रमाणं तत्सम्बंधदूरं तत्सम्बन्धः मेयत्वं तज्जन्यप्रमाविषयत्वं तद्दूरं तद्रहितमिति यावत्। निगमवचनसिद्धं सदा विद्वदनुभवगोचरं। हृदीत्यादि पूर्ववत्। अजरं अपक्षयशून्यं अमरं नाशरहितं अस्ताभासवस्तु-स्वरूपं अस्ताः गताः आभासाः विकल्पाः यस्मिस्तत् अस्ताभासं तच्च तत् वस्तु च तत्स्वरूपं। स्तिमितसलिलराशि प्रख्यं निस्तरंग-जलराशिनिश्चलं। आख्याविहीनं नामरहितं जात्यादिप्रवृत्ति-निमित्तविरहात् "ते यदन्तरा" इतिश्रुतेः। शमितगुणविकारं निर्गुणं निर्विकारं शाश्वतं अनादिसिद्धं शान्तं अपरिणामि। एकं अद्वितीयं हृदि कलयति विद्वान् समाधौ पूर्ण ब्रह्म ॥४११॥

समाहितान्तःकरणःस्वरूप
विलोकयात्मान-मखण्डवैभवम्।
विच्छिन्धि बन्धं भवगन्ध-गन्धिलं
यत्नेन पुंस्त्वं सफलीकुरुष्व ॥४१२॥

स्वरूपे परमात्मनि समाहितान्तःकरणः निश्चलतया स्थापितमनाः सन् अखण्डवैभवं अखण्डं वैभवं विभुत्वं यस्य तं आत्मानं अव्याकृताकाशस्यापि कल्पनाधिष्ठानं विलोकय साक्षात्कुरु। भवगन्धगन्धिलं संसारवासनावासितं बन्धं अज्ञानं विच्छिन्धि नाशय "अविद्यास्तमयो मोक्षस्सा च बन्ध उदाहृतः" इत्युक्तेः। यत्नेन "यल्लाभान्नापरो लाभो यत्सुखान्नापरं

सुखम्। यद्-बोधान्नापरो बोधस्तद् ब्रह्मेत्यवधारय" इति "आत्म-लाभान्नपरं किंचिदस्ति" "आत्मानमन्विच्छ गुहां प्रविष्टं" इत्यादिवचनैः "एतद् बुध्वा बुद्धिमान्स्यात् कृतकृत्यश्च भारत" इतिगीतोक्तेः, "आत्मा वा अरे द्रष्टव्यः एतावदरे खल्वमृतत्वं" इतिश्रुत्या च आत्मसाक्षात्कारस्यैव परमफलत्वात् तदर्थं यत्नेन पुंस्त्वं बहु-सुकृत-लब्धं पुरुषत्वं सफलीकुरुष्व स्वरूपप्राप्त्या सार्थकं कुरु पुनर्मा संसार्षीरिति भावः ॥४१२॥

सर्वोपाधिविनिर्मुक्तं सच्चिदानन्दमद्वयम्।
भावयात्मानमात्मस्थं न भूयः कल्पसेऽध्वने ॥४१३॥

आत्मानं भावय किंविधं, सर्वोपाधिविनिर्मुक्तं स्थूलसूक्ष्म-कारणरूप-भेदहेतुभिः विनिर्मुक्तं विशेषेण नितरां वासनातोपि इत्यर्थः। मुक्तं अस्पृष्टं, सच्चिदानन्दं अद्वयं आत्मस्थं। एतेन न विप्रकृष्टत्वं तस्य "अत्र वाव किल सत्सौम्य न निभालयसे" इतिश्रुतेः। सूक्ष्मायांबुद्धौ भासमानं इत्यर्थः। स्वमहिमप्रतिष्ठया तद्भावेन भूयः पुनः अध्वने संसृतये न कल्पसे। "न स पुनरावर्तते" "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इत्यादि-श्रुतिस्मृतिभ्यः ॥४१३॥

आवृत्यभावमुपपादयति। छायेवेति।

छायेव पुंसः परिदृश्यमान-माभासरूपेण फलानुभूत्या।
शरीर-माराच्छववन्निरस्तं पुनर्न संधत्त इदंमहात्मा ॥४१४॥

महात्मा ब्रह्मभावं प्राप्तः पुरुषः फलानुभूत्या फलं अखण्डाकारवृत्या अनावृततया अभिव्यक्त-स्वरूपचैतन्यं तस्यदनुभूत्या अनुभवेन हेतुना आभासरूपेण सर्पत्यक्त-निर्मोक इव सर्परूपेण इतरदृष्ट्या पूर्ववत् पुंसः छायेव आदेहपातं परिदृश्यमानं आराद्दूरे शववन्निरस्तं इदं शरीरं पुनर्न सन्धत्ते तत्राहंतादिकं न करोति प्रतीतावपि घटादाविव उदासीनस्तत्र भवतीति भावः ॥४१४॥

सतत-विमलबोधा-नन्दरूपं स्वमेत्य,
त्यज जडमलरूपोपाधिमेतं सुदूरे।
अथ पुनरपि नैव स्मर्यतां वान्तवस्तु,
स्मरणविषयभूतं कल्पते कुत्सनाय ॥४१५॥

नित्यनिर्मलप्रकाशानन्दरूपं ब्रह्म स्वमेत्य प्रत्यक्तया प्राप्य, जडमलरूपं उपाधिं एतं स्थूलदेहं सुदूरे त्यज। अथ स्वयं निर्मलचिदानन्दरूपं ब्रह्मैवेति ज्ञानानन्तरं पुनरपि नैव स्मर्यतां दूरं मलभाण्डवत्त्यक्तत्वात्। तत्र दृष्टान्तमाह वान्तवस्तु वमनकर्मीभूतं वस्तु स्मरणविषयभूतं स्मृतमित्यर्थः कुत्सनाय स्वस्य जुगुप्सायै परकृते निन्दायैवा कल्पते। नहि मलिनं वस्तु स्मरणीयं, मनसः विकारापत्तेः। निन्दन्ति च लोके त्यक्तं दुष्टं वस्तु स्मरन्तम्॥४१५॥

समूलमत
सदात्मनि ब्रह्मणि निर्विकल्पे।
ततस्स्वयं नित्यविशुद्धबोधा-
नन्दात्मना तिष्ठति विद्वरिष्ठः॥४१६॥

सदात्मनि कालत्रयाबाध्य-स्वरूपे निर्विकल्पे ब्रह्मणि वह्नौ एतत् शरीरं समूलं अज्ञानेन सह परिदह्य निरवशेषं दग्ध्वा। ततः विद्वरिष्ठः विदन्तीति विदः तेषु वरिष्ठः विद्वरिष्ठः। स्वयं नित्यविशुद्ध-बोधानन्दात्मना तिष्ठति न कदाचिदपि तस्य अनात्मप्रतिभानमिति भावः॥४१६॥

प्रारब्ध-सूत्र-ग्रथितं शरीरं
प्रयातु वा तिष्ठतु गोरिव स्रक्।
न तत्पुनः पश्यति तत्ववेत्ताऽनन्दा-
त्मना ब्रह्मणि लीनवृत्तिः॥४१७॥

सूत्र-ग्रथिता स्रक् माला रज्जुर्वा अलंकरणाद्यर्थं गलादौ बद्धा, प्रयातु तिष्ठतु वा, यथा गोः तत्र न दृष्टिः तथा प्रारब्धमेव सूत्रं तेन ग्रथितं रचितं विदुषः अभिमानाभावेपि तदीयतया इतरैर्ज्ञायमानं तत्त्वसाक्षात्कारात्पूर्वं तदीयसुख-दुःखसाक्षात्कारावच्छेदकतया प्रारब्धकर्मणा निर्मितं शरीरं ब्रह्मसाक्षात्कारानन्तरं प्रयातु म्रियतां तिष्ठतु वा प्राणान् धारयतु वा। तत्त्ववेत्ता आत्मयाथात्म्यदर्शी तत् शरीरं पुनः स्वस्य ब्रह्मत्वज्ञानानन्तरं न पश्यति। तत्र हेतुः आनन्दात्मना ब्रह्मणि लीना वृत्तिः यस्य सः लीनवृत्तिः। वृत्तेर्बहिरनागमने हेतुः आनन्दात्मनेति। यदा अनावृता-

त्मना मनोवृत्तिर्लीना कथं कुतोवा मनसः वहिर्मुखत्वं स्यात्। सर्वदापि सुखं मे भूयादिति या स्थिता इच्छा तस्याः विषयः प्राप्तः। ततः नित्यनिरतिशयसुखं प्राप्य तदात्मना लीनं मनः न बहिरुदेति। वक्ष्यति "कस्तां परानन्दरसानुभूति-मृत्सृज्य शून्येषु रमेत विद्वान्। चन्द्रे महाह्लादिनि दीप्यमाने चित्रेन्दुमालोकयितुं क इच्छेत्" इति ॥४१७॥

न तत्पुनः पश्यतीत्याद्युत्तरार्धमुपपादयति। अखण्डेति।

अखण्डानन्द-मात्मानं विज्ञाय स्वस्वरूपतः।
किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति तत्ववित् ॥४१८॥

तत्त्ववित् अखण्डानन्दमात्मानं स्वस्वरूपत्वेन विज्ञाय किमिच्छन् यदि किंचिदिच्छति तस्याप्राप्तस्य प्राप्तये प्रयत्नं कुर्यात्। देहं विना प्रयत्नकरणासंभवात् देहं पुष्णीयाच्च। अत उक्तं कस्य वा हेतोः कस्मै फलायेत्यर्थः। देहं पुष्णाति। उक्तं हि श्रुत्या "आत्मानं चेद्विजानीया-दयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" इति ॥४१८॥

सम्यग्विदित-तत्त्वस्य लक्षणमाह। संसिद्धस्येति।

संसिद्धस्य फलं त्वेतज्जीवन्मुक्तस्य योगिनः।
बहिरन्तस्सदानन्द-रसास्वादन-मात्मनि ॥४१९॥

साधनचतुष्टय-संपत्ति-पुरस्सरं गुरुमुपसद्य तन्मुखात् वेदान्तवाक्यार्थं श्रुत्वा मत्वा निदिध्यास्य सम्यगात्मानुभववतः योगिनः परमात्मन्येव स्थापितचित्तस्य जीवन्मुक्तस्य जीवतोपि सर्वोपाधि-संबन्धविनिर्मुक्तस्य तु एतत् फलं यदात्मनि अन्तःकरणे बहिरन्तःस्सदानन्दरसास्वादनम्। व्युत्थानेपि नानन्दस्य तिरोधानं अखण्डाकारवृत्या आवरणस्य भंजितत्वात् तदुक्तं बहिरिति। इतरैरपि तदीयमूर्तिदर्शनेन अयं पूर्णानन्द इति निरन्तर-स्मित-स्मेरावलोकनादिना ज्ञायते इति तस्य पूर्णानन्दात्मना स्थितिः निरंतरैव अविद्यानिवृत्तिरूप-मोक्षस्यापि दृष्टफलत्वात् ॥४१९॥

तत्र साक्षात्परंपरया वा साधनानां विशिष्य फले विज्ञाते, पूर्णता मुमुक्षुणा प्रयत्नेन तत्राधातुं शक्यते। तदर्थं वैराग्यबोधोपरतीनां क्रमेण फलं दर्शयति। वैराग्यस्येति।

वैराग्यस्य फलं बोधः बोधस्योपरतिः फलम्।
स्वानन्दानु-भवाच्छान्तिरेषैवोपरतेः फलम् ॥४२०॥

विर्मुक्ति-सौधाग्रतलाधिरोहणं ताभ्यां विना नान्यतरेण सिध्यतीति कथितं, "वैराग्यान्नपरं सुखस्य जनकं पश्यामि वश्यात्मनः, तच्चेच्छुद्धतरात्मबोध-सहितं स्वाराज्यसाम्राज्यधुक्" इति च। तेन मोक्षे तयोः समतया हेतुत्वमिव प्रतीयते। यद्यपि "एतद्द्वारमजस्रमुक्ति-युवतेः इत्यस्ति तथापि "सर्वत्रास्पृहया सदात्मनि कुरु प्रज्ञां निजश्रेयसे" इत्युत्तरार्धेपि वैराग्यबोधयोः हेतुहेतुमद्भावः स्पष्टं न प्रतीयते। ततः स्फुटयति, यद्यपि-विवेक-वैराग्य-शमादिषट्क-मुमुक्षुत्वरूप-ब्रह्मविचार-साधनमध्ये वैराग्यं उपरतिश्च घटकीकृते अथापि तेषां साधनानां अन्तरंगत्वात् विचारकाले सामान्यतो वर्तमानानामपि श्रवणमननरूप-ज्ञानसाधनानुष्टानेन उत्त्तमत्वं संभवेत् अत एव "बाह्यानालंबनं वृत्तेः एषोपरतिरुत्तमा" इत्युक्तम्। विचारदशायां निदिध्यासनमन्तरा विपरीतभावनायाः अनिवृत्तेः बाह्यानालंबनत्वं दुर्घटं। अथापि शब्दादिविषयानालंबनत्वेन वृत्तिः विचारं साधयतीति वक्तव्यं। इदानीं तु पंचकोशनिषेध-पुरस्सरं निदिध्यासनेन स्वनुभवे संपादिते अनात्माविषयकत्वं असंकोचेन वक्तुं शक्यते अतःबोधस्य उपरतिः फलमित्युच्यते। अतः शमादिषट्कमध्ये शमफल-दमफलत्वेन कथिताया अप्युपरतेः उत्तमत्व-सिध्यनन्तरमेव "स्वलक्ष्ये नियतावस्था मनसश्शम उच्यते" इतिलक्षितशमः शान्तिपदेन स्वानन्दानुभवाच्छान्तिरेषैवोपरतेः फलं इत्युक्तं। पूर्वं प्रयत्नेन आप्तवाक्यादिना संपादितानामपि साधनानां विचारेण प्रकृष्यमाणत्वात् असंकुचित-लक्षणवत्त्वं संभवतीति भावः। तथाच "ब्रह्म सत्यं जगन्मिथ्येत्येवं-रूपो विनिश्चयः। सोयं नित्यानित्य-वस्तु-विवेकः समुदाहृतः" इतिलक्षितः विवेकः पूर्वं परोक्षज्ञानरूपः विचारात्पश्चात् अपरोक्षत्वं प्राप्नोति। एवं वैराग्यमपि उत्कटविषयेच्छाभावरूपं "रसोप्यस्य परं दृष्ट्वा निवर्तते" इति गीतावचनात् स्वरूपानन्दसाक्षात्कारे विषयेषु वासनात्मनापि रागो न तिष्ठतीति

तं भवति। तस्मादभ्यास-वैराग्याभ्यां सम्यङ्मनो निरुध्य विचारे क्रियमाणे बोधः अवश्यंभावी यदि न जातः वैराग्यरूप-साधनं न पूर्णमस्तीति ज्ञातव्यम्। ततः तद्दार्ढ्याय प्रयत्नः कार्यः। एवं बोधे उपनिषज्जन्ये आत्मसाक्षात्कारे जाते असंदिग्धाविपर्यस्तात्म-परोक्षज्ञाने वा जाते उपरतिः तस्य बोधस्य फलं। ज्ञात्वापि बाह्येभ्यः निवृत्यभावे मनसः दृढं ज्ञानं न जातमित्येव ज्ञेयम्। तत्र च कारणं वैराग्यापरिपूर्तिरेव। वैराग्यं पूर्णं दृढ आत्मनिश्चयश्च नो चेद् विद्यावतां भेदः कोवा, विद्यावतामपि कुतः अनुपरमणं, उपरतौ च मनसः स्वानन्दानुभवाच्छान्तिः निष्क्रियात्मनावस्थानं एषैवफलमुपरतेः। "ज्ञानामृतेन तृप्तस्य कृत-कृत्यस्य योगिनः। नैवास्ति किंचित्कर्तव्यं अस्ति चेन्न स तत्त्ववित्" इत्युक्तेः। "यद्युत्तरोत्तराभावः पूर्वपूर्वं तु निष्फलं" एवं तत्तद्दृष्टफल-निष्पत्तिपर्यन्तं तत्तत्साधनं न पूर्णं भवतीति ज्ञाने प्रयत्नः साधकेन सुष्ठु कर्तुं शक्यत इति साधनपूर्णतायै समुपन्यासः ॥४२०॥

ब्रह्मविद्यायाः फलमाह। निवृत्तिरिति।

निवृत्तिः परमा तृप्तिः आनन्दोनुपमः स्वतः।
दृष्टदुःखेष्वनुद्वेगः विद्यायाः प्रस्तुतं फलम् ॥४२१॥

निवृत्तिः सर्वेभ्यः कार्येभ्यो निवृत्तिः निर्व्यापारत्वं कर्तव्यानवशेषता। परमा तृप्तिः निरंकुशा तृप्तिः कर्तव्यं कृतं प्राप्तव्यं प्राप्तं इतःपरं करणीयं प्राप्तव्यं वा किमपि नास्तीति स्वस्य धन्यधन्यतया सुखविशेषः स्वतः अनुपमः असदृशः आनन्दः विषयनिरपेक्षः नित्यंनिरतिशय-सुखं। प्रारब्धकर्मणा दृष्टदुःखेषु अनुद्वेगः, अज्ञानी तु दुःखेषु प्रसक्तेषु अहं पापी धिङ् मां दुरात्मानं इत्यनुतापवान् भवति। यद्यप्ययं विवेक इव भाति। तथापि पूर्वस्मिन् जन्मनि चेत् पापप्रवृत्ति-प्रतिबन्धकत्वात् सप्रयोजनो भवति स्म, इदानींतु निष्प्रयोजन इति भ्रान्तिःतमोविकारः। दुःखं तु रागादिनिमित्तवशात् रजोगुण-विकाररूपा संतापात्मिका चित्तवृत्तिः इति दुःखोद्वेगयोर्भेदः। ज्ञानिनः अयमुद्वेगो न भवतीति चत्वारि फलानि निवृत्तिः, निरंकुशा तृप्तिः, असदृशानन्दः निर्विषयः, दृष्टदुःखेषुअनुद्वेगश्चेति। विद्यायाः आत्मतत्वज्ञानस्य प्रस्तुतं मुख्यं दृष्टं फलम् ॥४२१॥

तत्र निवृत्तिमुपपादयति। यदिति।

यत्कृतं भ्रान्तिवेलायां नानाकर्म जुगुप्सितम्।
पश्चान्नरो विवेकेन तत्कथं कर्तु-मर्हति॥४२२॥

विद्याफलं स्यादसतो निवृत्तिः
प्रवृत्तिरज्ञानफलं यदीक्षितम्।
तज्ज्ञा-ज्ञयोर्यन्मृगतृष्णिकादौ
नोचेद् विदो दृष्टफलं किमस्मात्॥४२३॥

अविवेक-विवेकयोः एतावति वैलक्षण्ये विवेकफलभूतायां विद्यायां परमात्मविषयिण्यां किं वक्तव्यमिति भावेनाह। यत्कृतमिति। भ्रान्ति वेलायां जुगुप्सितं नाना कर्म यत्कृतं तत् कर्म विवेकेन पश्चात् कथं कर्तुमर्हतीत्यनेन विवेकिनः यथा जुगुप्सित-कर्मभ्यो निवृत्तिः एवं विद्यावतः प्राप्याभावात् ब्रह्मनिष्ठतया च सर्वकर्मनिवृत्तिरिति भावः। इदं फलं लोक-दृष्टमित्याह विद्येति। विद्याफलं स्यादसतो निवृत्तिः प्रवृत्तिरज्ञानफलं तद् ईक्षितं दृष्टं तज्ज्ञाज्ञयोः। यत् यस्मात्कारणात् मृगतृष्णिकादौ आदिपदेन शुक्तिरजतादिकं ग्राह्यम्। मृगतृष्णिकेति ज्ञानवान् न जलार्थं मरुभूमौ प्रवर्तते। मरुभूमौ सूर्यकिरणपाते जलवद् भासते इति ज्ञानशून्यस्तु मरुभूम्य-ज्ञानेन तत्र जलभ्रान्त्या प्रवर्तते नेष्टं लभते, विफलप्रवृत्तिमान्भवति। तत् तस्मात्कारणात् विद्याफलं असतो निवृत्तिः अज्ञानफलं प्रवृत्तिः इतीक्षितं नोचेदेवं विदः ज्ञानिनः अस्माद् असन्निवृत्तिरूपात् दृष्टं फलं किं। प्रकृते ब्रह्मविद्याविषये तु असच्छब्देन अनात्मा गृह्यते ब्रह्मभिन्नं सर्वं। पूर्व-मज्ञानावस्थायां तत्र प्रवृत्तिरासीत् अलब्धस्वरूपानन्दत्वात्। इदानीं तु स्वात्मानं विदितवतः तत्र सर्वत्र मिथ्यात्वज्ञानेन नैव प्रवृत्तिः इति असन्नि-वृत्तिः विद्याफलं॥४२३॥

प्रवृत्तिकारणाभावाच्च निवृत्तिरित्याह। अज्ञानेति। अनिच्छोरित्य-नेन परमा तृप्तिरप्युक्ता भवति।

अज्ञान-हृदयग्रन्थे-र्विनाशो यद्यशेषतः।
अनिच्छोर्विदुषः किंनु प्रवृत्तेः कारणं स्वतः॥४२४॥

अज्ञानप्रयोज्यः यः हृदयग्रन्थिः बुद्धौ साक्षिणः तादात्म्याध्यासः तस्य अखण्डाकारवृत्या मूलभूताज्ञाननाशेन अशेषतः निर्वासनतया यदि विनाशः सकारणं नाशः। तदा इत्यध्याहार्यंन् यदीति सत्वात्। स्वतः अनिच्छोः इच्छारहितस्य विदुषः प्रवृत्तेः कारणं किंनु? सर्वत्र प्रवृत्तौ इच्छैव कारणं, तदभावे प्रवृत्यभावात् वदन्ति हि "प्रयोजन-मनुद्दिश्य न मन्दोपि प्रवर्तत" इति अत एव साधनचतुष्टये मुमुक्षुत्वमपि घटकीकृतं। इच्छा च अन्तःकरणधर्मः "कामः संकल्पः" इत्यादिना "इत्येतत्सर्वं मन एव" इतिश्रुतेः। मनसोपि बहिरिच्छा आनन्दरूपात्मा दर्शनात् स्थिता। तत्र दोषदर्शनेन नित्यनिरतिशयानन्द-रूपात्म-श्रवणमनन-निदिध्यासनेषु शास्त्रीयेषु मुमुक्षया प्रावर्तिष्ट। आत्मदर्शनेन तत्रापीच्छा प्राप्तफलत्वान्नास्ति। विचारकाल एव बहिरिच्छा सुतरां नास्ति वैराग्यस्य परमसाधनत्वात्। तथाच तस्य इच्छासत्वे तत्तादात्म्याध्यासेन साक्षिणोपीच्छा इति वक्तव्यं। आत्मेच्छापि आत्माज्ञानकालिक्येव। अज्ञाननाशे तत्प्रयोज्य-चिज्जडतादात्म्याध्यास-नाशेन आत्यन्तिकी निवृत्ति-रिच्छाया इति सर्वथापि बहिरन्तर्वा प्रवृत्तिकारणं विषयः कोपि नास्तीति निष्क्रियात्मनावस्थानं निवृत्तिशब्दार्थः ब्रह्मविद्यायाः दृष्टं फलं॥४२४॥

वैराग्यबोधोपरतयः पूर्णतया कदा ज्ञेया इतिप्रश्ने तदवधिं शिष्या-नुग्रहाय उपदिशति। वासनेति।

वासनानुदयो भोग्ये वैराग्यस्य तदावधिः।
अहंभावोदयाभावो बोधस्यं परमावधिः।
लीनवृत्तेरनुत्पत्ति-र्मर्यादोपरतेस्तु सा॥४२५॥

भोग्ये वासनाया अनुदयः अनुद्बोधः, अनुभूते विषये पुरस्थितेपि तत्संस्कारानुद्बोधः यदा तदा वैराग्यस्य अवधिः। तदीयं मनः विषयेषु नष्टमेव कुतो रागप्रसक्तिः वैराग्यस्य परस्यैषा परा काष्ठा प्रदर्शिता। अहंभावस्य उदयाभावः अनुत्पत्तिः बोधस्य परमावधिः। अहं ब्रह्म इत्यपि बाधायां सामानाधिकरण्यम्। अतः सर्वात्मके अहन्त्वमपि कल्पितमेव। अत एवोक्तं "वदत्येष भ्रान्तस्त्वमहमिति मायामदिरया" इति। यदहन्त्वे न ज्ञातं तद् ब्रह्म इत्येवार्थः अहं ब्रह्मेत्यस्य, यः चोरः स स्थाणुरितिवत्।

यद्वा कोशेष्वहंभावस्य उदयाभावः इत्यर्थः। लीनवृत्तेरनुत्पत्तिः मर्यादोपरतेस्तु सा, आनन्दात्मना लीना या मनोवृत्तिः तस्या अनुत्पत्तिः यथा आज्यं पुनः क्षीरं न भवति तथा स्वतः अनुपमः आनन्दः अतः परमा तृप्तिः ततः सर्वतो निवृत्तिः इति हेतुहेतुमद्भावः ॥४२५॥

इदानीं निरुपममानन्दं ज्ञानिनो दर्शयति। ब्रह्माकारतयेत्यादिना।

ब्रह्माकारतया सदा स्थिततया निर्मुक्त-बाह्यार्थधीः
अन्यावेदित-भोग्यभोगकलनो निद्रालुवद् बालवत्।
स्वप्नालोकित-लोकवज्जगदिदं पश्यन्क्वचिल्लब्धधीः
आस्ते कश्चिदनन्त-पुण्यफलभुग्धन्यः स मान्यो भुवि ॥४२६॥

धियः निर्मुक्तबाह्यार्थत्वे हेतुः ब्रह्माकारतया सदा स्थिततयेति। सदा प्रत्ययान्तरशून्यत्वेन अच्छिन्नतया ब्रह्माकारतया परमपुरुषार्थभूताखण्ड-सच्चिदानन्द-परमात्माकारतया स्थिततया निर्मुक्ताः नितरां सवासनमित्यर्थः मुक्ताः नष्टाः बाह्यार्थाः यस्यां सा नतु ययेति स्वयमेव निवृत्तत्वात् विषयाणां प्रयत्नस्य अनपेक्षितत्वात् "रसोप्यस्य परं दृष्ट्वा निवर्तते" इति ब्रह्मदर्शने विषयनिवर्तनार्थं प्रयत्नानपेक्षितत्वस्य प्रतीयमानत्वात्। तथाच निर्मुक्ता बाह्यार्थधीः यस्य सः निर्मुक्तबाह्यार्थधीः। कश्चिदित्यस्य विशेषणं अन्यावेदित-भोग्यभोगकलनः अन्यैः आवेदितं यद्भोग्यं शरीरस्थितिनिमित्तं अन्नपानादिकं तेन भोगस्य कलना संपत्तिः घटना यस्य सः। आस्यप्राप्तान्नभुगित्यर्थः। यथा निद्रालुरन्यैः भोजितं भुनक्ति बालश्च मात्रा भोज्यते तथा बहिर्मुखत्वाभावेन निरभिमानतया च निद्रालुवत् बालवत् अन्यावेदित-भोग्यभोगकलनः, प्रारब्धकर्मायत्त-भोगोपि परमुखेन शरीरस्थितिहेतुर्भवति इतिभावः। क्वचित्परमात्मनि लब्धधीः लब्धा प्रतिष्ठिता धीः यस्य सः लब्धधीः, यद्वा क्वचित् कदाचित् लब्धधीः व्युत्थितमनाः इदं जगत् स्वप्नालोकितलोकवत् मिथ्यात्वेन पश्यन् कश्चित् ब्रह्मविद्वरः अनन्तपुण्यफलभुक् शतकोटि-जन्मसु कृतसुकृत-फलभूत-मोक्षानन्दानुभवी आस्ते स धन्यः भुवि मान्यः सकलपूज्यः। एतेन विषयान्विना स्वतः आनन्दः अनुपमः उक्तः आत्मविद्याफलं। "सोश्नुते सर्वान्कामान् सह", "यावानर्थ उदपाने

सर्वतः संप्लुतोदके। तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः" इति-श्रुतिस्मृतिभ्यां "एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेश्च। लोके यावन्तः पुरुषाः यावद्भिः पुण्यैः यावन्ति सुखान्यनुभवन्ति अयं परावरैकत्वज्ञानी युगपत् सर्वाणि सुखानि समुद्रस्थानीय-ब्रह्मानन्दानुभवादनुभवतीति वा अर्थः अनन्तपुण्यफलभुगित्यस्य "सोश्नुते सकलान्कामान् अक्रमेण सुरर्षभाः। विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः" इति तैत्तिरीयकार्थविवरणाद् ब्रह्मगीतासु सर्वेषां सुखानां विषयाभिव्यंग्यानां ब्रह्मानन्द-सिन्धुबिंदु-कणिकायमानत्वात्। "स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्तावनिः, यज्ञानां च सहस्रमिष्टमखिला देवाश्च संतर्पिताः। संसाराच्च समुद्धृतास्स्वपितरस्त्रैलोक्य-पूज्योप्यसौ, यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात्" इत्युक्त्या ब्रह्मनिष्ठा यस्य सर्वदास्य मान्यतायां किमुवक्तव्यम्। उक्तं हि "कुलं पवित्रं जननी कृतार्था विश्वंभरा पुण्यवती च तेन। अपार-संवित्सुखसागरेस्मिन् लीनं परे ब्रह्मणि यस्य चेतः" इति "तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः" इतिश्रुतेश्च ॥४२६॥

जीवन्मुक्त-लक्षणे ज्ञाते साधकैः मुमुक्षुभिः तथा स्थातुं प्रयतितुं शक्यत इति मुमुक्षुजनानुग्रहार्थं तल्लक्षणं वक्तुं प्रक्रमते। स्थितप्रज्ञ इति।

स्थितप्रज्ञो यतिरयं यस्सदानन्दमश्नुते।
ब्रह्मण्येव विलीनात्मा निर्विकारो विनिष्क्रियः ॥४२७॥

ब्रह्मण्येव विलीनात्मा विलीनः आत्मा अन्तःकरणं यस्य अत एव निर्विकारः हर्षविषादाद्यान्तरविकारशून्यः। विनिष्क्रियः बाह्यदेहादि-चेष्टाशून्यः, "क्रिया स्वाश्रयमविकुर्वती नैवात्मानं लभते" इति समन्वय-सूत्रभाष्यात् निर्विकारत्वे हेतुः विनिष्क्रिय इति वा। यः सदानन्द-मश्नुते अयं यतिः स्थितप्रज्ञः इति। सूत्रस्थानीयोयं श्लोकः ॥४२७॥

तत्र स्थितप्रज्ञत्वं व्याकुरुते। ब्रह्मेति।

ब्रह्मात्मनोः शोधितयोरेकभावावगाहिनी।
निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते।
सा सर्वदा भवेद्यस्य स जीवन्मुक्त इष्यते ॥४२८॥

स्थिता सततं वर्तमाना प्रज्ञा यस्य सः स्थितप्रज्ञ इति विग्रहः। तत्र प्रज्ञाशब्दार्थमाह शोधितयोः महावाक्यार्थकथनावसरे दर्शितदिशा तत्त्वंपदलक्ष्ययोः उपाधिविनिर्मुक्तयोः, ब्रह्मात्मनोः परमात्मप्रत्यगात्मनोः, एकभावावगाहिनी ऐक्यविषयिणी निर्विकल्पा संसर्गादिमिथ्यापदार्था-विषयिणी चिन्मात्रा अखण्डचिदाकारा वृत्तिः श्रवण-मनन-निदिध्यासन-संस्कृतमनःपरिणामः प्रज्ञा इति कथ्यते। स्थिताशब्दार्थमाह "सा सर्वदा भवेद्यस्येति," सजीवन्मुक्त इष्यते अतस्मिंस्तद्बुद्धेरेव बन्धत्वात् सर्वदा अखण्डाकारवृत्तौ सत्यां बन्धप्रसक्तेरभावात् ॥४२८॥

यस्य स्थिता भवेत् प्रज्ञा यस्यानन्दो निरन्तरः।
प्रपंचो विस्मृतप्रायः स जीवन्मुक्त इष्यते ॥४२९॥

सूत्रश्लोकस्थस्य यस्सदानन्दमश्नुते ब्रह्मण्येव विलीनात्मा इत्यस्य विवृतिः। अत्र सर्वं तस्य स्वरूपं अतः विशेषणानां व्यावर्तकत्वशंका नकार्या। यद्वा यस्य स्थिता भवेत्प्रज्ञा स जीवन्मुक्तः, एवं यस्यानन्दो निरन्तरः स जीवन्मुक्तः, यस्य प्रपंचः विस्मृतप्रायः स जीवन्मुक्तः इति योजना। "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इतिस्मृत्या शिष्य-बोधनार्थं शिष्यादृष्टेन व्युत्थानदशायां तदुपयोगि-प्रमाणवाक्यादिरूप-प्रपंचः स्मर्यते नान्यत् किंचिदिति विस्मृतप्राय इति प्रायःपदम् ॥४२९॥

सुषुप्तेः भेदमाह। लीनधीरिति।

लीनधीरपि जागर्ति यो जाग्रद्धर्मवर्जितः।
बोधो निर्वासनो यस्य स जीवन्मुक्त इष्यते ॥४३०॥

सुषुप्तौ मनसः अज्ञाने लयः, इदानीं ब्रह्मणि चिन्मात्रे, ततः तमः-प्रसक्तेरेवाभावात् लीनधीरपि जागर्ति नष्टाविद्यानिद्र इत्यर्थः। अनावृतात्म-संबद्ध-सकलपदार्थत्वात् स्वाव्यतिरेकेण सर्वमुपलभत इति वा। "इन्द्रियैरर्थोपलब्धिर्जागरितमिति" लक्षणं सुयोजं। जागरेपि न पूर्ववत् स्थूलदेहाद्यभिमान इत्याह, यो जाग्रद्धर्म-वर्जितः, "रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्। आत्मवश्यैर्विधेयात्मा स शान्तिमधिगच्छति" इतिस्मृतिरीत्या अध्यासकाल एव शान्त्यर्थमेव प्रयत्नस्य कृतत्वात्।

यस्य बोधः पदार्थानां बोधोपि निर्वासनः . सक्तिरहित इत्यर्थः। "यदृच्छोपनतेष्वक्षि-दिग्द्रव्येषु यथा पुनः। नीरागमेव पतति तद्वद् भोग्येषु धीरधीः" इति वासिष्ठोक्तेः हेयोपादेयबुद्धिरहित इति भावः। यद्वा लीनधीरपि जागर्ति, चक्षुरादीन्द्रियाणां स्वस्वगोलकेष्ववस्थानेन उपरत्य-भावज्जगर्ति। इन्द्रियसत्वेपि मनसः ब्रह्मणि लीनत्वात् नेन्द्रियैरर्थानुपलभते यतः ततः जाग्रद्धर्मवर्जितः। कदाचिदुपलब्धावपि दृढतमविवेकप्रकर्षात् रागद्वेषादिशून्यत्वं निर्वासनबोधत्वं। तेन निर्विकारत्वं सूत्रः विवृतं ॥४३०॥

द्वादशभिः श्लोकैः निर्विकारत्वं उपपादयति, तस्मिन्सति प्रज्ञाप्रतिष्ठायाः तस्यां च सदानन्दस्य अयत्नसिद्धत्वात्।

शान्तसंसारकलनः कलावानपि निष्कलः।
यस्सचित्तोपि निश्चित्तः स जीवन्मुक्त इष्यते ॥४३१॥

शान्ता संसारकलना यस्य सः शान्तसंसार-कलनः, इदं विशेषणं निश्चित्तत्वे हेतुः। कलावानपि सकलविद्याविदपि निष्कलः ब्रह्मवृत्ति-व्यतिरिक्तवृत्तिशून्यत्वात्। यद्वा आमोक्षं प्राणश्रद्धादि-षोडशकला-विशिष्टोपि तत्राभिमानरूप-संगाभावात् परकीयप्राणादिभिरिव कलासंसर्ग-शून्य इत्यर्थः। यस्सचित्तोपि स्वात्मना परिणत-चित्तविशिष्टोपि निश्चित्तः बहिर्वृत्तिशून्यत्वात् मुग्धादिवत् रागादिशून्यत्वाद्वा। स जीवन्मुक्त इष्यते ॥४३१॥

वर्तमानेपि देहेऽस्मिश्छायावदनुवर्तिनि।
अहंताममताभावो जीवन्मुक्तस्य लक्षणम् ॥४३२॥

छायावदनुवर्तिनि अस्मिस्थूलदेहे वर्तमानेपि अहंताममतयोरभावः परकीयशरीर इव जीवन्मुक्तस्य लक्षणं। एतेन सर्वेषां विकाराणां राग-द्वेषादीनां जरामरणादीनां वा स्थूलदेहाभिमानमूलकत्वात् मूलाभावे निर्विकारत्वं स्पष्टमुपपादितम् ॥४३२॥

अतीताननु-संधानं भविष्यदविचारणं।
औदासीन्यमपि प्राप्ते जीवन्मुक्तस्य लक्षणम् ॥४३३॥

अतीतस्य अननुसंधानं अस्मरणं, भविष्यतः आगामिनः अविचारणं अचिन्तनं, प्राप्तेपि वर्तमान इत्यर्थः औदासीन्यं संगशून्यत्वं जीवन्मुक्तस्य लक्षणम् ।।४३३।।

गुणदोषविशिष्टेस्मिन् स्वभावेन विलक्षणे ।
सर्वत्र समदर्शित्वं जीवन्मुक्तस्य लक्षणम् ।।४३४।।

गुणदोषविशिष्टे अत एव स्वभावेन विलक्षणे अस्मिन् जगति सर्वत्र समदर्शित्वं "न निषेधति दोषधिया गुणबुध्या वा न किंचिदादत्ते। आविद्यक-मखिलमिति ज्ञात्वोदास्ते यतिः कोपि" इत्यात्मविद्या-विलासोक्तरीत्या हानोपादानरहितत्वं। यद्वा समं ब्रह्म, "निर्दोषं हि समं ब्रह्म" इतिस्मृतेः सर्वत्र ब्रह्मदर्शित्वं जीवन्मुक्तस्य लक्षणम् ।।४३४।।

इष्टानिष्टार्थ-संप्राप्तौ समदर्शितयाऽऽत्मनि ।
उभयत्राविकारित्वं जीवन्मुक्तस्य लक्षणम् ।।४३५।।

इष्टस्य वा अनिष्टस्य वा अर्थस्य संप्राप्तौ समदर्शितया इदमिष्टं इदमनिष्टं इतिबुध्यभावात् आत्मनि उभयत्राविकारित्वं हर्षोद्वेगशून्यत्वं जीवन्मुक्तस्य लक्षणम् लोकदृष्ट्या इष्टानिष्टेति-कथनं ।।४३५।।

ब्रह्मानन्दरसास्वादा-सक्तचित्ततया यतेः ।
अन्तर्बहि-रविज्ञानं जीवन्मुक्तस्य लक्षणम् ।।४३६।।

ब्रह्मेति । स्पष्टम् ।।४३६।।

देहेन्द्रियादौ कर्तव्ये ममाहंभाववर्जितः ।
औदासीन्येन यस्तिष्ठेत् स जीवन्मुक्त इष्यते ।।४३७।।

देहेन्द्रियादौ आदिपदेन प्राणमनोबुध्यहंकार-परिग्रहः । कर्तव्ये कर्मणि च ममेदं कर्तव्यं मयेदं कृतमिति वा ममभाववर्जितः। देहेन्द्रियादौ अहं मनुष्यः अहं पश्यामि, मम देहः, मम चक्षुरित्याद्यध्यासवर्जितः। य औदासीन्येन आध्यासिकतादाम्यशून्यतया असंगतया तिष्ठेत् स जीवन्मुक्त इष्यते ।।४३७।।

विज्ञात आत्मनो यस्य ब्रह्मभावः श्रुतेर्बलात्।
भवबन्ध-विनिर्मुक्तः स जीवन्मुक्त इष्यते ॥४३८॥

श्रुतेर्बलात् तत्त्वमसीत्यादि-वेदवाक्यमहिम्ना आत्मनः स्वस्य ब्रह्माभावः ब्रह्मत्वं यस्य विज्ञातः साक्षादकारि। भवबन्धविनिर्मुक्तः सकलविधभ्रान्तिशून्यः मूलाज्ञाननाशात् स जीवन्मुक्त इष्यते ॥४३८॥

भवबन्ध-विनिर्मुक्तत्वं स्फुटमाह। देहेति।

देहेन्द्रियेष्वहंभावः इदंभावस्तदन्यके।
यस्य नो भवतः क्वापि स जीवन्मुक्त इष्यते ॥४३९॥

देहे इन्द्रियेषु च अहंभावः, तदन्यके तदन्यस्मिन् घटादौ इदंभावः यस्य क्वापि कस्मिन्नपि काले न भवतः स जीवन्मुक्त इष्यते। अनात्मत्वस्य समत्वात् देहेन्द्रियाणां घटादेश्च, स्वस्मिन्कल्पितत्वस्य च समत्वात्। केवलपूर्ववासना-मूलकः अहमिदंभावः निर्वासनबोधवतः जीवन्मुक्तस्य न संभवतीति भावः ॥४३९॥

जीवेशोभय-संसाररूप-दुर्वासनोज्झिता।
सा सर्वदा भवेद्यस्य स जीवन्मुक्त उच्यते ॥
नप्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः।
प्रज्ञया यो विजानाति स जीवन्मुक्त इष्यते ॥४४०॥

"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनि ब्रह्मणो भेदं असन्तं कः करिष्यति" इतिप्रमाणात् प्रत्यग्ब्रह्मणोः, जीवब्रह्मणोः, सृज्यत इतिसर्गः जगत् "ब्रह्मैवेदं विश्वं" इत्यादिश्रुत्या रज्जुसर्पवद् ब्रह्मणि कल्पितस्य अधिष्ठानभेदाभावात्। "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्यादिश्रुत्या "यत्र नान्यत्पश्यति" इत्यादिश्रुत्या च "यदा ह्येवैष एतस्मिन्नुदर-मन्तरं कुरुते, अथ तस्य भयं भवति" इति श्रुत्याच अभयब्रह्मप्रतिष्ठस्य तस्य किंचिदपि भेदज्ञानं नास्तीति भावः। तथा च भेदस्याभावादेव तस्य ज्ञानाभावः, शशविषाणवत् त्रैकालिकनिषेध-प्रतियोगित्वात्। वस्तुसतः अज्ञाने किंचिज्ज्ञत्वं नत्वसतः। न हि सर्वज्ञानां योगिनां शशविषाणाद्यज्ञानाद-सर्वज्ञत्वं कश्चिदुपैति। तस्मान्निर्विकल्पया

सकलशास्त्र-संस्कार-संस्कृतमनःपरिणामरूपया चिन्मात्रया प्रज्ञया भेदं न विजानाति शास्त्रस्य प्रयोजनव -दनधिगताबाधितार्थ - बोधकत्वेनैव प्रामाण्यात् । लोकाज्ञानसिद्धः निष्प्रयोजनः उपादानेन अज्ञानेन सह निवृत्तः भेदः कथं अखण्डाकारवृत्तौ विषयभावं प्राप्तुमर्हः स्यात् । "प्रतीतिर्जीव-जगतोः स्वप्नवद्भाति यावता । तावन्निरंतरं विद्वन् स्वाध्यासापनयं कुरु" इत्युपदेशप्रकारेण अपनीतसकलभ्रमस्य न कदापि भेदज्ञानं भवतीति एवंलक्षण-संपन्नः यः सः जीवन्मुक्त इष्यते ।।४४०।।

साधुभिः पूज्यमानेस्मिन् पीड्यमानेपि दुर्जनैः ।
समभावो भवेद्यस्य स जीवन्मुक्त इष्यते ।।४४१।।

अस्मिन् शरीरे साधुभिः पूज्यमाने दुर्जनैः पीड्यमानेपि यस्य समभावः समत्वं हर्षामर्षादिशून्यत्वं स जीवन्मुक्त इष्यते ।।४४१।।

किं बहुना

यत्र प्रविष्टा विषयाः परेरिताः
नदीप्रवाहा इव वारिराशौ ।
लिनन्ति सन्मात्रतया न विक्रियां
उत्पादयन्त्येष यतिर्विमुक्तः ।।४४२।।

परेरिताः परैः अन्यैः ईरिताः अनेन स्वतः विषयोन्मुखत्वं नैवास्तीक्षितब्रह्मणः पुंसः इत्युक्तम् । परेरिताः परकृत-स्तुतिनिन्दादयोपि परदृष्ट्या साध्वसाधु-शब्दाद्यात्मकाः विषयाः यत्र प्रविष्टाः यमुद्दिश्य कृताः वारिराशौ प्रविष्टाः नदीप्रवाहा इव लिनन्ति लीयन्ते न विक्रियामुत्पादयन्ति हर्षं वा अमर्षं वा दैन्यं वा । तत्र हेतुः सन्मात्रयेति अखण्डब्रह्मैवाहमिति निश्चित्य स्थितवतः शरीराद्याश्रित-स्तुतिनिन्दादिना किं भवति । निर्गुणे निर्दोषे च ब्रह्मणि स्थितवतां सकलविध-विकारशून्यत्वं । तत्र परकृतं सर्वं आकाशहननार्थं-खड्गाद्यायुध-प्रयुक्तिवद् व्यर्थमिति भावः । एष यतिः, यत्र प्रविष्टाः विक्रियां नोत्पादयन्ति एष यतिः विमुक्तः क्षीणवासनत्वात् नष्टमनस्त्वाच्च ।।४४२।।

"तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्ये" इतिश्रुत्या "भोगेन त्वितरे क्षपयित्वा संपद्यते" इतिसूत्रेण च ज्ञानिनामपि प्रारब्ध-कर्मायत्तः भोगः स्वीकर्तव्यो भवति। तथाच सुखदुःखानुभवरूपत्वात् भोगस्य, कथं निर्विकारत्वं इति शंकायां प्राह। विज्ञातेति।

विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः।
अस्ति चेन्नस विज्ञातब्रह्मभावो बहिर्मुखः॥४४३॥

विज्ञातमनुभूतं ब्रह्मतत्वं येन सः विज्ञातब्रह्मतत्वः, तस्य मिथ्याज्ञान-नाशेन तत्कृताभिमानाभावात् यथापूर्वं अनुभवात्प्रागिव न संसृतिः सुख-दुःखानुभवः स्पृहोद्वेगशून्यत्वात् तदुक्तं गीतासु "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधी-र्मुनिरुच्यते" इति। इतरेषां नैवंविधत्वं, दुःखेषु उद्विजन्ते सुखेभ्यः स्पृहयन्ति च रक्ताः भीताः कोपिनश्च। तदाह, अस्ति चेत् उद्वेगस्पृहादिकं न स विज्ञातब्रह्मभावः बहिर्मुखः कोशेष्वात्माभिमानवान्॥४४३॥

प्राचीनवासनावेगादसौ संसरतीति चेत्।
न सदेकत्वविज्ञानान्मन्दीभवति वासना॥४४४॥

ब्रह्मानुभवात्प्राक्कालिकी अनादिभवसंचिता या वासना तस्याः वेगात् असौ ब्रह्मवित् संसरति बन्धं भजत इति चेत् न, सदेकत्वविज्ञानात् अद्वितीयाखण्ड-स्वप्रकाशानन्द-ब्रह्माभेद-साक्षात्कारात् वासना अल्पजड-दुःखात्मकत्वेन निश्चितानात्म-स्वात्मत्वभ्रमजनितवासना मन्दीभवति तनूभवति शिथिला भवतीत्यर्थः अरुणोदयकालिकं तम इव॥४४४॥

तत्र दृष्टान्तमाह। अत्यन्तेति।

अत्यन्तकामुकस्यापि शक्तिः कुण्ठति मातरि।
तथैव ब्रह्मणि ज्ञाते पूर्णानन्दे मनीषिणः॥४४५॥

पूर्णानन्दे अखण्डानन्दरूपे ब्रह्मणि साक्षात्कृते मनीषिणः विवेकिनः इत्यर्थः। जगति वृत्तिः कुण्ठति। वक्ष्यति हि "चन्द्रे महाह्लादिनि दीप्यमाने चित्रेन्दुमालोकयतुं क इच्छेत्" इति॥४४५॥

निदिध्यासनशीलस्य बाह्यप्रत्यय ईक्ष्यते।
ब्रवीति श्रुतिरेतस्य प्रारब्धं फलदर्शनात् ॥४४६॥

विपरीतभावनानिवृत्यर्थं निदिध्यासने शीलं निदिध्यासनं वा यस्य तस्य बाह्यप्रत्यय ईक्ष्यते संततमात्मनि बुद्धेः स्थापनार्थं प्रयत्नस्य सत्वात्। एतस्य ध्यातुः फलदर्शनात् सुखदुःखानुभवदर्शनात्, श्रुतिः प्रारब्धं ब्रवीति कर्तृत्वस्य दुःखरूपत्वात् देहादिभानस्यापि ध्यानविरमे संभवात् पूर्वकर्मायत्तं सुखंदुःखं वा भासेत निदिध्यासनस्य सविकल्पकसमाधिरूपत्वात्। तदुक्तं "श्रुतेःशतगुणं विद्यात् मननं मननादपि। निदिध्यासं लक्षगुणं अनन्तं निर्विकल्पकम्।" "निर्विकल्पक-समाधिना स्फुटं ब्रह्मतत्वमवगम्यते ध्रुवं। नान्यथा चलतया मनोगतेः प्रत्ययान्तरविमिश्रितं भवेत्" इति। तदुक्तं बाह्यप्रत्यय ईक्ष्यत इति। यदा बाह्यप्रत्ययः तदा प्रारब्धायत्तं सुखं वा दुःखं वा भवतीति "न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति" इतिश्रुतिरुपपद्यते। तदा ब्रह्मसाक्षात्कारस्य अजातत्वात् अध्यासबाधाभावात् शरीरात्मनोः आध्यासिकसंबन्धस्य सत्वात् सशरीरत्वं। तथाच "तस्य तावदेव चिरं" इत्यादिश्रुतिः भोगेनेत्यादि-सूत्रं च तदभिप्रायं प्रारब्धादेः अनात्मधर्मत्वात् निर्गुणब्रह्मविदः तदसंभवात् ॥४४६॥

श्लोकोक्तमुपपादयति। सुखादीति।

सुखाद्यनुभवो यावत्तावत्प्रारब्धमिष्यते।
फलोदयः क्रियापूर्वो निष्क्रियो नहि कुत्रचित् ॥४४७॥

आदिपदेन दुःखपरिग्रहः। यावत्कालं सुखाद्यनुभवः तावत्कालं प्रारब्धमिष्यते। तत्र हेतुमाह, हि यस्मात् फलोदयः फलस्य सुखस्य दुःखस्य वा उदयः उद्भवः क्रियापूर्वः क्रिया पूर्वा यस्य सः कर्मजन्य इत्यर्थः। कुत्रचिदपि न निष्क्रियः क्रियां कर्म विना न संभवति निर्निमित्तकार्याभावात्। सुखदुःखयोः सदसत्कर्मैक-निमित्तकत्वात् अनात्मतादात्म्याध्यासं विना अनात्माश्रित-कर्मफलसंबन्धाभावात्। तथाच बाह्यप्रत्ययवतः ध्यानशीलस्य कर्मायत्तः भोगः संभवतीत्युपपादितं ॥४४७॥

पूर्वोक्तश्रुति-सूत्रयोः मन्दशंका-समाधानार्थत्वं विवक्षुः आदौ तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ इतिसूत्रानुरोधेन (तदधिगमे ब्रह्माधिगमे उत्तराघस्य अश्लेषः पूर्वाघस्य विनाशः इति सूत्रार्थः) क्षीयन्ते चास्य कर्माणि इतिश्रुत्या च प्रारब्धव्यतिरिक्त-कर्माणि गृह्यन्ते इति भावेन ब्रह्मसाक्षात्कारस्य संचितकर्मनाशकत्वमाह। अहमिति।

अहं ब्रह्मेतिविज्ञानात् कल्पकोटिशतार्जितम्।
संचितं विलयं याति प्रबोधात् स्वप्नकर्मवत् ॥४४८॥

संचितं अनारब्धफलकं पूर्वं कर्म कल्पकोटिशतार्जितं अकर्तृ-ब्रह्माभेद-साक्षात्कारात् प्रबोधात् जागरात् स्वप्नकर्मवत् विलयं विनाशं याति प्राप्नोति ॥४४८॥

दृष्टान्तमुपपादयति। यत्कृतमिति।

यत्कृतं स्वप्नवेलायां पुण्यं वा पापमुल्बणम्।
सुप्तोत्थितस्य किं तत्स्यात् स्वर्गाय नरकाय वा ॥४४९॥

स्पष्टोर्थः। एवं अविद्यानिद्राकालकर्मभिः आत्मैकत्व-दर्शन-प्रबोधवतः नष्टाविद्यत्वेन च औपाधिकेनापि कर्तृत्वेन शून्यस्य न फल-मारभ्यत इति भावः ॥४४९॥

संचितकर्मणां अनात्माध्यासनाशेन नाशमुक्त्वा आगामिनां कर्मणां अश्लेषमाह। स्वमिति। पूर्वं कर्माश्रयानात्माध्यासात् कर्तृत्वज्ञानं स्वस्मिन्नासीत्। कर्तृत्वज्ञानकाले कृतान्यपि कर्माणि कर्तृत्वज्ञाननाशा-न्नष्टानि इदानीं तु अकर्तृ-ब्रह्मात्मत्वबोधे आगामिकर्म-संबन्ध एव नास्तीति तदश्लेष इत्युच्यते

स्वमसंगमुदासीनं परिज्ञाय नभो यथा।
न श्लिष्यते यतिः किंचित्कदाचिद् भाविकर्मभिः ॥४५०॥

स्वं स्वात्मानं असंगं एकं उदासीनं अकर्तारं परिज्ञाय सम्यगनुभूय। यथा नभः गगनं जलानलानिलादिभिः न श्लिष्यते तथा आत्मविद्यतिः

कदाचिदपि किंचिदपि भाविकर्मभिः आत्मानुभवोत्तरकालिकैः कर्मभिः शरीरादौ भवद्भिरपि न श्लिष्यते। तत्र अभिमानरूपसंगाभावात् कर्म-धर्मितादात्म्याध्यासे कर्माध्यासरूप-श्लेषः तस्य मूलाज्ञाननाशेन नष्टत्वात् नानात्मधर्म-श्लेषः ॥४५०॥

उक्तमर्थं नभसि दृष्टान्ते उपपादयन् दार्ष्टान्तिके योजयति। न नभ इति।

न नभो घटयोगेन सुरागन्धेन लिप्यते।
तथात्मोपाधियोगेन तद्धर्मै-र्नैव लिप्यते ॥४५१॥

जगद्व्याप्य वर्तमानं नभः घटावच्छिन्नतया परिच्छिन्नमिव लक्ष्यमाणमपि निर्मलत्वात् अमूर्तत्वात् अवच्छेदकघटगत-सुराया गन्धेन न लिप्यते। एवं आविदेहकैवल्यं अनुवर्तमानैरपि उपाधिभिः स्थूल-सूक्ष्मशरीररूपैः योगेन मिथ्यासंबन्धेन तद्धर्मैः स्थूलसूक्ष्मशरीरधर्मैः देवता-वन्दन-तारजपादिधर्मैः नैव लिप्यते ॥४५१॥

इदानीं "भोगेन त्वितरे क्षपयित्वा संपद्यते" इति सूत्रार्थमाह। ज्ञानोदयादिति।

ज्ञानोदयात्पुरारब्धं कर्म ज्ञानान्न नश्यति।
अदत्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥४५२॥

अहंब्रह्मास्मीति-साक्षात्कारोत्पत्तेः प्राक् आरब्धं फलदानाय प्रवृत्तं कर्म स्वफलं सुखदुःखान्यतररूपं अदत्वा, लक्ष्यमुद्दिश्य उत्सृष्टबाणवत्, इदं उत्तरश्लोके स्फुटीक्रियते, ज्ञानात् अकर्त्रात्म-साक्षात्कारात् न नश्यति संचितवत् ॥४५२॥

लक्ष्यमुद्दिश्येत्यादिदृष्टान्तं स्फुटयति। व्याघ्रेति।

व्याघ्रबुध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ।
न तिष्ठति च्छिनत्त्येव लक्ष्यं वेगेन निर्भरम् ॥४५३॥

"दुष्टोयं व्याघ्रो हन्तव्यः" इतिबुध्या विनिर्मुक्तः आकर्णान्तिमाकृष्य त्यक्तः बाणः पश्चात् बाणत्यागानन्तरं तु गोमतौ पुरोव्यक्तिः गौरिति

मतौ जातायामपि न तिष्ठति निवृत्तगतिर्न भवति। वेगेन निर्भरं नियतं सम्यक् लक्ष्यं पुरोवस्तु छिनत्येव हिनस्त्येव। एवं फलदानाय प्रवृत्तत्वात् ब्रह्मसाक्षात्कारोदयेपि स्वफलं दत्वैव क्षीयते इति। इतरे आरब्धफले पुण्यपापे भोगेन तत्फलानुभवेन क्षपयित्वा संपद्यते विदेहमुक्तो भवतीति सूत्रार्थः। एवं तस्य ज्ञानिनः तावदेव चिरं तावानेव विलंबः यावन्नविमोक्ष्ये प्रारब्धकर्माधीनतया शरीरान्नविमोक्ष्यते, अथ शरीर-पातानन्तरं संपत्स्ये संपत्स्यते विदेहमुक्तो भवति इति श्रुतेरर्थः ॥४५३॥

उक्तश्रुतिसूत्रार्थं सर्वं पूर्वार्धेन संगृह्य परमार्थमाह उत्तरार्धेन। प्रारब्धमिति।

प्रारब्धं बलवत्तरं खलु विदां भोगेन तस्य क्षयः
सम्यग्ज्ञान-हुताशनेन विलयः प्राक्संचितागामिनां।
ब्रह्मात्मैक्य-मवेक्ष्य तन्मयतया ये सर्वदा संस्थिताः
तेषां तत्त्रितयं नहि क्वचिदपि ब्रह्मैव ते निर्गुणम् ॥४५४॥

ज्ञानस्यैकरूपत्वेपि समाधिप्रकर्षेण ब्रह्मवित्, ब्रह्मविद्वरः, ब्रह्म-विद्वरीयान्, ब्रह्मविद्वरिष्ठः इति सत्वापत्त्यसंसक्ति-पदार्थभावना-तुर्यगेति भूमिकानुसारेण समुपजातब्रह्मसाक्षात्काराः व्यवह्रियन्ते। तत्र तुर्यगाख्य-भूमिकागतस्य ब्रह्मविद्वरिष्ठस्य केवलनिगुणब्रह्मरूपत्वात् परकृतप्रबोधोपि नास्तीति त्रिविधमपि कर्म नास्ति। ब्रह्मविद्वरीयसः परकृतप्रबोधे प्रपंचभानं तदा प्रारब्धं व्याप्रियेत यथा प्रह्लादस्य महाविष्णु-पांचजन्यरवश्रवणेन समाधेर्व्युत्थानं। ब्रह्मविद्वरस्य स्थितप्रज्ञस्यापि कर्मवशात् स्वयं व्युत्थितस्य सुखदुःखादिभानं गीतासु स्पष्टं प्रतीयते "स्थितप्रज्ञस्य का भाषा" इत्यर्जुन-प्रश्नस्योत्तरेण। ज्ञानपरिपाकार्थं स्वीकृतसंन्यासाः स्वोपदेशेन जनकादीना-मुत्पादित-ब्रह्मसाक्षात्काराः याज्ञवल्क्यादयः ब्रह्मविदः। तादृशानां विदां ज्ञानिनां ज्ञानप्रारब्धयोर्मध्ये प्रारब्धं बलवत्तरं, खलु प्रसिद्धं। तस्य प्रारब्धकर्मणः भोगेन क्षयः नाशः। सम्यज्ज्ञानमेव हुताशनः अग्निः तेन प्राक्संचितानां कर्मणां ज्ञानानन्तरकालिकानां आगामिनां विलयः क्रमेण विनाशाश्लेषौ। ब्रह्मात्मैक्यमवेक्ष्य साक्षात्कृत्य तन्मयतया स्वार्थे मयट् ब्रह्मरूपतयेत्यर्थः ये सर्वदा संस्थिताः तुर्यगां भूमिमारूढाः

तेषां तत् त्रितयं त्रिविधमपि कर्म नहि क्वचिदपि कदाचिदपीत्यर्थः। ते निर्गुणं ब्रह्मैव। ततः सत्वादिगुणकार्याणां नैव प्रसक्तिरिति भावः ॥४५४॥

तत्स्फुटयति। उपाधीति।

उपाधितादात्म्य-विहीन-केवल-
ब्रह्मात्मनैवात्मनि तिष्ठतो मुनेः।
प्रारब्ध-सद्भाव-कथा न युक्ता,
स्वप्नार्थ-संबन्धकथेव जाग्रतः ॥४५५॥

अज्ञानदशायां आध्यासिक-मुपाधितादात्म्यं जीवस्य आसीत्। इदानीं तु श्रुत्याचार्यप्रसादेन समुपजात-परापरैकत्वविवेक-प्रकर्षेण उपाधिभिः अहंकाराकिभिः यत्तादात्म्यं तद्विहीनं यत् केवलं ब्रह्म त्रिविध-परिच्छेदशून्यं निर्विकल्पं निष्प्रपंचं ब्रह्मतत्तादात्म्येनैव आत्मानि तिष्ठतः "स भगवः कस्मिन्प्रतिष्ठित इति, स्वे महिम्नि" इतिश्रुतेः। पूर्वमुपाधिषु-स्थितिरासीत् तदिदानीं नास्तीत्यावेदयितुं आत्मनि तिष्ठत इति कथितम्। स्वस्थस्य मुनेः प्रारब्धसद्भाव-कथा न युक्ता तत्र दृष्टान्तः जाग्रतः प्रबुद्धस्य स्वप्नार्थसबन्धकथेवेति ॥४५५॥

तत्स्फुटयति। नेति।

न हि प्रबुद्धः प्रतिभासदेहे देहोपयोगिन्यपि च प्रपंचे।
करोत्यहन्तां ममतामिदंतां किन्तु स्वयं तिष्ठति जागरेण ॥४५६॥

न तस्य मिथ्यार्थ-समर्थनेच्छा न संग्रहस्तज्जगतोपि दृष्टः।
तत्रानुवृत्तिर्यदि चेन्मृषार्थे न निद्रया मुक्त इतीष्यते ध्रुवम् ॥४५७॥

प्रबुद्धः स्वप्नादुत्थितः पुरुषः प्रतिभासदेहे स्वप्नकाले भातदेहे, देहोपयोगिनि प्रपंचेपि क्रमेण अहंतां ममतां इदन्तां च न करोति। हि निश्चयः किंतु स्वयं जागरेण तिष्ठति। नहि स्वप्ने पश्वादिरूपतां स्वस्य दृष्ट्वा जाग्रत् सः तृणादिकं भक्षयति स्वकीय-नियमं वा त्यजति। तस्य मिथ्यार्थसमर्थनेच्छा स्वप्नभात-देहादिपदार्थ-समर्थनेच्छा नास्ति।

तत्काले भातजगत् तज्जगत् स्वाप्निकं जगदित्यर्थः। तस्य संग्रहः स्वीकारः न दृष्टः। यदि तत्र मृषार्थे देहजगदादिरूपे अनुवृत्तिः मनसः जाग्रत्कालिक-वस्तुनीव, न निद्रया मुक्त इति ध्रुवमिष्यते ॥४५७॥

तद्वत्परे ब्रह्मणि वर्तमानः सदात्मना तिष्ठति नान्यदीक्षते।
स्मृतिर्यथा स्वप्नविलोकितार्थे तथाविधः प्राशनमोचनादौ ॥४५८॥

तद्वत् सुप्तप्रबुद्धवत् परे ब्रह्मणि वर्तमानः संस्थापितमनाः पुमान् सदात्मना अबाध्यासंगचिद्रूपेण तिष्ठति। अन्यत् नेक्षते अन्यस्यासत्वात् "यत्र नान्यत्पश्यति" इत्यादिश्रुतेः "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इतिश्रुतेश्च। ब्रह्मविदोपि अन्नादानविसर्गादिकं कुर्वन्तीति मन्द-शंकायामुत्तरमाह स्मृतिरिति। प्रबुद्धस्य स्वप्नविलोकितार्थे यथा स्मृतिः न तत्र सत्यत्वबुद्धिः तथा विदः ज्ञानिनः प्राशनमोचनादौ, "नाप्रतीति-स्तयोर्बाधः किंतु मिथ्यात्वनिश्चयः" इतिपंचदश्यां। स्वप्ने स्वात्मानं व्याघ्रं मन्वानोपि प्रबुद्धः न तत्सत्यत्वं मनुते किंतु स्मृतिः स्यात् तथा पूर्वं प्राशनमोचनादिकर्तृ शरीरं अहंतया अमन्यत इदानीं स्ववास्तविकस्वरूपं दृष्टवतः अहंतां विना प्राशनादिकर्तृ शरीरं प्रतीयेत पृथक्तया, व्युत्थानेपीति भावः ॥४५८॥

आत्मनः प्रारब्धं कर्म नास्तीत्यंशं युक्त्या समर्थयति। कर्मणेति।

कर्मणा निर्मितो देहः प्रारब्धं तस्य कल्प्यतां।
नानादेरात्मनो युक्तं नैवात्मा कर्मनिर्मितः ॥४५९॥

अजो नित्य इति ब्रूते श्रुतिरेषा त्वमोघवाक्।
तदात्मना तिष्ठतोस्य कुतः प्रारब्ध-कल्पना ॥४६०॥

आत्मनोनादित्वे प्रमाणमाह। अजो नित्य इति। "अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यादिकठश्रुतिः। अमोघवाक् अमोघा अबाधितार्थका वाक् यस्याः, घटकत्वं षष्ठ्यर्थः। तदात्मना स्ववास्तविकस्वरूपेण तिष्ठतोस्य ज्ञानिनः प्रारब्धकल्पना कुतः? देहात्मना स्थितौ प्रारब्धाश्रय-देहतादात्म्याध्यासेन तद्धर्म-प्रारब्धाध्यासोपि स्यात् न ज्ञानिनि सा कथा ॥४६०॥

तत्स्पष्टयति। प्रारब्धमिति।

प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः।
देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः।
शरीरस्यापि प्रारब्ध-कल्पना भ्रान्तिरेव हि॥४६१॥

यदा देहात्मना स्थितिः तदा देहधर्म-प्रारब्धं कल्पनया वा आत्मनः सिध्यति। देहात्मभावः नैवेष्टः अध्यासमूलाज्ञानस्य नष्टत्वात्। अतः प्रारब्धं त्यज्यतां आत्मनि प्रारब्धप्रसंगः न कार्य इतिभावः। विचार्यमाणे शरीरस्यापि प्रारब्धकल्पना भ्रान्तिरेव हि निश्चयः॥४६१॥

तदुपपादयति। अध्यस्तस्येति।

अध्यस्तस्य कुतस्सत्त्वं असत्त्वस्य कुतो जनिः।
अजातस्य कुतो नाशः प्रारब्धमसतः कुतः॥४६२॥

असत्त्वस्य न विद्यते सत्त्वं यस्य तत् असत्त्वं तस्य असतः इत्यर्थः। जनिः उत्पत्तिः कुतः? नास्तीत्यर्थः। अजातस्य नाशः कुतः? सोपि न। उत्पत्यर्थं प्रारब्धस्वीकारः, नो चेत् लोकसिद्धं देवतिर्यङ्मनुष्यादिवैषम्यं दुरुपपादमिति, ब्रह्मव्यतिरिक्तस्य सर्वस्यमिथ्यात्वं यदा अवसितं तदा शुक्तिरजतादिवत् केवलाज्ञानतः प्रतिभासमानस्य न कर्मनिमित्तकत्वं। "स्थाणुमन्येनु-संयन्ति यथाकर्म यथाश्रुतं" इत्यादिश्रुतिरपि व्यवहार-दृष्ट्या वदतीति भावः॥४६२॥

इदानीं "तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्ये" इति श्रुतितात्पर्यमाह। ज्ञानेति।

ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि।
तिष्ठत्ययं कथं देह इतिशंकावतो जडान्।
समाधातुं बाह्य-दृष्ट्या प्रारब्धं वदति श्रुतिः॥४६३॥

अज्ञानकार्यस्य वियदादिप्रपंचस्य अहंकारादिदेहान्तस्य च बाह्या-ध्यात्मिकस्य समूलस्य मूलमज्ञानं तेन सहितस्य, ज्ञानेन ब्रह्मसाक्षात्कारेण यदि लयः बाधः, अयं देहः पांचभौतिकः कथं तिष्ठति इतिशंका एषामस्तीति

शकावतः तान् शकावतः जडान् प्राकृतान् मन्दान् समाधातु बाह्यदृष्ट्या व्यवहाररीत्या प्रारब्धं श्रुतिर्वदति "यावन्नविमोक्ष्ये" इत्यादिना ।।४६३।।

कर्मजन्यं शरीरादि न शुक्तिरजतादिवत् प्रातीतिकं किंतु सत्यमिति वक्तुमिति कदापि न भ्रमितव्यमित्याह। नत्विति।

नतु देहादिसत्यत्व-बोधनाय विपश्चिताम्।
यतः श्रुतेरभिप्रायः परमार्थैकगोचरः ।।४६४।।

विपश्चितां ज्ञानिनां यद्देहादि तस्य सत्यत्वबोधनाय प्रारब्धं नतु वक्ति। विपश्चितामित्यस्य बोधनायेत्यनेन वा संबन्धः। ज्ञानेन तेजसा तिमिरस्येव जगदुपादानभूताज्ञानस्य नाशेपि देहः प्रारब्धनाशे नश्यति तावान्विलंब इत्युक्त्या तस्य आज्ञानिकत्वं नास्ति किंतु कर्मजन्यतया सत्यत्वमिति प्रतीयेत, नत्वेवं, तार्किकादिमते तन्तूपादानकस्य पटस्य तन्तुनाशक्षणे निरुपादानकतया स्थितिवत् "उपादाने विनष्टेपि क्षणं कार्यं प्रतीक्षते। इत्याहुस्तार्किकास्तद्वदस्माकं किं न संभवेत्। तंतूनां दिनसंख्यानां तैस्तादृक् क्षण ईरितः। भ्रमस्या-संख्यकल्पस्य योग्यः क्षण इहेष्यताम्"। इति चित्रदीपोक्तरीत्या अनादिकालप्रवृत्ताज्ञानोपादानकस्यापि देहादेः अज्ञाननाशानन्तरं कंचित्कालं स्थितेर्वक्तुं शक्यत्वात्। विजिगीषुकथायामेतादृश-समाधानं "न निरोधो नचोत्पत्तिः न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" इतिश्रुत्यनुसारेण ब्रह्ममात्रस्य परमार्थत्वात्। "ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि। तिष्ठत्ययं कथं देह" इति जडानां शंकासमाधानार्थं श्रुतिः प्रारब्धं वक्तीति वस्तुस्थितिः। यतः श्रुतेरभिप्रायः परमार्थैक-गोचरः प्रमाणान्तरानधिगत-प्रयोजनवदबाधितार्थ-विषयक इत्यर्थः। नहि ज्ञानिनां अज्ञाननाशानन्तरमपि कर्मसमाप्तिपर्यन्तं शरीरं तिष्ठतीति प्रतिपादनेन किंचित्फलमस्तीति तस्य तावदेवेति श्रुतिः मन्दशंकासमाधानार्थमेवेतिभावः ।।४६४।।

इदानीं श्रुतितात्पर्यविषयं परमार्थं सप्तभिः श्लोकैः संगृह्णाति। परिपूर्णमित्यादिभिः।

परिपूर्णमनाद्यन्तं अप्रमेय-मविक्रियं।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ।।४६५।।

परिपूर्णं देशपरिच्छेदशून्यं अनाद्यन्तं उत्पत्तिनाशविधुरं, अप्रमेयं फलव्याप्तिशून्यं अविक्रियं अपरिणामि एकं स्वगतभेदरहितं, एव सजातीय-भेदरहितं अद्वयं विजातीयभेदरहितं, इह ब्रह्मणि, किंचन किंचिदपि, नाना नानात्वं भेद इत्यर्थः नास्तीतिश्रुतिः सकलविधभेदशून्यं ब्रह्म ब्रूते। "मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" इति बृहदारण्यकश्रुतिः। एकमेवाद्वितीयमिति छान्दोग्यश्रुतिः अर्थत उक्ता एकमेवाद्वयमिति ॥४६५॥

श्रौतशब्दैः श्रुत्यर्थानुसारि-स्वशब्दैश्च परमार्थतत्त्वं ब्रूते

सद्घनं चिद्घनं नित्यमानन्दघन-मक्रियम्।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥४६६॥

घनः मूर्तिः, सच्छरीरं, चिच्छरीरं, नित्यं आनन्दशरीरं, सच्चिदानन्दस्वरूपमित्यर्थः। अक्रियं सृष्ट्यादिक्रियाशून्यम् ॥४६६॥

प्रत्यगेकरसं पूर्णं अनन्तं सर्वतोमुखम्।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥४६७॥

सर्वात्मभूतं व्यापि, नाशरहितं, सर्वात्मभूतत्वादेव सर्वतोमुखं "त्वं जातो भवसि विश्वतोमुखः" इतिश्रुतेः ॥४६७॥

अहेतुमनुपादेयं अनाधेयमनाश्रयम्।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥४६८॥

स्वात्मत्वादहेयं अनुपादेयं च, निष्प्रपंचत्वादनाधेयं न विद्यते आधेयं यस्य। अनाश्रयं न आश्रयो यस्य निराधारं, अहेयं निर्दोषं अनुपादेयं निर्गुणमिति वा अर्थः ॥४६८॥

निर्गुणं निष्कलं सूक्ष्मं निर्विकल्पं निरंजनम्।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥४६९॥

अनिरूप्यस्वरूपंयन्मनोवाचामगोचरम्।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥४७०॥

यत् मनोवाचां अगोचरं, तत् तस्मात् अनिरूप्यस्वरूपं केवलानुभवैकवेद्यमित्यर्थः। "वाचा वक्तुमशक्यमेव मनसा मन्तु" मिति वक्ष्यते शिष्योक्तिमुखेन ॥४७०॥

सत् समृद्धं स्वतस्सिद्धं शुद्धं बुद्धमनीदृशम्।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥४७१॥

सत् अबाध्यं, समृद्धं अखण्डानन्दरूपं, स्वतस्सिद्धं सर्वप्रमाणप्रवृत्तिहेतुत्वात्। शुद्धं दोषास्पृष्टं, बुद्धं ज्ञानरूपं, अनीदृशं इदमिव दृश्यत इति ईदृशं न ईदृशं निरुपमं बुद्धौ धारया सूक्ष्मतमार्थं ग्राहयितुं एवं श्रौतार्थस्य कथनीयत्वात् ईदृशस्थलेषु पौनरुक्त्याशंका नैव कार्या ॥४७१॥

निरस्तरागा निरपास्तभोगाः
शान्तास्सुदान्ता यतयो महान्तः।
विज्ञाय तत्त्वं परमेतदन्ते
प्राप्ताः परां निर्वृतिमात्मयोगात् ॥४७२॥

निरस्तः रागः यैस्ते निरस्तरागाः दूरीकृतविषयेच्छाः, निरपास्तभोगाः अत एव निरपास्तः भोगः यैस्ते नितरां त्यक्तभोगाः। यदृच्छालाभसंतुष्टाः रागसत्वे हि भोगः उक्तं हि पूर्वं "अन्यावेदितभोग्यभोगकलनो निद्रालुवद् बालवत्" इति। यद्वा शीतोष्णादिद्वन्द्व-सहिष्णव इति तत्पदस्यार्थः। शान्ताः ब्रह्मणि स्थापितमनसः, सुदान्ताः निगृहीतबहिरिन्द्रियाः, यतयः प्रयत्नशीलाः। महान्तः बहिरिन्द्रियद्वारा निर्गतस्य मनसः परिच्छिन्नविषयाकारेण परिणामे तदुपहितः जीवोप्यल्पो भवति न शान्तानां दान्तानां च तथात्वमिति। निरन्तरमन्तर्मुखमनसां महत्वं सहजमेव। तादृशाः पुरुषधौरेयाः एतत् "परिपूर्णमनाद्यन्तं" इत्यादिना संकीर्तितं परं तत्त्वं सर्वोत्कृष्टं ब्रह्म विज्ञाय, आत्मनि योगः आत्मयोगः निर्विकल्पकसमाधिः तस्माद्धेतोः परां निवृतिं नित्यनिरतिशयानन्दरूपां मुक्तिं अन्ते ज्ञानप्राप्त्यनन्तरं, प्राप्ताः अवापुः। अन्ते प्रारब्धकर्मणो वा अन्ते देहपात इति यावत् परां निवृतिं विदेहकैवल्यं प्राप्ताः, तदा आत्मयोगाद्विज्ञाय इति संबन्धः ॥४७२॥

स्वस्य आत्मनः अविद्या-बन्ध-संबन्ध-मोक्षात् अविद्यया ये बन्धाः अहंकारादिदेहान्ताः तैः यः संबन्धः आध्यासिक-तादात्म्यं तस्मान्मोक्षः स्वस्वरूपाववबोधेन वियोगः, तस्मात् सत्यज्ञानानन्दरूपात्मलब्धौ सत्य-ज्ञानानन्दरूपः यः आत्मा स्वस्वरूपं तस्य लब्धौ प्राप्तौ विषये शास्त्रं "अस्य महिमानमिति वीतशोकः" "ब्रह्मविदाप्नोति परं" इत्यादि युक्तिः कण्ठचामीकरन्यायः, देशिकोक्तिः "तत्वमस्यादिवाक्योत्थ-ब्रह्मात्मैकत्व-बोधतः। ब्रह्मण्यात्मत्व-दाढ्र्याय स्वाध्यासापनयं कुरु" इत्यादिः प्रमाणं अन्तःसिद्धा शास्त्र-युक्ति-गुरूक्त्यनुरूपा स्वानुभूतिश्च प्रमाणम् ।।४७५।।

उक्तार्थे दृष्टान्तार्थं अनुभवप्रमाणकानन्यानप्याह। बन्ध इति।

बन्धो मोक्षश्च तृप्तिश्च चिन्तारोग्य-क्षुधादयः।
स्वेनैव वेद्या यज्ज्ञानं परेषामानुमानिकम् ।।४७६।।

अविद्या तदस्तमयः अलंबुद्धिः चिन्ता आरोग्यं क्षुत् पिपासा, रोगः कुक्षिशूलादिः आदिपदार्थः। स्वेनैव वेद्याः साक्षादनुभवगम्याः यत् यस्मात् परेषां ज्ञानं आनुमानिकं परोक्षं हेतोर्दुष्टत्वे भ्रमात्मकं च स्यादिति भावः ।।४७६।।

तटस्थिता बोधयन्ति गुरवश्श्रुतयो यथा।
प्रज्ञयैव तरेद्विद्वानीश्वरानुगृहीतया।।४७७।।

यथा नद्यां नावि गच्छन्तं एवमेवं क्षेपणीं क्षिपेति तटस्थितः बोधयति स्वयं क्षेपणाकुशलं तथा गुरवोपि तथा श्रुतयः उपनिषदः तटस्थिताः परोक्षज्ञानजनकाः तथा मार्गं दर्शयन्ति। विद्वान् ईश्वरानुगृहीतया प्रज्ञयैव "ब्रह्मात्मनोश्शोधितयो" रिति लक्षितया चिन्मात्रवृत्यैव तरेत् संसार-वारिधिमिति शेषः ।।४७७।।

स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम्।
संसिद्धः सुसुखं तिष्ठेन्निर्विकल्पात्मनात्मनि ।।४७८।।

स्वमात्मानं अखण्डितं स्वयं स्वानुभूत्या ज्ञात्वा, संसिद्धः आत्मनि निर्विकल्पात्मना सुसुखं तिष्ठेत् इत्यन्वयः। स्पष्टोर्थः ।।४७८।।

वेदान्तसिद्धान्त-निरुक्तिरेषा ब्रह्मैव जीवः सकलं जगच्च।
अखण्डरूपस्थितिरेव मोक्षः ब्रह्माद्वितीयं श्रुतयः प्रमाणम् ॥४७९॥

वेदान्तैः सिद्धः यः अन्तः निर्णयः तस्य निरुक्तिः तज्जनक-संकुचित-शब्दः, एषा, जीवः ब्रह्मैव सकलं जगच्च ब्रह्मैव, मोक्षः अखण्डरूपस्थितिरेव ब्रह्मस्वरूपेणावस्थानं इत्यर्थः। ब्रह्माद्वितीयं, तत्र प्रमाणं श्रुतयः। श्रुतीनां बहुत्वेपि, सर्वाभिरपि जनिष्यमाणप्रमायाः एकत्वात् प्रमाणमित्येकवचनं। वेदान्तानां यः सिद्धान्तः निर्णीतार्थः, सिद्धान्तशब्दस्य तत्तच्छास्त्र-सिद्धार्थ-रूपतया परैर्व्याकृतत्वात् तस्य निरुक्तिः निर्णयजनकसंकुचितशब्दः निर्वचनमिति वार्थः। तत्वमसि, सर्वं खल्विदं ब्रह्म, ब्रह्मैवेदं विश्वं, एकमेवाद्वितीयं, इत्यादिश्रुतयः ॥४७९॥

इति गुरुवचनाच्छ्रुतिप्रमाणात्
परमवगम्य सतत्व-मात्मयुक्त्या।
प्रशमितकरणः समाहितात्मा
क्वचिदचलाकृति-रात्मनिष्ठितोभूत् ॥४८०॥

इति पूर्वं विस्तर-संग्रहरूपेण कथितात् गुरुवचनात् श्रुतिप्रमाणात् श्रुतयः प्रमाणानि यस्य गुरुवचनस्य तत् श्रुतिप्रमाणं तस्मात्। "शास्त्रं युक्तिः देशिकोक्तिः प्रमाणं चान्तःसिद्धा स्वानुभूतिः प्रमाणं" इत्यत्र शास्त्रस्य पृथक्कीर्तनात् श्रुतिरूपप्रमाणादिति वा अर्थः। आत्मयुक्त्या श्रुत्या-चार्योपदिष्टार्थ-मननेनेत्यर्थः। परं सतत्त्वं परं ब्रह्म परमार्थतत्त्वं अवगम्य प्रशमितकरणः प्रकर्षेण शमितानि करणानि चक्षुरादीनि बाह्यानि येन। यद्वा आत्मयुक्त्या, युक्तिः योगः वृत्तिनिरोध आत्मनः मनसः वृत्ति-निरोधेन करणानि वाह्यानि प्रकर्षेण शमितानि इति सुवचम्। सम्यगाहितः ब्रह्मणि स्थापितः आत्मा अन्तःकरणं येन यस्येति वा, मनोवृत्तिनिरोधेन चक्षुराद्युपशमेपि नात्मनिष्ठा अत उक्तं समाहितात्मेति। क्वचिदेकान्त-प्रदेशे अचलाकृतिः पर्वतवदप्रकम्प्यः, आत्मनिष्ठितः ब्रह्मनिष्ठः अभूत्। आत्मनि स्थितः आत्मनिष्ठितः, जातात्मनिष्ठ इति वा ॥४८०॥

कंचित्कालं समाधाय परे ब्रह्मणि मानसम्।
व्युत्थाय परमानन्दादिदं वचनमब्रवीत् ॥४८१॥

बुद्धिर्विनष्टा गलिता प्रवृत्तिः
ब्रह्मात्मनोरेकतयाधिगत्या ।
इदं न जानेप्यनिदं न जाने
किं वा कियद्वा सुखमस्य पारम् ॥४८२॥

ब्रह्मात्मनोरेकतयाधिगत्या साक्षात्कारेण बुद्धिर्विनष्टा, प्रवृत्तिर्गलिता, इदं प्रत्यक्षगतं न जाने अनिदमपि परोक्षमपि न जाने। पूर्वं तथा विभाग आसीत् पुरोवर्ति प्रत्यक्षं अपरं परोक्षमिति, इदानीं तथा नास्तीति कथनं। किंवा कियद्वा सुखं, अस्य पारं किं कियद्वा सुखं। एतावन्तं कालं अनुभूतं अखण्डं सुखं इति तत्र कालतः देशतः वस्तुतश्च अपरिच्छिन्नत्वं कथयति। इदं न जानेप्यनिदं न जाने इत्यनेन वस्तुतः परिच्छेदो नास्तीत्युक्तं। किंवा कियद्वा सुखमस्य पारमिति कालतो देशतश्च स नास्तीत्युक्तम् ॥४८२॥

वाचा वक्तुमशक्यमेव मनसा मन्तुं नवा शक्यते
स्वानन्दामृत-पूरपूरितपर-ब्रह्मांबुधे-र्वैभवम् ।
अम्भोराशिविशीर्ण-वार्षिक-शिलाभावं भजन्मे मनः
यस्यांशांशलवे विलीनमधुनाऽऽनन्दात्मना निर्वृतम् ॥४८३॥

वार्षिकशिला वर्षोपलस्तु करकः इत्यमरः।

क्वगतं केन वा नीतं कुत्र लीनमिदं जगत् ।
अधुनैव मया दृष्टं नास्ति किं महदद्भुतम् ॥४८४॥

किं हेयं किमुपादेयं किमन्यत् किं विलक्षणम् ।
अखण्डानन्दपीयूष-पूर्णो ब्रह्ममहार्णवे ॥४८५॥

नकिंचिदत्र पश्यामि नश्शृणोमि न वेद्म्यहं ।
स्वात्मनैव सदानन्दरूपेणास्मि विलक्षणः ॥४८६॥

पंच-कोशविलक्षण इत्यर्थः ॥ ४८६ ॥

प्लुष्टाज्ञानः कृतकृत्यः गुरुं प्रणमति। नम इति। "भावाद्वैतं सदा कार्यं क्रियाद्वैतं न कुत्रचित्। अद्वैतं त्रिषु लोकेषु नाद्वैतं गुरुणा सह" इत्यनुशासनम्।

नमो नमस्ते गुरवे महात्मने विमुक्त-संगाय सदुत्तमाय।
नित्याद्वयानन्द-रसस्वरूपिणे भूम्ने सदापार-दयाम्बुधाम्ने ॥४८७॥

सदुत्तमाय ब्रह्मविद्वरिष्ठाय, भूम्ने ब्रह्मव्यतिरिक्तविषयक-दर्शन-श्रवण-विज्ञानशून्याय सदा अपारा च सा दया च सैवाम्बु तस्य धाम्ने निक्षेपस्थानाय करुणाजलनिधये ॥४८७॥

यत्कटाक्ष-शशि-सान्द्रचन्द्रिका-पातधूत-भवतापज-श्रमः।
प्राप्तवानह-मखण्डवैभवानन्द-मात्मपद-मक्षयम् क्षणात् ॥४८८॥

निष्कल-निष्क्रिय-शान्त-निरवद्य-निरंजन-परब्रह्म-निर्मग्न-मनस्सं-वलिततया शिशिर-शिशिराः जगदाह्लादकाः ये कटाक्षाः अमृतझरभंगाः अपांगाः त एव शशी तदीया सान्द्रचन्द्रिका। यद्वा त एव शशि-सान्द्र-चन्द्रिका तस्याः पातेन निरर्गलं प्रसरणेन धूतः तिरस्कृतः संसारतापजश्रमः यस्य मम सः अहं अखण्डवैभवानन्दं निरतिशय-स्वप्रकाशसुखं अक्षयं शाश्वतं आत्मपदं विष्णुपरमपदं क्षणात् प्राप्तवान् तस्मै गुरवे महात्मने नमः इति पूर्वेणान्वयः ॥४८८॥

गुरुप्रसादलब्धं स्वानुभवमाविष्करोति।

धन्योहं कृतकृत्योहं विमुक्तोहं भवग्रहात्।
नित्यानन्दस्वरूपोहं पूर्णोहं त्वदनुग्रहात् ॥४८९॥

असंगोह-मनंगोह-मलिंगोह-मभंगुरः।
प्रशान्तोह-मनन्तोह-मतान्तोहं चिरंतनः ॥४९०॥

अतान्तः अश्रान्त इत्यर्थः ॥४९०॥

अकर्ताह-मभोक्ताह-मविकारोह-मक्रियः।
शुद्धबोध-स्वरूपोहं केवलोहं सदाशिवः ॥४९१॥

द्रष्टुः श्रोतुर्वक्तुः कर्तृर्भोक्तु-र्विभिन्न एवाहम्।
नित्यनिरंतर-निष्क्रिय-निस्सीमा-संगपूर्णबोधात्मा ॥४९२॥

नाहमिदं नाहमदोऽप्युभयोरवभासकं परंशुद्धम्।
बाह्याभ्यन्तर-शून्यं पूर्णं ब्रह्माद्वितीयमेवाहम् ॥४९३॥

सर्वोपाधि-सम्बन्ध-विनिर्मुक्त इत्यर्थः। त्रिविधपरिच्छेदशून्ये कुतोवा बाह्याभ्यन्तरकल्पना, शरीरदृष्ट्या सा नात्मदृष्ट्या ॥४९३॥

निरुपममनादितत्वं त्वमहमिदमद इतिकल्पनाद्दूरम्।
नित्यानन्दैकरसं सत्यं ब्रह्माद्वितीयमेवाहम् ॥४९४॥

नारायणोहं नरकान्तकोहं पुरान्तकोहं पुरुषोहमीशः।
अखण्डबोधोह-मशेषसाक्षी निरीश्वरोहं निरहं च निर्ममः ॥४९५॥

अहंताममताशून्य इत्यर्थः। "अत एव चानन्याधिपतिः" इति ब्रह्मसूत्रम् ॥४९५॥

सर्वेषु भूतेष्वहमेव संस्थितः,
ज्ञाना (त्रा) त्मनान्तर्बहिराश्रयः सन्।
भोक्ता च भोग्यं स्वयमेव सर्वं
(य) तद्यत्पृथग्दृष्टमिदंतया पुरा ॥४९६॥

सर्वेषु भूतेषु वियदादिषु अन्तर्बहिराश्रयः सन् ज्ञाना (त्रा) त्मना अहमेव संस्थितः स्वोपाध्यन्तःकरणवृत्या व्याप्य हि सर्वं जानाति, ज्ञानकाले सर्वस्यापि अन्तःकरणाविच्छिन्न-चैतन्यरूप-प्रमात्रभिन्नस्वावच्छिन्नचैतन्याध्यस्ततया अधिष्ठानं सर्वस्य स्वयमेवेतिभावः नाधिष्ठानाद् भिन्नतारोपितस्येति भोक्ता च भोग्यं शब्दादि स्वयमेव सर्वं पुरा यद्यत् पृथक् दृष्टं तत्सत्तास्फूर्तिव्यतिरिक्त-सत्तास्फूर्तिकत्वाभावात् शूक्तिरजतरज्जु-सर्पादिवत् ॥४९६॥

मय्यखण्ड-सुखाम्भोधौ बहुधा विश्ववीचयः ।
उत्पद्यन्ते विलीयन्ते मायामारुत-विभ्रमात् ॥४९७॥

स्वात्मनिरूपणे "मयि सुखबोधपयोधौ महति ब्रह्माण्ड-बुद्बुद-सहस्रं। मायामयेन मरुता भूत्वा भूत्वा मुहुस्तिरोधत्ते" इति स्पष्टम् ॥४९७॥

स्थूलादिभावा मयि कल्पिता
भ्रमादा-रोपितानुस्फुरणेन लोकैः ।
काले यथा कल्पक-वत्सरायन-
र्त्वादयो निष्कल-निर्विकल्पे ॥४९८॥

"अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कला" इत्यादिना अखण्डे एककाले निष्कले निरवयवे निर्विकल्पे कलाकाष्ठादिपरिणाम-रहिते यथा लोकैः क्षणदिन-मासर्त्वयन-संवत्सर-कल्पादिभेदाः कल्पिताः, तथा आरोपितानुस्फुरणेन कल्पितस्फूर्तिमात्रेण स्थूलादिभावाः स्थूल-सूक्ष्म-कारणशरीर-रूपपदार्थाः भ्रमात् मयि कल्पिताः लोकैः इत्यन्वयः। नहि नादबिंदु-कलातीतः कालं वा तद्भेदान् वा पश्यति तद्वत् देशकालवस्तु-परिच्छेदशून्यं भूमानं पश्यतो मम समूलकाषं-कषिताज्ञानस्य नारोपितानु-स्फुरणं भ्रान्त्यभावादिति भावः ॥४९८॥

आरोपितं नाश्रयदूषकं भवेत् कदापि मूढैर्मतिदोषदूषितैः ।
नार्द्रीकरोत्यूषर-भूमिभागं मरीचिका-वारिमहाप्रवाहः ॥४९९॥

मतिदोषदूषितैः मूढैरारोपितं आश्रयदूषकं निरधिष्ठानभ्रमायोगात् आश्रयस्य स्वाधिष्ठानस्य दोषावहं कदापि न भवेत्। उक्तं हि अध्यास-भाष्ये "तत्रैवंसति यत्र यदध्यासः तत्कृतेन गुणेन दोषेण वा अणुमात्रेणापि स न सम्बध्यते" इति । तद् दृष्टान्तेन स्फुटयति नेति। मरीचिकावारि-महाप्रवाहः ऊषरभूमिभागं नार्द्रीकरोतीति। ऊषरभूमिभागः मरीचिका-वारिमहाप्रवाह-कल्पनाश्रयः ॥४९९॥

आकाशवत् कल्पविदूरगोहं
आदित्यवद्भास्य-विलक्षणोहम् ।

अहार्यवन्नित्य-विनिश्चलोहं
अम्भोधिवत् पारविवर्जितोहम् ॥५००॥

"आकाशवत् सर्वगतश्च नित्यः" इत्यादिश्रुतेरर्थः अनुभूत इति अनुभवप्रकाशनमिदं। कल्पविदूरगः कालापरिच्छिन्नः। "स्वयंज्योतिः" श्रुत्यर्थमाह आदित्यवत् भास्य-विलक्षणोहं अहार्यवत् पर्वतवत् नित्यविनिश्चलोहम्। अम्भोधिवत् पारविवर्जितोहम् ॥५००॥

न मे देहेन सम्बन्धो मेघेनेव विहायसः।
अतः कुतो मे तद्धर्माः जाग्रत्स्वप्न-सुषुप्तयः ॥५०१॥

विहायसः आकाशस्य मेघेन यथा संबन्धो नास्ति, "धूमज्योतिस्सलिलमरुतां सन्निपातः क्व मेघः" इतिकालिदासोक्तेः पृथ्वी-जलतेजो वायुसंघातरूपेण मेघेन यथाकाशं न संसृज्यते नवा नीरवर्षणेन आर्द्रीक्रियते निर्लिप्तस्वभावत्वात् अमूर्तत्वात् एवं मे मम आत्मनः पांचभौतिकेनापि देहेन संबन्धः नास्ति उक्तहेतोरेव। अतः धर्मिसंबन्धाभावात् तद्धर्माः जाग्रत्स्वप्न-सुषुप्तयः मे कुतः इत्यन्वयः ॥५०१॥

उपाधिरायाति स एव गच्छति
स एव कर्माणि करोति भुङ्क्ते।
स एव जीवन् म्रियते सदाहं
कुलाद्रिवन्निश्चल एव संस्थितः ॥५०२॥

न मे प्रवृत्ति-र्नच मे निवृत्तिः
सदैकरूपस्य निरंकुशस्य।
एकात्मको यो निबिडो निरन्तरो
व्योमेव पूर्णः स कथं नु चेष्टते ॥५०३॥

"उत्क्रान्ति-गत्यागतीनां" "तद्गुणसारत्वात्त-द्व्यपदेशः प्राज्ञवत्" "कर्ता शास्त्रार्थवत्वात्" "यथा च तक्षोभयथा" "चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" इति क्रमेण तत्र तत्र सूत्राणि। सदाहं कुलाद्रिवन्निश्चल एव संस्थितः प्रवृत्तिनिवृत्योः यौगपद्ये वा क्रमिकत्वे

वा एकरूपत्वं न संभवति, निरंशकस्य निरवयवस्य विक्रियासंभवश्च। तदुपपादयति एकात्मको यो निबिडः सान्द्रः, निरन्तरः निरवकाशः व्योमेव गगनमिव पूर्णः स कथं नु चेष्टते ॥५०३॥

पुण्यानि पापानि निरिन्द्रियस्य
निश्चेतसो निर्विकृते-र्निराकृतेः ।
कुतो ममाखण्ड-सुखानुभूते र्ब्रूते
ह्यनन्वागतमित्यपि श्रुतिः ॥५०४॥

विहितकर्म-जन्यं पुण्यं, निषिद्धकर्म-जन्यं पापं, कर्म च त्रिविधं शरीरं मानसं वाचिकं चेति, उक्तं च गीतासु "शरीरवाङ्मनोभि-र्यत् कर्म प्रारभते नरः। न्याय्यं वा विपरीतं वा" इति। महानदी-स्नान-देवब्राह्मण-प्रदक्षिणादीनि शारीराणि पुण्यानि, महामन्त्रजप-भगवन्नाम-संकीर्तन-तद्‌गुणकथनादीनि वाचिकानि पुण्यानि, ईश्वरध्यानस्वपरहित-चिन्तनादीनि मानसानि पुण्यानि। अगम्यागमन-परनिन्दा-नृतवदन-निषिद्धध्यानादीनि क्रमेण शरीर-वाङ्मनोजन्यानि पापानि। उक्तं हि "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसै-रन्त्यजातितां" इति। वाक्पदं चक्षुश्श्रोत्राद्युपलक्षकं। यद्वा वाक्पदेन कर्मसाधनानीन्द्रियाणि, मनः पदेन ज्ञानसाधनानि चक्षुरादीन्द्रियाणि गृह्यन्ते। सदसत्करण-दर्शन-श्रवणादीनि तत्तत्पुण्यपापानि। एतत्सर्वं इन्द्रियाणां चेतसो वा साकारस्य शरीरस्य वा स्थूलस्य। निरिन्द्रियस्य "न तस्य कार्यं करणं च विद्यते" इतिश्रुतेः। "सचक्षुरचक्षुरिव सकर्णोकर्ण इव समना अमना इव सप्राणोप्राण इवेतिच। वस्तुतः अचक्षुरपि परदृष्ट्या सचक्षुरिव जीवन्मुक्तः आध्यासिक-सम्बन्धरहिततया तिष्ठतीति तदर्थः। तथाच सेन्द्रियत्वं समनस्त्वं सशरीरत्वं च मिथ्याज्ञाननिबन्धनं आभिमानिक तादात्म्य-संबन्धेन तत्तद्विशिष्टत्वमेव। ब्रह्मसाक्षात्कार-दग्धा-ज्ञानस्य कुतः अभिमानः कुतस्तरां तादात्म्यं। तस्मात् निरिन्द्रियस्य निश्चेतसः निराकृतेः इतिपदत्रयेण वाङ्मनश्शरीररूप-पुण्यपाप-साधनरहितत्वं कथितं। तार्किकाः आत्मन एव पुण्यं पापं च वदन्ति। निर्विकृतेरित्यनेन विहित-निषिद्ध-कर्मजन्ययोः पुण्यपापयोः विकारतया नित्यस्यानित्य-धर्माश्रयत्वे अनित्यत्वप्रसंगात् विकृतिशून्य आत्मा उक्तः। उक्तं हि

श्रुतिसारसमुद्धरणे तोटकाचार्यैः "न हि नित्यमनित्यगुणेन गुणि" इति। वियदधिकरणभाष्ये च अनित्यशब्दाश्रयत्वेन गगनस्यानित्यत्वमिति। तथाच स्वतो निर्विकारतया मूलाज्ञाननाशेन शरीरेन्द्रिय-चेतोरूपोपाधि-संबन्धाभावाच्च अखण्ड-सुखानुभूतेः अनावृतापरिच्छिन्न-स्वयंप्रकाशा-नन्दस्वरूपस्य मम कुतः पुण्यानि कुतस्तरां पापानि। तत्र श्रुतिं प्रमाणयति "ब्रूते ह्यनन्वागतमित्यपि श्रुतिः" इति। "अनन्वागतं पुण्येन अनन्वागतं पापेन तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति" इति सुषुप्तिकाले मूलाज्ञानसत्वेपि तत्कार्याध्यासाभावात् पुण्यपापास्पृष्टत्वं हृदयगत-सकल-शोकास्पृष्टत्वं च बोधितं। तथा सर्वैरनुभूयते च। संप्रति कारणाज्ञानस्यापि नाशात् पुण्यपापदुःख-संबन्धः सुतरां नास्तीति को मोहः कः शोकः इति-श्रुताविव कुतश्शब्देन तेषां अभावः आक्षेपेण बोधितः। यदि पुण्यपाप-दुःखानां आत्मधर्मत्वं सुषुप्तावपि तदन्वयः स्यात्। तदा स्वरूपसुखानुभवः, नतु पुण्यफलं परिच्छिन्नं सुखमनुभूयते। तस्य सुखस्य विषयसंबन्धा-जनितत्वात्। तदा दुःखं तु नैवास्ति "एषोस्य परम आनन्दः" इतिश्रुतेः अनुभवाच्च। ततः पापानन्वयः। हृदयस्य शोकान् इत्यनेन शोकशब्दित-दुःखस्य आत्मधर्मत्वं नास्तीति कथितं भवति। जाग्रत्स्वप्नयोरध्यासात् ते कल्प्यन्ते स्म, इदानीं तदभावात् कल्पना नास्तीति श्रुत्यर्थः ॥५०४॥

उक्तमर्थं दृष्टान्तेन विशदयति द्वाभ्यां,

छायया स्पृष्टमुष्णं वा शीतं वा सुष्ठु दुष्ठु वा।
न स्पृशत्येव यत्किंचित् पुरुषं तद्विलक्षणम् ॥५०५॥

स्वशरीरच्छायायाः जलाग्न्यादिसंबन्धे सदसद्वस्तु-संबन्धे वा शरीरस्य यथा शीतोष्णादिसंबन्धो नास्ति एवं बुद्धौ प्रतिफलतः जीवस्य उपाधेः प्रतिबिंब-पक्षपातित्वात् तद्धर्म-पुण्यसुखादिसंबन्धेपि अज्ञान-नाशेन जीवत्वविगमानन्तरं तद्विलक्षणं बिंबभूतं पूर्णत्वात् पुरुषं यत्किंचिदपि न स्पृशति। छायापर्याये पुरुषशब्देन शरीरं ग्राह्यम्। तद्विलक्षणं छाया-विलक्षणं। न साक्षिणं साक्ष्यधर्माः संस्पृशन्ति कदाचन ॥५०५॥

अविकारमुदासीनं गृहधर्माः प्रदीपवत्।
देहेन्द्रिय-मनोधर्माः नैवात्मानं स्पृशन्त्यहो ॥५०६॥

गृहधर्माः गृहप्रकाशकं प्रदीपं यथा न संस्पृशन्ति, एवं साक्ष्यधर्माः दृश्यबुद्धीन्द्रिय-शरीरधर्माः विलक्षणं कदाचन दृग्रूपं स्वयंप्रकाशं अविकारं उदासीनं साक्षिणं न संस्पृशन्ति। देहेन्द्रिय-मनोधर्माः नैवात्मानं अविकारमुदासीनं स्पृशन्तीति प्रदीपदृष्टान्तेन पुण्यानि पापानीत्यादि-श्लोकार्थो विवृतः ॥५०६॥

त्रिभिः दृष्टान्तैः आत्मनोऽसंगतां प्रतिपादयति। रवेरिति।

रवेर्यथा कर्मणि साक्षिभावो वह्नेर्यथा वाऽयसि दाहकत्वम्।
रज्जोर्यथाऽऽरोपितवस्तु-संगः तथैव कूटस्थ-चिदात्मनो मे ॥५०७॥

कर्मसाक्षी जगच्चक्षुरिति प्रसिध्या सकलप्राणिकर्मसाक्षित्वं तादृश-कर्मासंगिनो रवेर्यथा तथा कूटस्थ-चिदात्मनो मे निर्विकारचिद्रूपस्य मम सकल-कर्मासंगिनः साक्षित्वं। एवं वह्नेर्दाहकत्वं अयोदहतीति यथा अयसि कल्पितं एवं बुध्यादिगतं कर्तृत्वं मयि। एवं रज्जोः कल्पितसर्प-दण्डोदधारादि-वस्तुसंगः तादात्म्यरूपः यथा कल्पितः तथा निर्विकार-चिद्रूपस्य मम कल्पितदेहादि-संबन्धः। वस्तुतः असंगत्वं दृष्टान्तत्रयेपि ॥५०७॥

स्वस्यानुभवान्निर्धर्मकत्वमाह। कर्तेति।

कर्तापि वा कारयितापि नाहं
भोक्तापि वा भोजयितापि नाहम्।
द्रष्टापि वा दर्शयितापि नाहं
सोहं स्वयं-ज्योतिरनीदृगात्मा ॥५०८॥

"विज्ञानं यज्ञं तनुते, एष ह्येव साधु कर्म कारयति" इतिश्रुत्या बुध्युपहितस्य मायोपहितस्य च क्रमेण कर्तृत्वं कारयितृत्वं एवं भोक्तृत्वं भोजयितृत्वं च। द्रष्टृत्वस्यापि दृश्यसापेक्षत्वात् अद्वितीये तदपि कल्पितमेव वस्तुतो नास्ति। चक्षुरादिप्रेरकत्वमपि व्यवहारावस्थायामेव न वस्तुतः। अतः दर्शियितापि नाहं, सोहं अनीदृक् सकलधर्मवर्जितः "साक्षी चेता केवलो निर्गुणश्च" इतिश्रुतेः। स्वयंज्योतिः अनन्याधीनस्फुरणः आत्मा ॥५०८॥

चलत्युपाधौ प्रतिबिंबलौल्य—
मौपाधिकं मूढधियो नयन्ति।
स्वबिंबभूतं रविवद्विनिष्क्रियं
कर्तास्मि भोक्तास्मि हतोस्मि हेति ।।५०९।।

"ध्यायतीव लेलायतीव" इतिश्रुतिः। बुद्धिशरीराद्युपाधि-धर्मान् भ्रान्त्या मूढधियः विनिष्क्रिये रवौ बिंबभूते यथा चलति जले, तत्र उपाधौ भासमानरविप्रतिबिंबे प्रतीयमानं चलनं नयन्ति कल्पयन्ति रविश्चलतीति तथा उपाधौ बुध्यादौ चलति औपाधिकं तन्निमित्तं तत्र प्रतिबिंबभूत-जीवलौल्यं विनिष्क्रियं स्वबिंबभूतं आत्मानं कर्तास्मि भोक्तास्मीति बुद्धि-तादात्म्याध्यासात् हतोस्मीति स्थूलदेहतादात्म्याध्यासात् नयन्ति। प्रति-बिंबेपि उपाधिधर्माः भ्रान्तिसिद्धाः बिंबे सुतरां न सन्ति। तथापि मूढधियः नयन्ति। अतः श्रुत्या यक्त्या अनुभवेन च सिद्धनिर्गुणत्वस्य न कोपि विरोधः ।।५०९।।

घटाकाशदृष्टान्तेन स्थूलदेहधर्माः नात्मन इत्याह। जल इति।

जले वापि स्थले वापि लुठत्वेष जडात्मकः।
नाहं विलिप्ये तद्धर्मैः घटधर्मैर्नभो यथा ।।५१०।।

जडात्मकः एष देहः जले वापि स्थले वापि लुठतु। नभः आकाशः यथा घटधर्मैः अनित्यत्वादिभिः पृथु-बुध्नोदराद्याकारैः नीलादिरूपैश्च न लिप्यते तथा तद्धर्मैः स्थूलदेहधर्मैः जलस्थलादि-संबन्ध-प्रयुक्त-शैत्याभि-घातादिभिः नाहं विलिप्ये जरामरणादिभिश्च ।।५१०।।

कर्तृत्व-भोक्तृत्व-खलत्व-
मत्तता—जडत्व-बद्धत्वविमुक्ततादयः।
बुद्धेर्विकल्पा न तु सन्ति वस्तुतः
स्वस्मिन्परे ब्रह्मणि केवलेऽद्वये ।।५११।।

केवलेद्वये परे ब्रह्मणि स्वस्मिन् कर्तृत्वादि-विमुक्ततान्ताः बुध्यध्यास-निबन्धनाः विविधकल्पनाः वस्तुतो न सन्ति ।।५११।।

सन्तु विकाराः प्रकृतेर्दशधा शतधा सहस्रधा वापि।
तैः किं मेऽसंगचितेः न ह्यंबुदडंबरोऽम्बरं स्पृशति ॥५१२॥

सर्वस्य प्रपंचस्य मूलप्रकृतेः सकाशात् साक्षात्परंपरया जातत्वात् मूलप्रकृतेः मायायाः विकाराः दशधा शतधा सहस्रधा वापि सन्तु। असंगचितेः मे तैः विकारैः किं स्यात्। तत्र दृष्टान्तः अम्बुदडम्बरः मेघगर्जनादिकं अम्बरं गगनं न हि स्पृशति। सदा निर्विकारे गगने मेघोदय-गर्जन-विनाशादिना न कोपि विशेषः इति ॥५१२॥

श्रीगुरूपदेशानुसारेण जातं अद्वैतानुभवं विशदयति। अव्यक्तादीत्यादिना।

अव्यक्तादि स्थूलपर्यन्तमेतद् विश्वं यत्राभासमात्रं प्रतीतम्।
व्योमप्रख्यं सूक्ष्ममाद्यन्तहीनं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥५१३॥

स्पष्टम ॥

सर्वाधारं सर्ववस्तुप्रकाशं सर्वाकारं सर्वगं सर्वशून्यम्।
नित्यं शुद्धं निष्कलं निर्विकल्पं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥५१४॥

यत्प्रत्यस्ता (यस्मिन्नस्ता) शेषमाया विशेषं
प्रत्यग्रूपं प्रत्ययागम्यमानं।
सत्यज्ञानानन्त-मानन्दरूप
ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥५१५॥

तस्य भासा सर्वमिदं विभातीतिश्रुतेः सर्वेषां वस्तूनां प्रकाशो यस्मात् तत्सर्ववस्तुप्रकाशं "इदं सर्वं यदयमात्मेतिश्रुतेः सर्वाकारं सर्वगं अपरिच्छिन्नं सर्वशून्यं स्वव्यतिरिक्तस्या-भावात्, (यस्मिन्निति अभेदे सप्तमी) अखण्डाकार-वृत्तीतरवृत्त्यविषयः इत्यर्थः प्रत्ययागम्यमानमित्यस्य।

निष्क्रियोस्म्यविकारोस्मि निष्कलोस्मि निराकृतिः।
निर्विकल्पोस्मि नित्योस्मि निरालंबोस्मि निर्द्वयः॥५१६॥

सर्वात्मकोहं सर्वोहं सर्वातीतोहमद्वयः।
केवलाखण्ड-बोधोह-मानन्दोहं निरन्तरम् ॥५१७॥

स्वाराज्य-साम्राज्य-विभूतिरेषा भवत्कृपा-श्रीमहितप्रसादात् ।
प्राप्ता मया श्रीगुरवे महात्मने नमो नमस्तेस्तु पुनर्नमोस्तु ॥५१८॥

महास्वप्ने मायाकृतजनिजरामृत्युगहने
भ्रमन्तं क्लिश्यन्तं बहुलतरतापैरनुकलम् ।
अहंकारव्याघ्रव्यथितमिममत्यन्तकृपया
प्रबोध्य प्रस्वापात्परमवितवान्मामसि गुरो ॥ ५१९ ॥

नमस्तस्मै सदेकस्मै नमश्चिन्महसे मुहुः ।
यदेतद्विश्वरूपेण राजते गुरुराज ते ॥ ५२० ॥

इति नतमवलोक्य शिष्यवर्यं
समधिगतात्मसुखं प्रबुद्धतत्त्वम् ।
प्रमुदितहृदयः स देशिकेन्द्रः
पुनरिदमाह वचः परं महात्मा ॥ ५२१ ॥

ब्रह्मप्रत्ययसंततिर्जगदतो ब्रह्मैव सत्सर्वतः
पश्याध्यात्मदृशा प्रशान्तमनसा सर्वास्ववस्थास्वपि ।
रूपादन्यदवेक्षितुं किमभितश्चक्षुष्मतां विद्यते
तद्वद्ब्रह्मविदः सतः किमपरं बुद्धेर्विहारास्पदम् ॥ ५२२ ॥

कस्तां परानन्दरसानुभूति-
मुत्सृज्य शून्येषु रमेत विद्वान् ।
चन्द्रे महाह्लादिनि दीप्यमाने
चित्रेन्दुमालोकयितुं क इच्छेत् ॥ ५२३ ॥

असत्पदार्थानुभवे न किंचि-
न्नह्यस्ति तृप्तिर्नच दुःखहानिः ।
तदद्वयानन्दरसानुभूत्या
तृप्तः सुखं तिष्ठ सदात्मनिष्ठया ॥५२४॥

स्वमेव सर्वतः पश्यन्मन्यमानः स्वमद्वयम्।
स्वानन्दमनुभुंजानः कालं नय महामते॥ ५२५॥

अखण्डबोधात्मनि निर्विकल्पे
विकल्पनं व्योम्नि पुरः प्रकल्पनम्।
तदद्वयानन्दमयात्मना सदा
शान्तिं परामेत्य भजस्व मौनम्॥ ५२६॥

तूष्णीमवस्था परमोपशान्ति-
र्बुद्धेरसत्कल्पविकल्पहेतोः।
ब्रह्मात्मना ब्रह्मविदो महात्मनो
यत्राद्वयानन्दसुखं निरन्तरम्॥ ५२७॥

नास्ति निर्वासनान्मौनात्परं सुखकृदुत्तमम्।
विज्ञातात्मस्वरूपस्य स्वानन्दरसपायिनः॥ ५२८॥

गच्छंस्तिष्ठन्नुपविशन् शयानो वान्यथापि वा।
यथेच्छया वसेद्विद्वानात्मारामः सदा मुनिः॥ ५२९॥

न देशकालासनदिग्यमादि-
लक्ष्याद्यपेक्षा प्रतिबद्धवृत्तेः।
संसिद्धतत्त्वस्य महात्मनोऽस्ति
स्ववेदने का नियमाद्यवस्था॥ ५३०॥

घटोऽयमिति विज्ञातुं नियमः कोन्वपेक्ष्यते।
विना प्रमाणसुष्ठुत्वं यस्मिन्सति पदार्थधीः॥ ५३१॥

अयमात्मा नित्यसिद्धः प्रमाणे सति भासते।
न देशं नापि वा कालं न शुद्धिं वाप्यपेक्षते॥ ५३२॥

देवदत्तोऽहमित्येतद्विज्ञानं निरपेक्षकम् ।
तद्वद्ब्रह्मविदोऽप्यस्य ब्रह्माहमिति वेदनम् ॥ ५३३ ॥

भानुनेव जगत्सर्वं भासते यस्य तेजसा ।
अनात्मकमसत्तुच्छं किं नु तस्यावभासकम् ॥ ५३४ ॥

वेदशास्त्रपुराणानि भूतानि सकलान्यपि ।
येनार्थवन्ति तं किं नु विज्ञातारं प्रकाशयेत् ॥ ५३५ ॥

एष स्वयं ज्योतिरनंतशक्ति-
रात्माप्रमेयः सकलानुभूतिः ।
यमेव विज्ञाय विमुक्तबन्धः
जयत्ययं ब्रह्मविदुत्तमोत्तमः ॥ ५३६ ॥

न खिद्यते नो विषयैः प्रमोदते
न सज्जते नापि विरज्यते च ।
स्वस्मिन्सदा क्रीडति नन्दति स्वयं
निरन्तरानन्दरसेन तृप्तः ॥ ५३७ ॥

क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि ।
तथैव विद्वान्रमते निर्ममो निरहं सुखी ॥ ५३८ ॥

चिन्ताशून्यमदैन्यभैक्षमशनं पानं सरिद्वारिषु
स्वातन्त्र्येण निरङ्कुशा स्थितिरभीर्निद्रा श्मशाने वने ।
वस्त्रं क्षालनशोषणादिरहितं दिग्वास्तु शय्यामही
संचारो निगमान्तवीथिषु विदां क्रीडा परेब्रह्मणि ॥ ५३९ ॥

विमानमालम्ब्य शरीरमेतत्
भुनक्त्यशेषान्विषयानुपस्थितान् ।
परेच्छया बालवदात्मवेत्ता
योऽव्यक्तलिङ्गोऽननुषक्तबाह्यः ॥ ५४० ॥

दिगम्बरो वापि च साम्बरो वा
त्वगम्बरो वापि चिदम्बरस्थः।
उन्मत्तवद्वापि च बालवद्वा
पिशाचवद्वापि चरत्यवन्याम् ॥ ५४१ ॥

कामान्नी कामरूपी संश्चरत्येकचरो मुनिः।
स्वात्मनैव सदा तुष्टः स्वयं सर्वात्मना स्थितः ॥ ५४२ ॥

क्वचिन्मूढो विद्वान्क्वचिदपि महाराजविभवः
क्वचिद्भ्रान्तः सौम्यः क्वचिदजगराचार कलितः।
क्वचित्पात्रीभूतः क्वचिदवमतः क्वाप्यविदित-
श्चरत्येवं प्राज्ञः सततपरमानन्दसुखितः ॥ ५४३ ॥

निर्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः।
नित्यतृप्तोऽप्यभुंजानोऽप्यसमः समदर्शनः ॥ ५४४ ॥

अपि कुर्वन्नकुर्वाणश्चाभोक्ता फलभोग्यपि।
शरीर्यप्यशरीर्येषपरिच्छिन्नोऽपि सर्वगः ॥ ५४५ ॥

अशरिरं सदा सन्तमिमं ब्रह्मविदं क्वचित्।
प्रियाप्रिये न स्पृशतस्तथैव च शुभाशुभे ॥ ५४६ ॥

स्थूलादिसंबन्धवतोऽभिमानिनः
सुखं च दुःखंच शुभाशुभे च।
विध्वस्तबन्धस्य सदात्मनो मुनेः
कुतः शुभं वाप्यशुभं फलं वा ॥ ५४७ ॥

तमसा ग्रस्तवद्भानादग्रस्तोऽपि रविर्जनैः।
ग्रस्त इत्युच्यते भ्रान्त्या ह्यज्ञात्वा वस्तुलक्षणम् ॥ ५४८ ॥

तद्वद्देहादिबन्धेभ्यो विमुक्तं ब्रह्मवित्तमम्।
पश्यन्ति देहिवन्मूढाः शरीराभासदर्शनात् ॥ ५४९ ॥

अहिनिर्ल्वयनीवास्यं मुक्तदेहस्तु तिष्ठति।
इतस्तत श्चाल्यमानो यत्किंचित्प्राणवायुना॥ ५५०॥

स्त्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम्।
देवेन नीयते देहो यथाकालोपभुक्तिषु॥ ५५१॥

प्रारब्धकर्मपरिकल्पितवासनाभिः
संसारिवच्चरति भुक्तिषु मुक्तदेहः।
सिद्धः स्वयं वसति साक्षिवदत्र तूष्णीं
चक्रस्य मूलमिव कल्पविकल्पशून्यः॥ ५५२॥

नैवेन्द्रियाणि विषयेषु नियुङ्क्त एष
नैवापयुङ्क्त उपदर्शनलक्षणस्थः।
नैव क्रियाफलमपीषदपेक्षते सः
स्वानन्दसान्द्ररसपानसुमत्तचित्तः॥ ५५३॥

लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत्केवलात्मना।
शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः॥ ५५४॥

जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः।
उपाधिनाशाद्ब्रह्मैव सद्ब्रह्माप्येति निर्द्वयम्॥ ५५५॥

शैलूषो वेषसद्भावाभावयोश्च यथा पुमान्।
तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैव नापरः॥ ५५६॥

यत्र क्वापि विशीर्णं पर्णमिव तरोर्वपुः पतनात्।
ब्रह्मीभूतस्य यतेः प्रागेव हि तच्चिदग्निना दग्धम्॥ ५५७

सदात्मनि ब्रह्मणि तिष्ठतो मुनेः
पूर्णाद्वयानन्दमयात्मना सदा।
न देशकालाद्युचितप्रतीक्षा
त्वङ्मांसविट्पिण्डविसर्जनाय॥ ५५८॥

देहस्य मोक्षो नो मोक्षो न दण्डस्य कमण्डलोः।
अविद्याहृदयग्रन्थिमोक्षो मोक्षो यतस्ततः॥ ५५९॥

कुल्यायामथ नद्यां वा शिवक्षेत्रेऽपि चत्वरे।
पर्णं पतति चेत्तेन तरोः किं नु शुभाशुभम्॥ ५६०॥

पत्रस्य पुष्पस्य फलस्य नाशव-
द्देहेन्द्रियप्राणधियां विनाशः।
नैवात्मनः स्वस्य सदात्मकस्या-
नन्दाकृते वृंक्षवदास्त एषः॥ ५६१॥

प्रज्ञानघनइत्यात्मलक्षणं सत्यसूचकम्।
अनूद्यौपाधिकस्यैव कथयन्ति विनाशनम्॥ ५६२॥

अविनाशी वा अरेयमात्मेति श्रुतिरात्मनः।
प्रब्रवीत्यविनाशित्वं विनश्यत्सु विकारिषु॥ ५६३॥

पाषाणवृक्षतृणधान्यकटाम्बराद्या
दग्धा भवन्ति हि मृदेव यथा तथैव।
देहेन्द्रियासुमनआदिसमस्तदृश्यं
ज्ञानाग्निदग्धमुपयाति परात्मभावम्॥ ५६४॥

विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि।
तथैव सकलं दृश्यं ब्रह्मणि प्रविलीयते॥ ५६५॥

घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम्।
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम्॥ ५६६॥

क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले।
संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः॥ ५६७॥

एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम्।
ब्रह्मभावं प्रपद्यैष यतिर्नावर्तते पुनः ॥ ५६८ ॥

सदात्मैकत्वविज्ञानदग्धाविद्यादिवर्ष्मणः।
अमुष्य ब्रह्मभूतत्वाद्ब्रह्मणः कुत उद्भवः ॥ ५६९ ॥

मायाक्लृप्तौ बन्धमोक्षौ न स्तः स्वात्मनि वस्तुतः।
यथा रज्जौ निष्क्रियायां सर्पाभासविनिर्गमौ ॥ ५७० ॥

आवृतेः सदसत्त्वाभ्यां वक्तव्ये बन्धमोक्षणे।
नावृतिर्ब्रह्मणः काचिदन्याभावादनावृतम्।
यद्यस्त्यद्वैतहानिः स्याद्द्वैतं नो सहते श्रुतिः ॥ ५७१ ॥

बन्धश्च मोक्षश्च मृषैव मूढा
बुद्धेर्गुणं वस्तुनि कल्पयन्ति।
दृगावृतिं मेघकृतां यथा रवौ
यतोऽद्वयासङ्गचिदेकमक्षरम् ॥ ५७२ ॥

अस्तीति प्रत्ययो यश्च यश्च नास्तीति वस्तुनि।
बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुनः ॥ ५७३ ॥

अतस्तौ मायया क्लृप्तौ बन्धमोक्षौ न चात्मनि।
निष्कले निष्क्रिये शान्ते निरवद्ये निरंजने।
अद्वितीये परेतत्त्वे व्योमवत्कल्पना कुतः ॥ ५७४ ॥

न निरोधो न चोत्पत्ति र्न बद्धो न च साधकः।
न मुमुक्षु र्नवै मुक्तः इत्येषा परमार्थता ॥ ५७५ ॥

सकलनिगमचूडास्वान्तसि॰ ह्य
परमिदमतिगुह्यं दर्शितं ते मयाद्य।
अपगतकलिदोषः कामनिर्मुक्तबुद्धि-
स्तदतुलमसकृत्त्वं भावयेदं मुमुक्षुः ॥ ५७६ ॥

इति श्रुत्वा गुरोर्वाक्यं प्रश्रयेण कृतानतिः।
स तेन समनुज्ञातो ययौ निर्मुक्तबन्धनः॥ ५७७॥

गुरुरेष सदानन्दसिन्धौ निर्मग्नमानसः।
पावयन्वसुधां सर्वां विचचार निरन्तरः॥ ५७८॥

इत्याचार्यस्य शिष्यस्य संवादेनात्मलक्षणम्।
निरूपितं मुमुक्षूणां सुखबोधोपपत्तये॥ ५७९॥

हितमिदमुपदेशमाद्रियन्तां
विहितनिरस्तसमस्तचित्तदोषाः।
भवसुखविमुखाः प्रशान्तचित्ताः
श्रुतिरसिका यतयो मुमुक्षवो ये॥ ५८०॥

संसाराध्वनि तापभानुकिरणप्रोद्भूतदाहव्यथा-
खिन्नानां जलकाङ्क्षया मरुभुवि भ्रान्त्या परिभ्राम्यताम्।
अत्यासन्नसुधाम्बुधिं सुखकरं ब्रह्माद्वयं दर्शय-
न्त्येषा शंकरभारती विजयते निर्वाणसंदायिनी॥ ५८१॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतःकृतौ विवेकचूडामणिः
श्रृंगगिरिजगद्गुरुश्रीचन्द्रशेखरभारतीस्वाम्यनुगृहितव्याख्यासनाथः
समाप्तः॥

॥ ओम् ॥

# श्लोकानुक्रमणिका

**॥ इति श्रीविवेकचूडामणिश्लोकानां अनुक्रमणिका समाप्ता**

